## शेषतात्पर्यचन्द्रिका

वैराग्यपादीयाधिकरणीयपूर्वपक्षयुक्तिसङ्ग्रहः

अत्र पूर्वपक्षसङ्ग्राहकम्—

**स्वाभाविकान्यथानामसहभावा[1]न्यथोक्तयः ।**
**अविशेषाविशेषौ च सहभावो विमिश्रता ॥**
**विरुद्धोक्तिस्सहस्थानं वैयर्थ्यं चान्यथागतिः ।**

इत्यनुव्याख्यानम् ॥

भाष्यन्यायविवरणयोरैककण्ठ्यम्

तत्र स्वाभाविकत्वन्यायविवरणं

**भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनमिति वचनात् स्वाभाविकमरणमेव मुक्तिरिति न मन्तव्यम्**

इत्यन्तं न भाष्योक्तपूर्वपक्षोपयोगि। मरणस्यौपाधिकत्वेऽपि कर्मावसाननिमित्तत्वेन वैराग्यस्य व्यतिरेकव्यभिचारसिद्धावननुष्ठेयत्वसिद्धेरित्याशङ्क्य नात्रौपाधिकत्वाभावः स्वाभाविकत्वम् । किन्त्ववर्जनीयत्वरूपं नियतत्वम् । ततश्चेदं भाष्यस्यैवोपपादकमित्यभिसन्धिः प्रकृतप्रमेयेण सह परमप्रकृतप्रमेयमुपसंहरति **यतो मरणमेव मोक्षः** इत्यादिना ॥

वैराग्यपादीयाधिकरणीयसिद्धान्तन्यायसङ्ग्रहः

भाष्यन्यायविरणैककण्ठ्यञ्च

अत्र सिद्धान्तन्यायसङ्ग्राहक—

**............गुणाधिक्यार्थतोभवौ ।**
**उपपत्तिर्द्विरूपत्वमाधिक्यमनुरूपता ॥**

---

[1] सहाभाव.

शेषतात्पर्यचन्द्रिका

योग्यता बलवत्त्वञ्च विभागः कारणाभवः ।

क्लृप्तिरन्यागतिश्चैव—

इत्यनुव्याख्यानीयगुणाधिक्यशब्दविवक्षितगुणाधिक्योपदेशरूपन्यायविवरणं **मुक्तिसाधनत्वेन ज्ञानादिगुणाधिक्योपदेशात् । मरणे भूतवियोगस्यैवा भावात् । भूतयुक्तः परं लोकं इमं लोकञ्च गच्छति इत्यादिवचनाच्च ।** इत्यन्तं कथमिह गमयितव्यम् । अनपेक्षितमेव वैराग्यादिसाधनमिति पूर्वपक्षस्य भूतपरिष्वङ्गकथनस्याप्रतिक्षेपकत्वात् कथं सूत्रभाष्ये योजनीये इति शङ्कायां, मुक्तिसाधनत्वेन **द्रष्टव्यः श्रोतव्यः** इत्यादौ ज्ञानादिसाधननिवहरूपगुणा धिक्यस्य विधानादपेक्षितमेव साधनम्, अन्यथा श्रुत्या तद्विधानानुपपत्तेरिति आदौ न्यायविवरणस्थाद्यवाक्यं संयोज्य, तत्र विधानवैयर्थ्यशङ्कायां मरणे भूतवियोगस्यैवाभावान्मृतौ भूतनिवृत्तिनियतत्वं नास्तीति द्वितीयं वाक्यं सङ्गमय्य, तत्र हेतुत्वेन भाष्यं योज्यतामित्याह **अपेक्षितमेव मोक्षार्थं साधनम्** इत्यादिना । अथावशिष्टं विवरणस्थमन्तिमं वाक्यं चशब्दशिरस्कमन्ते योज्यमिति दर्शयति **भूतयुक्तः परं लोकम्** इति । अनेन सूत्रस्थं प्रश्न निरूपणपदं ज्ञानादिगुणाधिक्योपदेशरूपहेत्वन्तरस्योपलक्षणम् । तेन च भूतवियोगाभावोऽप्युपलक्षणीयः । न्यायमालायाञ्च गुणाधिक्यपदं तदुपदेशोप लक्षणमित्युक्तं भवति । एवमन्यत्रापि यथायोगमुपलक्ष्योपलक्षकभेदो ज्ञातव्यः ॥

**इति तदन्तराधिकरणम् ॥ १ ॥**

## अथ त्र्यात्मकत्वाधिकरणम् ॥ २ ॥

## ॥ ॐ त्र्यात्मकत्वात्तु भूयस्त्वात् ॐ ॥ २ ॥

**अपशब्दस्तु त्र्यात्मकत्वाद्युज्यते। भूयस्त्वाच्चापाम्। "तापापनोदो भूयस्त्वमम्भसो वृत्तयास्त्विमाः" इति भागवते ॥ २ ॥**

### तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनवैराग्यार्थं जीवस्य समस्तभूतसम्परिष्वक्तस्य गतिसमर्थनादस्ति शास्त्रादिसङ्गतिः । यदुक्तं न मरणमात्रेण मोक्ष इति, समस्तभूतानां जीवेन सह गतावसाधितायां तदयुक्तं स्यात् । अतस्सा समर्थनीयैव । प्रकृतभूतान्येव विषयः । किं सर्वाणि जीवं परिष्वज्य गच्छन्त्युत नेति सन्देहः । **भूतसम्परिष्वक्तो रंहति** इति साधारणवचनं सन्देहबीजम् ॥

पूर्वपक्षः

आप एव गच्छन्ति न सर्वाणीति पूर्वः पक्षः । **आपः पुरुषवचसो भवन्ति** इति प्रश्नव्याख्यानयोरपामेव गतिश्रवणात् । अन्यथा भूतानीति सामान्यप्रयोगस्स्यात्, नत्वाप इति विशेषप्रयोगः । अतो मृतस्य समस्तभूतपरिष्वङ्गाभावादेकभूतस्य च शरीरानारम्भकत्वान्मरण एव मोक्षसिद्धेर्व्यर्थं वैराग्यादीति ॥

सिद्धान्तः

एवं प्राप्ते सिध्दान्तयत्सूत्रमुपन्यस्य व्याचष्टे **त्र्यात्मकत्वादिति।** सर्वभूतपरिष्वक्त एव जीवो गच्छति नाद्भिरेव । नचैवं विशेषनामविरोधः ।

### तत्त्वप्रकाशिका

अपां क्षितिसलिलानलात्मकत्वेन तद्ग्रहणेनान्यभूतानामपि प्राप्तेः, "**तासां त्रिवृतं त्रिवृतमेकैकामकरोत्**" "**मिश्राणि हि भूतानि**" इति श्रुतेरितिभावः। ननु यद्यापो भूतत्रयात्मिकाः कथं तर्हि तत्रापूशब्द इत्यत आह **भूयस्त्वादिति**। अप्शब्दो युज्यत इति सम्बन्धः। मिश्रत्वेऽपि तत्तद्भूतस्याधिक्येन तत्तद्व्यवहार इति भावः। नन्वपामिव भूतान्तरस्यापि सर्वभूतात्मकत्वादपां ग्रहणे को विशेषहेतुरित्यतो वा आह **भूयस्त्वादिति**। सर्वदेहेषु सम्भूय भूतेजसोरप्यपां भूयस्त्वात्तद्ग्रहणं युज्यत इति भावः। अपां भूयस्त्वमेव कुत इत्यत आह **तापेति**। यथा च सम्भूय शरीरेष्वपां भूयस्त्वं तथोक्तमध्यायान्ते। अतोऽस्ति समस्तभूतानां जीवं परिष्वज्य गमनमिति स्वाभाविकमरणेन मुक्त्यभावादनुष्ठेयं वैराग्यादीति सिद्धम् ॥ २ ॥

—:o:—

## शेषतात्पर्यचन्द्रिका

## ॥ ॐ त्र्यात्मकत्त्वात्तु भूयस्त्वात् ॐ ॥ २ ॥

सङ्गतिः

पादैक्यप्रतिपादनप्रस्तावोक्तरीत्या पूर्वोक्तभूतसम्बन्धस्याप्रयोजकत्वशङ्कात्र समाधीयत इति वा, पूर्वोक्तस्य भूतसहभावेन गमनस्य विशेषविचाराद्वा अनन्तरसङ्गतिपेटिकासङ्गती द्रष्टव्ये ॥

पूर्वपक्षः

तत्र न सर्वैर्भूतैः सह जीवो गच्छति प्रमाणाभावात् । न च **आपः पुरुषवचसः** इति प्रमाणम् । तत्रैकभूतस्यैव सहगमनप्रतीतेः । न च **प्रोद्गातॄणां चमसः** इत्यत्रेव प्रत्ययार्थस्वारस्याय प्रातिपदिकलक्षणा भविष्यतीति वाच्यम् । अप्शब्दस्य नित्यं दारादिशब्दवद्बहुवचनान्तत्वेन प्रातिपदिकार्थस्यैकत्वेऽपि युक्तत्वात् । न चाप्शब्द एव भूतवाचकः । नियामकाभावात् । विशेषनामत्वविरोधाच्चेति पूर्वः पक्षः ॥

सिद्धान्तः

सिद्धान्तस्तु—सर्वैर्गच्छति । **आपः पुरुषवचसः** इत्येव तत्र प्रमाणम् । अप्शब्दस्य भूतशब्दवत् सर्वभूतपरत्वात् । न चात्र नियामकाभावः । अपां त्र्यात्मकत्वात् । तथा हि—अप्शब्दः क्वचित् शक्त्या वाचकः शब्दत्वादेव । क्वास्य शक्तिरिति प्रश्ने पुरोवर्तिनं प्रतिनिर्दिश्य अत्रेति[1] प्रतिवक्तव्यम् । तत्र पुरोवर्तिनस्त्र्यात्मकत्वात् तत्स्वरूपपर्यालोचनया अयमप्शब्दस्त्र्या-

[1] अत्रा

## शेषतात्पर्यचन्द्रिका

त्मिकानामेवापां वाचक इति सिद्ध्यति। न चात्रिवृत्कृतासु सूक्ष्मास्वप्सु शक्तिर्गृह्यतामिति वाच्यम्। प्राथमिकशक्तिग्रहकाले तासामनुपस्थितेरिति। प्रोद्गातृ[1]शब्द इव लक्षणैव कुतो न स्वीक्रियत[2] इति चेन्न। अन्योन्याश्रयात्। संस्कृतदर्भसमुदाये प्रस्तरशब्दवदप्शब्दोऽपि पृथिव्यादिसमुदाये वर्तते। सूक्ष्माणां त्वपां रूपसूक्ष्माणां रूपतन्मात्राशब्द इव अप्सूक्ष्मशब्द एव वाचकः। अप्शब्दवाच्यानामपां त्र्यात्मकत्वाद्वाक्यार्थस्वरूपपर्यालोचनया अप्शब्देनैव सर्वेषां भूतानां गतिप्राप्तेः सामान्यनामानुक्तिर्विशेषनामकथनं चासिद्धमिति विवरणं योज्यम्। टीकायां प्राणगतिनये विशेषप्रमाणाभावेन पूर्वपक्षोक्तिस्तु नाप्शब्दस्य भूतत्रयवाचकत्वाभावाभिप्राया। उक्तरीत्या तस्य भूतसमुदाये शक्तत्वात्। किन्तु उपपादननैरपेक्ष्याभावाभिप्राया। सर्वसम्प्रतिपत्त्यभावाभिप्राया वा। अन्यथा तदन्तरप्रतिपत्त्यर्थं भूतसम्बन्धोऽङ्गीकर्तव्य इत्युक्तौ एकस्यानारम्भकत्वान्यथानुपपत्तिरूपविशेषप्रमाणस्य, त्र्यात्मकत्वप्रमाणस्य चोक्त्या पूर्वपक्षानुत्थानप्रसङ्गः। अत एव चोत्तराधिकरणस्थं **आर्थिककल्पनायाश्च विशेषप्रमाणमन्तरेण असम्भवात्** इति टीकावाक्यमप्युपपादननिरपेक्षप्रमाणान्तरसद्भाव एव वाक्यार्थस्वरूपपर्यालोचनया वाच्यवाचकभावादिकल्पना घटते, नान्यथेत्येवमभिप्रायं नेयम्। यद्वा अप्शब्दोऽम्मात्रवाचको न भूतसमुदायस्य। तथापि सर्वभूतानां गमनमङ्गीकार्यम्। न च प्रतिवचनेऽम्मात्रवाचकाप्शब्दविरोधः। स्यादप्ययं विरोधो यद्यापो न भूतान्तरमिश्रिताः। न चैवम्। **तासां त्रिवृतम्**

[1] उद्गातृ [2] स्वीकृता

शेषतात्पर्यचन्द्रिका

इत्यादि श्रुतेः। तथा चानुषङ्गिकी भूतानां गतिरनिवार्येति नाप्शब्दविरोध इति न किञ्चिदनुपपन्नमिति ॥

सूत्राक्षरार्थः

सूत्राक्षरार्थस्तु—तुः आवर्तते। द्वितीयश्चार्थः। अत्र तृतीयेन सम्बध्यते। अपां त्र्यात्मकत्वात् विशेषनामविरोधो नास्ति भूयस्त्वाच्चेति।

एतदधिकरणस्य पूर्वेणागतार्थता

विश्वजिदादेरफलत्वसर्वफलत्वानध्यवसायैः पूर्वपक्षं, सफलत्वैकफलत्वस्वर्गफलत्वैर्यथाक्रमं सिद्धान्तञ्च प्रापयद्भिः **'चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत, न ह्यशब्दं प्रतीयते' 'तत्सर्वार्थमनादेशात्' 'सः स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्'** इति त्रिभिश्चतुर्थतार्तीयनयैः क्रमेण स्वर्गफलत्वसाधनवत् जीवेऽपि गमनदशायां भूतासहभावैकभूतसहभावादिना भूतसहभावानेकभूतसहभावादिना च यथाक्रमं पूर्वपक्षं सिद्धान्तं च प्रापयद्भ्यां रंहतित्र्यात्मकत्वनयाभ्यां भूतत्रयसहभावसाधनोपपत्तिः। अत्र च द्वितीयनयेन प्रथमस्य वैयर्थ्यशङ्का तु तत्र तृतीयेन नयेन द्वितीयस्योभाभ्यां च प्रथमस्येव कर्तुमयुक्ता। **तदोत्थानविसर्जने** इति तार्तीयनयेऽधिकाशङ्कायाः पुनरुत्थानवदुत्तरोत्तरनये पुनरुत्थानसम्भवान्न तद्वदेव पूर्वपक्षानुत्थितिः शङ्कनीया ॥

टीकाक्षरार्थस्य न्यायविवरणमूलकत्वम्

टीकाक्षरार्थस्तु—**अन्यथानामेति** द्वितीयाधिकरणन्यायस्य **"इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति"** इत्यत्र भूतानीति सामान्य-

शेषतात्पर्यचन्द्रिका

**नामानुक्त्वा आप इति विशेषनामकथनादपामेव सहगतिरिति न वाच्यम्** इति विवरणम् । तत्रान्तिमेन पूर्वपक्षफलवाक्येनान्वयेन अन्यथा-नामेत्येतद्द्वेधा व्याख्येयमित्यभिप्रेत्य, **भूतानीति सामान्यनामानुक्त्वा विशेषनामकथनादिति** तर्कगर्भं वाक्यद्वयं प्रवृत्तमिति वाभिप्रेत्य, परमप्रकृता-क्षेपसिध्द्यर्थमेकभूतस्य शरीरानारम्भकत्वादित्यध्याहारं चाभिप्रेत्य पूर्वपक्षमाह **आप एव गच्छन्तीति । न चैवं विशेषनामविरोध इति** । भूतानीति सामान्यनामप्रयोगापत्तिश्चेत्यपि द्रष्टव्यम् । **त्र्यात्मकत्वादपामर्थतः सर्व-भूतानां गतिप्राप्तेः** इत्यन्ते, भवप्राप्तियोग्यतया प्रकृतत्वाच्च सर्वभूतानामित्य-भिप्रेत्य प्रवृत्तेऽर्थतोभवरूपसिद्धान्तन्यायविवरणे **त्र्यात्मकत्वादपाम्** इत्येतत् प्रमाणोक्तिपूर्वकं विवृण्वन् त्र्यात्मकत्वं व्याचष्टे **अपां क्षितीति** । प्रसङ्गद्वय निराकरणपूर्वकं प्रकारान्तरेण व्याचष्टे **नन्वपामिवेति** । ननु पार्थिवदेहे पृथिव्या अधिकत्वात् कथमपामाधिक्यमित्यतः पार्थिवतैजसाप्यदेहेषु भाग विचारेऽपां षड्भागाः, पृथिव्याश्चत्वारो भागाः, तेजसो द्वौ भागावित्युपपादितं द्वितीयाध्यायान्त इत्याह **सम्भूयेति**[1] ॥

इति त्र्यात्मकत्वाधिकरणम् ॥ २ ॥

---

[1] ययाचेति

## अथ प्राणगत्यधिकरणम् ॥ ३ ॥

### ॥ ॐ प्राणगतेश्च ॐ ॥ ३ ॥

"यत्र वाव भूतानि तत्र करणानि नित्यानि ह वा एतानि भूतानि च करणानि च[1]। नैतानि कदाचिद्वियुज्यन्ते न च विलीयन्ते" इति भाल्लवेयश्रुतेः प्राणगतेर्भूतान्यपि सन्तीति सिध्दम् ॥ ३ ॥

### तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र पुनः परमात्मप्राप्तिसाधनवैराग्यसिध्यर्थं जीवस्य भूतैः सह गतिसमर्थनादस्तिशास्त्रादिसङ्गतिः। भूतानां जीवेन सह गत्यसमर्थने मरणस्यैव मुक्तित्वप्राप्तेः सा समर्थनीया। प्रकृतभूतान्येव विषयः। किं जीवेन सह गच्छन्ति न वेति सन्देहः। उभयथासम्भवः सन्देहबीजम् ॥

पूर्वपक्षः

न गच्छन्तीति पूर्वः पक्षः। भूतानि जीवेन सह गच्छन्तीति विशेषप्रमाणाभावात्। न च प्रश्नव्याख्याने विशेषप्रमाणम्। तयोरपि भूतैः सह गमनस्यानुक्तत्वात्। आर्थिककल्पनायाश्च विशेषप्रमाणमन्तरेणासम्भवात्। एवञ्च स्वाभाविकमरणमेव मुक्तिरिति कृतं वैराग्यादिभिरिति प्राप्ते—

सिद्धान्तः

सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे प्राणेति। गच्छन्त्येव भूतानि सह जीवेन। विशेषप्रमाणस्यानुमानस्य विद्यमानत्वात्। अस्ति तावद्भूताना

[1] भूतानि करणानि

तत्त्वप्रकाशिका

मिन्द्रियाणाञ्चाविनाभावः । "यत्र वाव भूतानि" इति श्रुतेः । प्राणानाञ्चास्ति जीवेन सह गतिः । "करणैर्वात्र न वियुज्यते" इति श्रुतेः । अतः प्राणगतेस्तदविनाभूतभूतानाञ्चास्ति जीवेन सह गतिरिति ज्ञायत इति भावः । चशब्दो भूताविनाभावार्थः । अत्रैवं प्रयोगो भवति— भूतानि जीवेन सह गमनवन्ति । तत्सहगन्तृप्राणाविनाभूतत्वात् । यद्येन सहगन्त्रविनाभूतं तत्तेन सह गच्छति । यथा राजा सहगन्त्रमात्याविनाभूत भृत्य इति । अतः समस्तभूतानां जीवपरिष्वङ्गसिद्धेः न मरणमात्रेण मोक्षः । अतोऽपेक्षितं वैराग्यादीति सिद्धम् ॥ ३ ॥

—:o:—

ठति अपीति

## शेषतात्पर्यचन्द्रिका

## ॥ ॐ प्राणगतेश्च ॐ ॥ ३ ॥

सङ्गतिः

पूर्वोक्तस्य भूतसम्बन्धस्य मुक्तित्वाभावसाधकस्य हेतोःसन्दिग्धासिद्ध्युद्धारेण प्रवृत्तेरनन्तरसङ्गतिः पेटिकासङ्गतिश्च ॥

संशयः

अत्र किं सर्वाण्यपि भूतानि जीवेन सह गच्छन्तीति निश्चेतुं न शक्यान्युत शक्यानीति । तदर्थं तन्निश्चये स्पष्टं प्रमाणं नास्त्युतास्तीति । तदर्थं किमिन्द्रियाणां भूतैः सह व्याप्तिर्नास्त्युतास्तीति चिन्ता ॥

पूर्वपक्षः

तत्र भूतानि गच्छन्तीति निश्चेतुमशक्यमेव । विशेषप्रमाणाभावात् । नहि **आपः पुरुषवचसो भवन्ति** इति वचनमात्रेण विना विशेषप्रमाणं निश्चेतुं शक्यम् । नच अपूर्ववाचकपदादिरूपविशेषप्रमाणाभावेऽपि विमतो यागः किञ्चिदन्तराधाय स्वसाध्यं साधयति, साक्षादसाधनत्वे सति साधनत्वात्, चक्षुरादिवदित्याद्यनुमानैरिव तदुपपत्तिः । तद्वदिह लिङ्गाभावात् । इन्द्रियसम्बन्ध एव लिङ्गमितिचेन्न । स्वरूपासिद्धिव्याप्त्यसिध्दिभ्यां तदनुपपत्तेरिति पूर्वः पक्षः ॥

सिध्दान्तः

सिध्दान्तस्तु—शब्दरूपविशेषप्रमाणाभावेऽप्यपूर्व इवानुमानस्य सम्भवाद्युज्यते तन्निश्चयः । विमतो जीवो भूतसम्बन्धवान् प्राणसम्बन्धवत्त्वात

### शेषतात्पर्यचन्द्रिका

जीवत्संसारिजीववदिति प्रयोगसम्भवात् । विपक्षे कार्यकारणभावानुपपत्तिर्वा, व्यापकनिवृत्त्या व्याप्यनिवृत्तेरवश्यंभावाद्धेतूच्छित्तिर्वा बाधिका । व्याप्य व्यापकभावादिग्राहकप्रमाणं भाष्ये व्यक्तम् । या तु टीकायां **भूतानि जीवेन सह गमनवन्ति तत्सहगन्तृप्राणाविनाभूतत्वात्** इत्यादिना प्राणानां व्यापकत्वोक्तिः सा **यत्र वाव भूतानि** इत्यादिभाष्योदाहृतश्रुतौ समव्याप्त्यभिधानेन व्यापकत्वमस्तीत्यभिप्रेत्य, न तु व्याप्यत्वं नास्तीति । अत एव **अत्रैवं प्रयोगो भवति** इत्याह । अन्यथा एवं प्रयोग इत्येव अवक्ष्यत् इति ॥

#### न्यायविवरणवाक्ययोजना

टीकाक्षरार्थस्तु — सहभावान्यथोक्तिशब्दविवक्षितः सहगमनानुक्तिरूपस्तृतीयाधिकरणन्यायः, यद्वा सद्भाव एवैतदधिकरणपूर्वपक्षन्यायः, स चानुक्त्युपलक्षक इत्यभिप्रेत्य प्रवृत्तं विवरणं **न च भूतानि गच्छन्तीति सहभावानुक्तेस्तदभावः** इति । एतत्कथमत्र सङ्गमयितव्यम् ? कथञ्च **भूतानि गच्छन्ति** इति सहभावोक्त्यभिनयः ? । कश्चात्र तच्छब्दपरामृष्ट इत्यतः तदभाव इत्यावर्तनीयम् । यतोऽत्र जीवेन सहेति चाध्याहर्तव्यम् । भूतानां जीवेन सह गमनाभावः कुतः ? यतस्तदभावे विशेषप्रमाणाभावः । कुतो विशेषप्रमाणाभावः । यतः प्रश्नपरिहारयोर्भूतानि जीवेन सह गच्छन्तीति सहगमनानुक्तिरतो विशेषप्रमाणाभावः । अतो भूतानां सहगमनाभाव इति योजनीयमित्यभिप्रेत्य व्याचष्टे **भूतानि जीवेन सहे**

शेषतात्पर्यचन्द्रिका

त्यादिना। **उपपत्तिः** इति सिध्दान्तन्यायविवरणं—**प्राणगतेरुपपत्तित उक्तत्वात्**। अत्र षष्ठ्यर्थे तसिः। प्राणगतिरूपोपपत्तेः भूतगमनलिङ्गस्य **करणैर्वाव न वियुज्यते** इति श्रुतौ उक्तत्वादिति योजनेत्याह **अतःप्राणगतेरित्यादिना**। नन्वत्र बहुसूत्रैरेकमधिकरणमित्येव न्याय्यम्। चशब्दस्वार स्यात्। अन्यथा स व्यर्थः। अत एव **परै**रेवमेव व्याख्यातं चेत्यत आह **चशब्द** इति। परव्याख्यानन्तु न युक्तिसहमिति भावः। तच्चाग्रे प्रदर्शयिष्याम इति ॥

**॥ इति प्राणगत्यधिकरणम् ॥ ३ ॥**

—:o:—

ठति अपांत

## ॥ अथ अग्न्याद्यधिकरणम् ॥ ४ ॥

## ॥ ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ ॥ ४ ॥

"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः" इत्यादि श्रुतेः न प्राणानां जीवेन सह गतिरिति चेन्न । भागतोऽग्न्यादिप्राप्तेः । "पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु । अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् । पुनश्शरीरसम्प्राप्तौ तमेवानुविशन्ति च" इति ब्राह्मे । ब्रह्माण्डे च "मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च । भागतो भागतस्त्वेनमनुगच्छन्ति सर्वशः" इति ॥

---

### तत्त्वप्रकाशिका

#### सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनवैराग्याय प्राणानां जीवेन सह गतिसमर्थनादस्ति शास्त्रादिसङ्गतिः । प्राणगत्या समर्थिता भूतगतिः प्राणगत्यभावे न स्यात् अतस्सा समर्थनीया । प्रकृतप्राणा एव विषयः । जीवेन सह गच्छन्ति नवेति सन्देहः । अनिर्णयः सन्देहबीजम् ॥

#### पूर्वपक्षः

सूत्र एव पूर्वपक्षस्योक्तत्वात् तदुपन्यस्य पूर्वपक्षांशं तावद्व्याचष्टे अग्नीति । न प्राणाः जीवेन सह गच्छन्ति, **"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रमसं दिशः श्रोत्रं"** इति प्राणानामग्न्यादीन् प्रति गतिश्रुतेः । तथा च प्राणानां जीवेन सह गत्यभावे भूतानामपि तदभावान्मरणमेव मोक्षोऽतस्साधनवैयर्थ्यमिति भावः ॥

### तत्त्वप्रकाशिका

सिद्धान्तः

सिद्धान्तांशं व्याचष्टे **नेति**। नैतच्छ्रुतिबलेन प्राणानां जीवेनासहगतिर्वक्तव्या। प्राणानां भागेनाग्न्यादीन् प्रति गतेर्विद्यमानत्वेन श्रुतेस्तद्विषयत्वादिति भावः। कुतोऽयं विशेष इत्यत आह **पुरुषस्येति**। एवं प्रतिमरणं भागापगमे कालतस्सर्वापगमस्स्यात्, तथा च सर्वभूतापगम इत्यत आह **पुनरिति**। ननु भागतोऽग्न्यादीन् प्रति गच्छद्भिः प्राणैः सह भूतानां गतिरस्ति न वा। अस्ति चेन्न जीवेन सहगतिः। न चेदविनाभावाभाव इत्यत आह **ब्रह्माण्डे चेति**। अनेन **भूतानां विनिवृत्तिरिति** वाक्यं च व्याख्यातं भवति। अतोऽस्ति प्राणानां जीवेन सहगतिः। ततो भूतानामपीति न मरणमेव मोक्षोऽतोनुष्ठेयं साधनमिति सिद्धम्॥

---

## शेषतात्पर्यचन्द्रिका

# ॥ ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ ॥ ४ ॥

सङ्गतिः

अत्र यदानेकभूतसम्बन्धेन शरीरान्तरारम्भस्यावर्जनीयतया वैराग्य मावश्यकम्, तदा किमु प्राणसम्बन्धेनेति प्रतिपादनाद्वा पूर्वोक्तानुमानेऽसिद्धि परिहाराद्वानन्तरसङ्गतिः ॥

संशयः

प्राणा जीवेन सह न गच्छन्ति गच्छन्ति वा। तदर्थं **अग्निं वागप्येति** इत्यादिश्रुतिर्निरवकाशोत सावकाशेति चिन्ता ॥

पूर्वपक्षः

न गच्छन्तीति पूर्वः पक्षः। प्रमाणाभावात्। **करणैर्वाव न वियुज्यते** इत्यस्ति प्रमाणमिति चेन्न। **मृतस्याग्निं वागप्येति** इति श्रुतिविरोधेन तस्य जीवद्विषयत्वोपपत्तेः। मृतस्येति विशेषितश्रुतेरर्थान्तरेऽवकाशाभावात्। न चास्येतिश्रवणात् पुरुषविशेषविषयैषा भविष्यतीति वाच्यम्। **तत्सामान्यादितरेषु तथात्वम्** इति सर्वपुरुषे तथात्वस्यावर्जनीयत्वात्। पुरुषविशेषं प्रति वैराग्यवैयर्थ्यापत्तेश्चेति ॥

सिद्धान्तः

सिद्धान्तस्तु—**करणैर्वाव न वियुज्यत** इति श्रुतेः प्राणा गच्छन्त्येव। न च श्रुत्यन्तरविरोधः। तस्य भागविषयत्वेन सावकाशत्वात्। न च श्रुत्यन्तरमपि जीवद्विषयतया सावकाशम्। प्रकरणविरोधात्। मृतस्य वागग्निं गच्छतीत्यस्य एकदेशगमनेऽप्युपपत्तेर्न श्रुतिविरोधोऽत्र शङ्कनीय इति ॥

## शेषतात्पर्यचन्द्रिका

### टीकैकदेशस्य न्यायविवरणमूलकत्वम्

टीकाक्षरार्थस्तु-चतुर्थेऽप्यधिकरणे सहभावान्यथोक्तिर्वाऽन्यथोक्तिरेव वा पूर्वपक्षन्यायः सम्बन्धिसाध्याध्याहारेण द्रष्टव्य इत्यभिप्रेत्य प्रवृत्ते 'न च अग्निं वागप्येतीत्याद्यन्यथोक्तेः प्राणानां च न सहगतिः' इति विरणेऽन्यथोक्तिशब्दं विवृणोति अग्न्यादीन् प्रति गतिश्रुतेरिति। द्विरूपत्वमित्युक्तसिध्दान्तन्यायविवरणस्य 'द्विरूपत्वात्प्राणानाम्' इत्यस्य तात्पर्यमाह प्राणानां भागेन अग्न्यादीन् प्रतीति ॥

॥ इति अग्न्याद्यधिकरणम् ॥ ४ ॥

—:o:—

॥ अथ प्रथमाधिकरणम् ॥ ५ ॥

## ॥ ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ॥ ५ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति इति प्रथमाग्नौ श्रूयते । न भूतानि जुह्वतीति । अतो नेति चेन्न । ता एव प्रस्तुता आपः श्रद्धारूपेण हूयन्ते । इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्युपसंहारोपपत्तेः ॥ ५ ॥

---

### तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र पुनर्भगवत्प्राप्तिसाधनवैराग्याय भूतानां जीवेन सहगतिसमर्थनादस्तिशास्त्रादिसङ्गतिः । भूतानां जीवेन सह गत्यभावे मरणस्योक्तो मोक्षत्वाभावो न स्यात् । अतस्तत्समर्थनमावश्यकम् । भूतान्येव विषयः । किं जीवेन सह गच्छन्ति नवेति सन्देहः । उभयविधवस्तुदर्शनं सन्देहबीजम् ॥

पूर्वपक्षः

पूर्वपक्षस्य सूत्र एवोक्तत्वात् तत्पठित्वा पूर्वपक्षांशं तावद्व्याचष्टे प्रथम इति । न जीवेन सहगतिर्भूतानां । तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति इति उत्क्रान्तस्य श्रद्धयेष्टवतः श्रद्धासहितस्यैव द्युाख्ये प्रथमाग्नौ होमश्रवणात् । भूतानामपि सहगतावुपक्रमे तथोक्तिप्रसङ्गात् । अतो भूतानां सह गत्यभावेन मरणस्यैव मोक्षत्वात् व्यर्थं वैराग्यादीति भावः ॥

## तत्त्वप्रकाशिका

सिद्धान्तः

सिध्दान्तांशं व्याचष्टे नेति। प्रथमाग्नौ भूतसहितस्य होमाश्रवणान्न-भूतानामसहगतिः कल्पनीया। यतः प्रथमाग्नावप्यापो होम्यतया श्रूयन्ते श्रद्धाशब्दार्थरूपतया। अयं खलु शब्दोऽजहल्लक्षणया श्रद्धयाऽद्भिश्च युक्तं जीवमाह। तत्कुतः। उपसंहारेऽपां जीवेन सहगतिश्रवणात्। तदनु-सारेणैवमुपक्रमार्थकल्पने तदुपपत्तेः। अन्यथा विरोधेन अप्रामाण्यप्रसङ्गा-दिति भावः। न च आगमनमात्रविषयत्वमुपसंहारस्य वाच्यम्। भूता-नि त्यजन्तीत्यनुक्त्वा **सोमो राजा सम्भवति** इत्यादिवत् **आपो भवन्ति** इति च अनुक्त्वा **आपः पुरुषवचस** इत्यनुवादात्॥

उपसंहारस्योपक्रमाद्बलीयस्त्वम्

तथाप्युपसंहारानुसारित्वमुपक्रमस्य कुतः? उपसंहारस्योपक्रमव्याख्या-नरूपत्वेन प्राबल्यात्। उपक्रमप्रामाण्योपपत्त्यर्थमुपसंहारानुसारित्वस्यावश्य-कत्वात्। व्याख्यानानुसारि[1]व्याख्येयस्य तदर्थे प्रामाण्यदर्शनात्। न च वाच्यमुपक्रमपूर्वकत्वादुपसंहारस्य न प्राबल्यमिति। स्वरूपेणोपसंहारस्योपक्रम-सापेक्षत्वेऽप्यर्थप्रतीतौ वैपरीत्यादिति॥

सिद्धान्तफलम्

अतो भूतानां जीवेन सह गतिसद्भावान्मरणस्य मुक्तित्वाभावेनापेक्षितं वैराग्यादिसाधनमिति सिद्धम्॥ ५॥

---

[1] व्याख्यानाननुसारि

शेषतात्पर्यचन्द्रिका

## ॥ ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ॥ ५ ॥

सङ्गतिः

यथा मृतस्याग्निं वागप्येति इत्येतत् करणैर्वा व इति श्रुतिविरोधान्न-स्वार्थपरं तथा आपः पुरुषवचसो भवन्ति इत्येतदपि श्रद्धां जुह्वति इति श्रुतिविरोधान्न स्वार्थपरमिति वा, तद्वदेव श्रध्दाया अपि भागतो गमनं स्यात्तच्च नेष्टमतः प्राणानामपि भागतो गमनं न स्यादितिवा, अद्भिरेव सह गमनाभावे किमु तदनुस्यूतभूतैरित्युत्थानाद्वानन्तरसङ्गतिः ॥

संशयः

अत्र भूतानां सहगमनं जीवेन नास्त्युतास्तीति, तदर्थमप्शब्दः श्रद्धालक्षको नवेति, तदर्थं बाधकमस्त्युत नास्तीति, तदर्थमुपक्रमो बलीयानुतोपसंहार इति चिन्ता ॥

पूर्वपक्षः

तत्र भूतसहगमनं न युक्तम्, प्रमाणाभावात्। आपः पुरुषवचसः इति प्रमाणमिति चेन्न। अप्शब्दस्य श्रद्धालक्षकत्वेन स्वार्थपरत्वाभावात्। न च विना बाधकं जघन्यवृत्त्याश्रयणमयुक्तमिति वाच्यम्। श्रद्धां जुह्वति इति वाक्यविरोधात्। श्रद्धाशब्द एव अब्लक्षणोऽस्त्विति[1] चेन्न। उपक्रमस्थत्वात्। तथात्वेऽपि कुतो न लक्षणेति चेन्न। अनुपसञ्जातविरोधित्वेन प्रबलत्वात्। उपसंहारस्योपक्रमपूर्वकत्वनियमाच्च। अत एवोपक्रमस्थवेद-

[1] अब्लक्षकोऽस्त्विति

## शेषतात्पर्यचन्द्रिका

शब्दानुसारादुच्चैष्ट्वादेर्वेदधर्मत्वम्। अन्यथा उपसंहारस्थऋक्पदस्वारस्याय वेदपदलक्षणा स्यादिति ऋग्धर्मत्वमेव स्यात्। न च 'वृष्टिं जुह्वति' 'अन्नं जुह्वति' 'रेतो जुह्वति' इतिवत् 'श्रद्धां जुह्वति' इत्यस्याप्यविरोधः। 'तस्या आहुत्यै वृष्टिस्संभवति' 'अन्नं संभवति' 'रेतस्संभवति' इत्यनन्तरं श्रुतत्वेनाविरोधेऽपि तस्या आहुत्यै श्रद्धा संभवतीत्युक्त्यभावेन श्रद्धायाः सहजत्वप्रतीत्या विरोधस्यावर्जनीयत्वात्। न चोभयवाक्यसामञ्जस्यायोभयोरपि सहभावोऽस्त्विति वाच्यम्। उभयोस्तुल्यबलत्वाभावात्। अन्यथा उच्चैष्ट्वादीनामुभयधर्मत्वापातात्। हीनबलप्रापितस्य भूतसहभावस्यैव इन्द्रोपस्थानाङ्गत्वकुशयूपादिवत् त्यागौचित्याच्च। अत एवाजहल्लक्षणया श्रद्धाशब्द उभयपरोऽस्त्विति निरस्तम्। उपसंहारं विना बाधकाभावेन तस्य चोक्तरीत्या दुर्बलस्य बाधकत्वायोगेन तत्स्वारस्याय जघन्यवृत्त्याश्रयणायोगात्। अत एवानुमानमपि प्रबलोपक्रमबाधितमिति पूर्वः पक्षः॥

### सिध्दान्तः

अत्रोच्यते। अप्शब्दे बाधकाभावेन जघन्यवृत्त्याश्रयणायोगाद्भुक्तगमनमङ्गीकार्यम्। न चोपक्रमविरोधो बाधक इति वाच्यम्। उपसंहारविरोधेनोपक्रमस्य लक्षणोपपत्तेः। प्रबलोऽसाविति चेत्, वैपरीत्यमेवोचितम्[1]। उपसंहारस्य व्याख्यानरूपत्वात्। न चात्र वैपरीत्यमर्हम्। व्याख्यानरूपस्य पश्चात्तनत्वनियमात्। न हि व्याख्यानमननुसृत्य प्रवर्तमानं व्याख्येयं प्रबलमित्युपगन्तुं युक्तम्। वेदधर्मत्वसिद्धान्तविरोधादुपक्रमस्य प्राबल्यमितिचेन्न। अभ्यासेन वेदधर्मत्वोपपत्तेः। अन्यथान्यत्रोक्तरीत्या अक्ताद्यधिकरणविरोधः

[1] चेन्न। यतो वैपरीत्यमेवोचितम्।

## शेषतात्पर्यचन्द्रिका

स्यात् । अत एव श्रद्धाशब्दो जहदजहल्लक्षणयोपसंहारस्थाप्शब्दविवक्षितभूतपरो गृह्यते। मुख्ये लक्षणाऽयोगेन जघन्योऽप्शब्द एव लाक्षणिकोऽस्त्विति चेत् । सोमाक्तादिपदेषु लक्षणाया घृतादिपदेषु मुख्यवृत्तेश्च स्वीकारात् । त्र्यात्मकत्वनये उपसंहारस्थोऽप्शब्दोऽपि लाक्षणिकः स्वीकृत इति चेत् । नहि त्र्यात्मकत्वनयेऽप्शब्दो लाक्षणिकः स्वीकृतः, किन्तु भूतत्रयवाचक एव । अपां त्रिवृत्कृतत्वात्, व्युत्पत्तिग्रहकाले केवलानामपामग्रहात् त्रिवृत्कृतानामेव ग्रहात्तत्रैव व्युत्पत्तिग्रहः प्राथमिकः। अतो भूतत्रयवाच्येवाप्शब्द इति हि त्र्यात्मकत्वनयरीतिः । अतो न सिद्धान्तेऽपि पूर्वपक्ष इव लक्षणास्वीकारः । अम्मात्रवाचकोऽप्शब्द इति पक्षेऽपि लक्षणां विना भूतान्तरस्यानुषङ्गिकी सिद्धिरिति न सिद्धान्ते कथञ्चिदपि लक्षणेति वैषम्यमिति ॥

### सूत्राक्षरार्थः

सूत्राक्षरार्थस्तु—उपक्रमे अपो जुह्वतीत्यश्रवणात्तस्य च प्रबलत्वादप्शब्दः श्रद्धालक्षक इति नापां सहगमने प्रमाणमस्तीति चेन्न । ताः उपसंहारे श्रुता आप एव प्रथमे उपक्रमे श्रद्धाशब्दलक्ष्यतया विवक्षिता इत्यङ्गीकार एवोपक्रमप्रामाण्योपपत्तेः । अन्यथा व्याख्यानरूपत्वेन प्रबलोपसंहारविरोधेनोपक्रमप्रामाण्यमनुपपन्नं स्यादिति ॥

### विशेषानुक्तिरूपपूर्वपक्षन्यायपरिशीलनम्

टीकाक्षरार्थस्तु—पञ्चमषष्ठसप्तमानां त्रयाणामप्यधिकरणानां पूर्वपक्षन्याया अविशेषविशेषौ च इत्यनुव्याख्याने सङ्गृहीताः । तत्र सह-

## शेषतात्पर्यचन्द्रिका

**भावान्यथोक्त्य** इत्यस्मात्पूर्ववाक्याद्बुध्या विविक्तस्योक्तिशब्दस्यानुवृत्तस्य द्विवचनविभक्तेः पूर्वं सम्बन्धेन, अविशेषशब्दस्य तदुक्त्युपलक्षणया च सिद्धस्याविशेषोक्तिरूपपञ्चमाधिकरणन्यायस्य नञ्व्यत्यासेन विशेषानुक्तिरूपन्याये पर्यवसानेन **प्रथमेऽश्रवणात्** इति सूत्रानुसारित्वं, सूत्रे साध्यानुक्तेः साध्याध्याहारश्च सूचयद्विवरणवाक्यं— **न च प्रथमतो भूतानि जुह्वतीति-विशेषानुक्तेर्भूतानामसहगतिः** इति । तच्च तत्रानुक्तिमात्रस्य सहगमनाभावासाधकत्वात्तर्कपरतया योज्यमित्याह **भूतानामपि सहगतावुपक्रमेऽपि तथोक्तिप्रसङ्गादिति** ॥

### आधिक्यरूपसैद्धान्तिकन्यायपरिशीलनम्

**भूतानि जुह्वति** इति विशेषोक्तेरभावेन न भूतानां सहगतिरिति वदन् प्रष्टव्यः, प्रथमे विशेषोक्तिरुपसंहारे विशेषोक्त्यभावे निर्णायिका स्यादुत-तद्भाव एवेति । नाद्यः । उपसंहारस्य भूतानि जुह्वतीत्याद्युपक्रमादपि प्राबल्येन तस्य तद्विरुद्धेऽर्थे निर्णायकत्वानुपपत्तेः, द्वितीये उपसंहारे विशेषोक्तेरेव निर्णायकत्वप्राप्तेः प्रथमतः श्रवणस्याप्रयोजकत्वं स्वयमेव सम्पादितमिति, तथा श्रवणेऽपि निर्णायकत्वमुपसंहारस्यवेति, **आपः पुरुष-वचसः** इत्युपसंहारेण **श्रद्धां जुह्वति** इति वचनस्यापि श्रद्धाशब्दलक्षितभूत-विषयत्वोपपत्त्या आप एवार्थ इति प्राप्तेः, प्रथमे अश्रवणमसिद्धमित्यभिप्रेत्य प्रवृत्तं वा, आधिक्यमित्युक्तसैद्धान्तिकन्यायविवरणं **'भूतानि जुह्वति'** **इत्युपक्रमादपि 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति'**

शेषतात्पर्यचन्द्रिका

इत्युपसंहारस्याधिक्यात् तदनुसारेणोपक्रमोक्तश्रद्धाशब्दस्यापि ता एवार्थ इत्यापत्तेः, उपक्रमविरोधेनोपसंहारानुपपत्तेः, उपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमङ्गीकर्तव्यम् । व्याख्यानस्य पश्चात्तनत्वनियमात् । उपक्रमानुसारित्वनियमेऽप्युपसंहारस्योपसंहारेणैवोपक्रमार्थो ज्ञायते इति । तत्र इत्यापत्तेः इत्यन्तं तात्पर्यतो व्याचष्टे उपसंहारेऽपाम् इत्यादिना। तदुपपत्तेरिति। उपसंहारत्वोपपत्तेरित्यर्थः । अन्यथेति । उपसंहारानुसारेण उपक्रमस्यार्थकल्पनाभावे तस्य तदुपसंहारत्वाभावरूपाप्रामाण्यप्रसङ्गादित्यर्थः । यद्वा तदुपपत्तेः उपक्रमप्रामाण्योपपत्तेः । उपसंहारानुसारेणोपक्रमस्यार्थकल्पनाभाव उपक्रमस्याप्रामाण्यप्रसङ्गादित्यर्थः ॥

उपक्रमस्य उपसंहारानुसारित्वनियमः

नन्वथाप्युपसंहारानुसारित्वमुपक्रमस्य कुत इति चेत् । किमत्रोपसंहारस्याधिक्यमङ्गीकृत्य विषयभेदान्नोपसंहारानुसार इति शङ्क्यते, उत प्राबल्यमेवानङ्गीकृत्येति विकल्प्य आद्यपक्षप्रतिक्षेपाय 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्युपसंहारोपपत्तेः इति सौत्रान्त्यपदव्याख्यानभाष्यं व्यतिरेकमुखेन विवृण्वत् उपक्रमविरोधेनोपसंहारानुपपत्तेः इति न्यायविवरणवाक्यम् । अनयोस्तावद्व्याख्यानव्याख्येयभावः सुप्रसिद्ध एव । स चैकार्थ्यनियतः । तथा च तयोरैकार्थ्याभावरूपविरोधे उपसंहारत्वमेवानुपपन्नम् । एवमुपक्रमत्वमप्यनुपपन्नम् । न हि वाजपेयमुपक्रम्य

## शेषतात्पर्यचन्द्रिका

शरद्वर्णनं तस्योपसंहारः, न वा पर्वतो वन्हिमानित्युपक्रम्य तस्माद्ध्रदो वन्हिमान् इति वाक्यं तदुपसंहारो भवतीत्याशयमभिप्रेत्य द्वितीयपक्षप्रतिक्षेपाय प्रवृत्तस्य उपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमङ्गीकर्तव्यम् इत्यस्य न्यायविवरणवाक्यस्य व्याख्यानाननुसारिव्याख्येयस्य प्रामाण्यमेव दूरोत्सारितमित्युपसंहारस्य व्याख्यानरूपत्वेन प्राबल्यं सिद्धमिति भावमभिप्रेत्य, ननूपसंहारस्य व्याख्यानरूपत्वे स्यादिदम्, उपक्रमस्यैव व्याख्यानरूपत्वसम्भवेन तस्यैव प्राबल्योपपत्तेरित्याशङ्कापरिहाराय प्रवृत्तस्य व्याख्यानस्य पश्चात्तनत्वनियमात् इत्यस्य विवरणवाक्यस्य, व्याख्येयं वाक्यमादिमं, व्याख्यानं पश्चात्तनमेवेति सर्वसम्प्रतिपत्तिः, इदन्तु वाक्यं पश्चात्तनमेवेति इदमेव व्याख्यानम्, श्रद्धावाक्यन्तु व्याख्येयमेवेति सिद्धमिति भावमभिप्रेत्य व्याचष्टे तथाप्युपसंहारानुसारित्वमित्यादिना प्रामाण्यदर्शनादित्यन्तेन[1] ॥

### उपसंहारस्य बलीयस्त्वनियमः

उपक्रमानुसारित्वनियमेप्युपसंहारस्योपसंहारेणैवोपक्रमार्थो ज्ञायते इति अन्तिमं विवरणवाक्यं व्याचष्टे न च वाच्यमित्यादिना। अयं भावः। व्याख्यानस्येत्यादिपूर्ववाक्यमत्राप्यनुषञ्जनीयम्। उपक्रमाभावे पश्चाद्भाव्युपसंहारस्यायोगेन व्याख्यानरूपस्योपसंहारस्य पश्चात्तनत्वनियमेनोपसंहारस्यापि स्वोत्पत्त्यर्थं नियतपूर्वभाव्युपक्रमानुसारित्वमवर्जनीयमित्युत्पत्तौ वैपरीत्यं यद्यप्यस्ति। तथाप्युपक्रमार्थसन्देहे उपसंहारेण निर्णयवदुपसंहारार्थसन्देहे उपक्रमेण निर्णयाभावादर्थनिर्णायकत्वांशे उपसंहार एव बलवानिति ॥ ५ ॥

इति प्रथमाधिकरणम् ॥ ५ ॥

---

[1] प्रामाण्यादर्शनादित्यन्तेन

अथ अश्रुतत्वाधिकरणम् ॥ ६ ॥

॥ ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ ॥ ६ ॥

अग्न्यादिगतिः प्रत्यक्षतः श्रूयते । अतः प्रत्यक्षाश्रवणान्नयुक्तमिति चेन्न । "अथैनं यजमानं किं न जहाति, भूतान्येव, भूतैरेव गच्छति, भूतैर्भुङ्क्ते, भूतैरुत्पद्यते, भूतैश्चरति, भूतैर्विचरति" इति कौण्ठरव्यश्रुतौ प्रतीतेः ॥

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र पुनर्भगवत्प्राप्तिसाधनवैराग्याय जीवस्य भूतैस्सह गतिसमर्थनादस्ति शास्त्रादिसङ्गतिः । मरणमात्रे न मुक्तिरित्युक्तं भूतानां जीवेन सहगत्यभावेऽयुक्तं स्यात् । अतोऽसौ समर्थनीया । प्रकृतभूतान्येव विषयः । जीवेन सह गच्छन्ति नवेति सन्देहः । पूर्वोक्तमेव सन्देहबीजम् । पृथक् पृथग्विचारत्वात् सन्देहानुत्पादो न मन्तव्यः॥

पूर्वपक्षः

पूर्वपक्षस्य सूत्र एवोक्तत्वात् तदुपन्यस्य पूर्वपक्षांशं तावद्व्याचष्टे अश्रुतत्वादिति । न भूतानां जीवेन सह गमनं युक्तम् । तथा श्रुत्यभावात् । न च वाच्यमपां प्राणानाञ्च श्रूयते सहगतिरतोऽर्थाद्भूतानामप्यस्तीति ॥ यथा खलु प्राणानामग्न्यादिगतिः साक्षाच्छ्रूयते तथा श्रुत्यभावात् । आर्थिकश्रवणादपि नियमेन प्रत्यक्षश्रुत्यभावस्य बलवत्त्वात् । सति हि विशेषश्रवणे वैदिकार्थे युक्तयोऽपि प्रवर्तन्ते। अतोऽत्र प्राणानामग्न्यादिगतिवत् भूतानां जीवेन

## तत्त्वप्रकाशिका

सहगतेः प्रत्यक्षाश्रवणादभावः । ततो मरणस्यैव मुक्तित्वान्न वैराग्यादिना कृत्यमिति भावः । अतःशब्दस्तथार्थे । तेन यथेति आदौ सिध्यति । हेत्वर्थे च । अतश्शब्दस्तु हेत्वर्थे तथेत्यर्थे च वर्तते । उभयार्थे च भवति यथा शब्दविदो विदुः इति वचनात् ॥

सिध्दान्तः

सिद्धान्तांशं व्याचष्टे नेति । न प्रत्यक्षाश्रवणादसहगतिर्भूतानाम् । आर्थिकश्रवणस्याप्यश्रवणबाधकत्वात् । न हि कदन्नभुजोऽनशित्वं भवति । युक्तेरपि व्याप्तिलिङ्गग्राहकप्रमाणेनैव भवितव्यम् । तच्चास्ति । यदा चैवमार्थिकश्रवणमश्रवणबाधेनाभीष्टसिद्ध्यै भवति तदा सुतरामथैनमित्यादिविशेषश्रवणमिति भावः । अतोऽस्त्येव भूतानां जीवेन सहगतिरिति मरणे मोक्षाभावादनुष्ठेयमेव तदर्थं वैराग्यादिसाधनमिति सिद्धम् ॥ ६ ॥

—:o:—

ठति अपांति

शेषतात्पर्यचन्द्रिका

॥ ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ ॥ ६ ॥

पूर्वेण गतार्थत्वशङ्कनम्

नन्वेतत् पूर्वेण प्रथमेऽश्रवणादिति चेत् इत्यनेन गतार्थम्। तत्र गळबन्धेन श्रुतत्वं सम्पादितम्। न साक्षात्। अत एव तत्रोपपत्तेरिति, अत्र प्रतीतेरित्यसूत्रयदिति चेन्न। अधिकरणान्तरत्वानुपपत्तेः। किञ्च अनेन पञ्चानां पूर्वाधिकरणानां गतार्थत्वम्। नह्यनेनाप्रतिपन्नं तत्प्रतिपत्तव्यं प्रमेयान्तरमुपलभ्यते। वैराग्यादेरावश्यकत्वार्थं भूतसहगमनसमर्थनस्य एतन्मूलभूतकौण्ठरव्य श्रुतिव्याख्यानात्मकेन अनेनैवैकेन ऋजुना सिद्धावपि बहुभिर्वक्रैस्तत्समर्थनानुपपत्तेश्च। न च मरणस्य मुक्तित्वाभावः वैराग्याद्यावश्यकता वा पूर्वत्र, अत्र तु भूतगमनं विचारशास्त्रसार्थक्यं वा तद्विपर्ययेण वा विषय इति वाच्यम्। प्रमेयसाम्ये निर्निमित्तं विषयव्यवस्थामाश्रित्य बहूनामधिकरणानां प्रवृत्त्ययोगात्। इहापि पीठिकायामुपक्रमोपसंहारयोः विषयैक्यदर्शनाच्चेति चेत्—

पूर्वेण अगतार्थत्वस्थापनम्

अत्रोच्यते—किमत्र विषयभेदस्याभावादधिकरणारम्भः प्रतिक्षिप्यते? उत प्रयोजनाभावात्। आद्ये भूतसहगमनरूपप्रमेयैक्येन वैयर्थ्यशङ्कने फलपेटिकायाः भक्षपेटिकायाश्च पूर्वतन्त्रे, इह च पञ्चाधिकरण्यादेश्च तच्छङ्का स्यात्। तत्रापि विश्वजिदादेः सफलत्वस्य, समन्त्रकभक्षणस्य, जिज्ञासाकर्तव्यत्वादेश्च प्रमेयस्यैक्यात्। न द्वितीयः। भूतसहगमनदृढीकरणस्य प्रयोजनस्य सप्रयोजनत्वादिदृढीकरणस्यैव अत्रापि सत्त्वात्। अत एव आद्ये समस्तोपोद्घातत्वेन साधनावश्यकतायाः, द्वितीये भूतत्रयसह-

शेषतात्पर्यचन्द्रिका

गमनस्य, तृतीये तत्र मूलप्रमाणस्य, चतुर्थे बाधकाभावस्य, पञ्चमे उपसंहारप्राबल्यस्य च विषयस्य भेदेन न तत्राप्यन्येनान्यस्य गतार्थता । अत एवात्र टीकापि **पृथक् पृथक् विचारात् सन्देहानुत्पदो न मन्तव्य** इति । यात्विह पूर्वत्र अत्र च **प्रकृतभूतान्येवविषय** इति टीका सापि परमप्रमेयानुसारेणेत्यविरुद्धा । अस्तु वा विषयभेदाभावः । **पुनश्च प्रापकाद्धेतोस्तत्राधिकरणान्तरम्** इत्यधिकाशङ्कयैकस्मिन्नेव विषये तन्त्रद्वयेऽप्यधिकरणान्तरारम्भस्वीकारान्नेहाधिकरणारम्भप्रतिक्षेपः ॥

सङ्गतिसंशयौ

अत एव पूर्वोक्तहेत्वन्यथासिध्यादिशङ्कासमाधानात् पादैक्यप्रस्तावोक्तरीत्यावोत्थानादनन्तरसङ्गतिः । तत्र भूतानि जीवेन सह न गच्छन्त्युत गच्छन्तीति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । तदर्थं प्रत्यक्षश्रुत्यभावः प्रबल उत दुर्बल इति चिन्ता ॥

पूर्वपक्षः

तत्र भूतानां सहगमनं नास्ति, प्रमाणाभावात् । न च प्राणगति रूपमब्गमनरूपं चानुमानं प्रमाणमस्तीति वाच्यम् । तस्य दुर्बलत्वान्नात्र प्रमाणमस्ति। प्रत्यक्षश्रुत्यभावादित्यनुमानविरोधाच्च । न च पर्वतस्य वन्हिमत्त्वे प्रत्यक्षश्रुत्यभावेऽप्यनुमानस्य सत्त्वाद्व्यभिचारः । वैदिकत्वे सतीति विशेषणादिति पूर्वः पक्षः ॥

सिद्धान्तः

सिद्धान्तस्तु—न तावदनुमानविरोधः । वैदिकार्थेऽपि यागस्य स्वर्गसाधनत्वोक्त्याऽऽर्थिकेप्यपूर्वे, असाधितस्य करणत्वायोगेन अग्निहोत्रं

शेषतात्पर्यचन्द्रिका

जुहोति इत्यत्र साक्षादश्रुतेऽपि होमसाध्यत्वे च, कालान्तरभाविफलसिद्धये, दध्ना जुहोति इति वाक्येनानुवाद्यत्वसिद्धये च, प्रामाणिकत्वाङ्गीकारेण हेतोर्व्यभिचारात्। न च प्रत्यक्षश्रवणस्यार्थिकश्रवणबाधकस्य ऐन्द्र्या गार्हपत्यमुपतिष्ठते इत्यादौ दर्शनवत्, प्रत्यक्षाश्रवणस्यार्थिकश्रवणबाधकत्वदर्शनमस्तीति ॥

विशेषाश्रवणनियमस्य भूतासहगतिसाधकत्वशङ्कासूचकटीकावतारणम्

टीकाक्षरार्थस्तु—अविशेषविशेषौ च इत्यत्र अविशेषोक्तिशब्दावृत्त्यनुकर्षादिना विवक्षितविशेषाश्रवणरूपषष्ठाधिकरणन्यायस्य पूर्वपक्ष्यभिमत साध्यं प्रति असाधकत्वात् नियमघटित एव विवक्षणीय इति प्रवृत्तं, विवरण वाक्यं न च विशेषाश्रवणनियम एव बलवान् इत्यन्तं विवक्षितसाध्यसाधकतया सङ्गमयितुमुपोद्धातप्रक्रिययावतारयति न च वाच्यमिति ॥

उक्तशङ्कापरिहारकन्यायविवरणाशयवर्णनम्

अनुरूपतेत्युक्तसैद्धान्तिकन्यायविवरणं स्थानान्तरश्रवणस्याप्येतदनुरूपत्वात् आर्थिकश्रवणमप्यनुक्तिं बाधत एव किमुत स्थानान्तरगतं स्पष्टश्रवणमिति कैमुत्यार्थमेव "नेष्टादिकारिणां प्रतीतेः" इति परिहारान्तरमुक्तम् इत्यन्तम्। किमत्र विशेषाश्रवणं अत्रैव प्रकरणे श्रवणाभावः, उत स्थानान्तरे। नाद्यः। दर्शपूर्णमासयोः श्रुतस्य "पूष्णोऽहं देवयज्ययान्नादो भूयासम्" इति पूषानुमन्त्रणमन्त्रस्य पौषकर्मोत्पत्तिप्रकरणे श्रवणाभावेऽपि विवक्षितसाधकत्वदर्शनात्। नान्त्यः। छन्दोगे श्रवणाभावे-

शेषतात्पर्यचन्द्रिका

ऽपि कौण्ठरव्यश्रुतिस्थानान्तरे विशेषश्रवणसद्भावेन हेतोरसिद्धेरित्यभिप्रेत्य स्थानान्तरश्रवणस्याप्येतदनुरूपत्वात् इत्यन्तं प्रवृत्तम् ॥

स्थानान्तरश्रवणस्य कैमुत्यन्यायेनापि अश्रवण-
बाधकत्वपरटीकावतारणम्

ननु **प्रश्ननिरूपणाभ्यां, प्राणगतेश्च, ता एव ह्युपपत्तेः,** इत्यादिनोक्तमार्थिकश्रवणम् अनुक्तत्वाद्भूतानामसहगमनमिति पूर्वपक्षं प्रतिषेध्दुं शक्नोति न वा। आद्ये परिहारान्तरकथनमयुक्तम्। द्वितीये सूत्राप्रामाण्यमित्याशङ्क्य आद्यमेव पक्षमङ्गीकृत्य कैमुत्यार्थमेव परिहारान्तरमुक्तं, न तु तस्य पूर्वपक्षप्रतिक्षेपाक्षमत्वादित्यभिसन्धिनावशिष्टं विवरणवाक्यं प्रवृत्तमित्यभिप्रेत्य तात्पर्यतो व्याचष्टे **यदा चैवमार्थिकश्रवणमित्यादिना** ॥

गतिपेटिकायाः साध्यमुखेन व्यतिरेकव्यभिचार-
निरसनरूपं फलम्

तदेवमनया षट्सूत्र्या गतिपेटिकया मरणस्य मुक्तित्वाभावसमर्थनव्याजेन फलमवलम्ब्य वैराग्यस्य या व्यतिरेकव्यभिचारशङ्का सा निरस्ता वेदितव्या ॥

गतिपेटिकान्तर्गताधिकरणक्रमनिर्वहणम्

अस्यां च पेटिकायामधिकरणक्रमस्तु—भूतसम्बन्धे प्रतिपादिते विशेषजिज्ञासा भवतीति सर्वोपजीव्यत्वात् सर्वोपोद्घातत्वाच्च रंहत्यधिकरणस्य प्रथमता। विमता मृतिः न मुक्तिः भूतसम्बन्धवत्त्वाज्जीवनवदित्याद्यनयसिद्ध प्रयोगे साधकत्वेनाभ्यर्हितहेतुनिष्ठदोषस्य बाधाद्यपेक्षयाऽऽदावेव परिहार्यतया,

## शेषतात्पर्यचन्द्रिका

तत्रापि सन्दिग्धासिध्द्यपेक्षया प्रबलस्यासिद्धत्वस्य श्रुत्या परिहारात् त्र्यात्मकत्वनयस्य द्वितीयता। अत एव विमता मृतिः भूतसम्बन्धवती प्राणसम्बन्धवत्त्वादिति प्रयोगमाश्रित्य सन्दिग्धासिध्द्युद्धारात् प्राणगतिनयस्य तृतीयता। असिद्धिनिरासकहेतोरप्यसिद्धिशङ्कानिरसनं प्रसङ्गात् क्रियत इत्यग्न्यादिनयस्य चतुर्थता। ततोऽवसरप्राप्तस्य प्रतिज्ञाश्रयस्य बाधस्य निरसनात् उपसंहारनयस्य पञ्चमता। यदि भूतसम्बन्धः स्यात् प्राणगतिवच्छ्रूयेतेत्यादिरूपस्य प्रतिकूलतर्कस्यान्त्य उपस्थानात् तत्परिहारकस्याश्रुतत्वनयस्य षष्ठतेति ॥

तदन्तरादिषट्सूत्री एकमधिकरणमिति मन्यमानानां
श्रीमद्भाष्यानुसारिणां केषाञ्चिद्व्याख्याननिरासः

अत्र कृत्स्नोऽपि पादो, वैराग्यविधायकशास्त्रस्यापि ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इति जिज्ञासासूत्रे विचार्यत्वेन प्रतिज्ञानात् तत्समर्थनाय प्रवृत्त इत्याश्रित्य 'षट्सूत्री एकमधिकरणं' इति भाष्यानुसारिणामेव केषाञ्चिद् व्याख्यानम्। तत्र वैराग्याद्यनुष्ठेयतादेर्गत्यागत्यादिनिरूपणानुपमर्देनाध्यायद्वयारम्भसमर्थनपरतया व्याख्यानञ्चेन्न प्रतिपक्षता। तदुपमर्देन चेत् 'वैराग्यार्थं गत्यादिनिरूपणा' इति भाष्यविरोधः। अधिकरणभेदानाश्रयणे तु पूर्वपक्षसिद्धान्तन्यायसङ्ग्राहकानुव्याख्यानन्यायविवरणसम्बन्धदीपिकादिविरोधः। स्पष्टञ्च परकीयाधिकरणभङ्गिनिराकरणे दूषणमभिधास्यते॥

॥ इति अश्रुतत्वाधिकरणम् ॥ ६ ॥

अथ भाक्ताधिकरणम् ॥ ७ ॥

अपाम सोमममृता अभूम इत्यादिश्रुतिविरोध इत्यतो वक्ति—

॥ ॐ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॐ ॥ ७ ॥

भागतस्तदमृतत्वम्। "नान्यः पन्था अयनाय विद्यते" इति श्रुतेरात्मविद एव हि मुख्यम्। वाशब्दात् पारम्पर्येण आत्मविदपेक्षया वा। तथा हि श्रुतिः "स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम्। यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तध्दास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत। स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माध्द्येवात्मनो यद्यत्कामयते तत्तत्सृजते।" "अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्यः" "कर्मणा ज्ञानमातनोति, ज्ञानेनामृती भवति अथामृतानि कर्माणि यत एनममृतत्वं नयन्ती"ति च ॥ ७ ॥

---

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्त्यर्थं वैराग्यादेरेवावश्यकसाधनत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः। यदि वैराग्यादेर्नावश्यानुष्ठेयत्वं तर्हि नास्य शास्त्रस्यावश्यमारम्भणीयत्वं स्यादतस्तत्साधनीयम्। वैराग्यादिसाधनमेव विषयः। किं मुमुक्षुणाऽवश्यमनुष्ठेयमुत नेति सन्देहः। उभयविधसाधनदर्शनं सन्देहबीजम् ॥

## तत्त्वप्रकाशिका

पूर्वपक्षः

पूर्वपक्षयति **अपामेति**। न मुमुक्षुणावश्यमनुष्ठेयं वैराग्यादि। तद्विनापि कर्मणैव मोक्षसम्भवात्। **अपाम सोमममृता अभूम** इत्यादि श्रुतेः। अन्यथैतच्छ्रुतिविरोधात्। अतः **अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्** इति न्यायेन सुशकेन कर्मणा मोक्षसिद्धौ वैराग्यादिना कृत्याभावाद्व्यर्थमिदं तदर्थं शास्त्रमिति भावः॥

सिद्धान्तः

(अपामेति श्रुतेः प्रथमार्थकथनम्)

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **अत** इति। अवश्यानुष्ठेयमेव मुमुक्षुणा वैराग्यादि। तद्विना मोक्षासिद्धेः। न चैवं श्रुतिविरोधः। तस्या अन्यार्थत्वात्। तथाहि—कर्म द्विविधम्। काम्यमकाम्यं च। तत्र यदि अस्यां श्रुतौ सोमयागः काम्यो भवेत्, तदा तत्साध्यममृतत्वं नाम किञ्चित्कालीनमिति गौणार्थतया श्रुतिरुपपन्नेति भावः। मुख्यामृतत्वमेव श्रुत्यर्थः किं न स्यादित्यत आह **नान्य** इति। न कर्मणा मुख्यामृतत्वं लभ्यम्। येन तच्छ्रुत्यर्थः स्यात्। काम्यकर्मिणामनात्मवित्त्वात्, **तमेवं विद्वान्** इति श्रुत्या आत्मविदो मुख्यामृतत्वस्य, अन्येषां तदभावस्यैवोक्तत्वादिति भावः। काम्यकर्मणा तत्फलस्यैव हि सिद्धिः॥

(उक्तश्रुतेः द्वितीयतृतीयार्थकथनम्)

अथ अकाम्यकर्म विवक्षितम्, तदप्युभयथा, जिज्ञासूनां ज्ञानिनाञ्चेति। द्विविधमपि न मोक्षसाधनं साक्षादित्याह **वाशब्दादिति**। इति सूचितमिति

## तत्त्वप्रकाशिका

शेषः । यद्यत्र जिज्ञासूनामकाम्यं कर्म विवक्षितं तदाऽमृतपदेन मुख्यामृतत्वमेव । किन्नाम तच्च कर्मणा न साक्षाद्भवति । कर्मभिः शुद्धान्तःकरणस्य वैराग्यादि, तद्वतो जिज्ञासा, तस्य ज्ञानं, तस्य मोक्ष इति पारम्पर्येणैव । तथा हि वाक्यशेषः **अगन्म ज्योतिः** इति । अथ ज्ञानिनोऽकाम्यं कर्म तथापि न तेन मोक्षः । किन्त्वात्मविदमपेक्ष्यैव । आत्मज्ञानलब्धे मोक्षेऽकाम्यकर्मणाऽतिशयो भवति । सर्वथा न कर्मणा संसारनिवृत्तिरिति भावः ॥

(अर्थत्रयपरत्वस्य प्रमाणैः समर्थनम्)

एवमस्याः श्रुतेरुक्तार्थत्रयसमर्थनाय श्रुतीरुदाहरति **तथा हीति** । आत्मविदामेव मुख्यामृतत्वम्, नानात्मविदामित्यर्थे **स एनम्** इति श्रुतिः प्रमाणम् । **आत्मानमेव लोकमुपासीत** इत्यादि श्रुत्यैवात्मविदपेक्षयेत्यर्थसिद्धिः । न भुनक्ति—नामृतत्वं भोजयति । उपास्ते—जानाति च । स मुक्तो यद्यत्कामयते तत्तत्परमात्मप्रसादद्वारा कर्म सृजतीत्यर्थः । भागतस्तदमृतत्वमित्यस्मिन्नर्थे **अमृत** इति श्रुतिः । पारम्पर्येणेत्यत्र **कर्मणा** इति श्रुतिः । अतो वैराग्याद्यनुष्ठानमन्तरेण मोक्षासिद्धेः न तत्प्रतिपादकशास्त्रवैयर्थ्यमिति सिद्धम् ॥ ७ ॥

—:o:—

शेषतात्पर्यचन्द्रिका

## ॥ ॐ भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ॐ ॥ ७ ॥

सङ्गतिः

अत्र आगतेर्गतिपूर्वकत्वनियमाद्गतिपेटिकानन्तरमागतिपेटिकावसरः । अस्तु फलमुखेन व्यभिचाराभावः, साधनमुखेन व्यभिचारः स्यादेव, **अपाम** इत्यादौ कर्मणा मोक्षश्रवणादिति शङ्का यद्यप्यन्तेऽपि परिहर्तुं शक्या। तथापि पुण्यपेटिकान्तर्भावलाभाय अत्रापि सङ्गतत्वात्, आगतिपेटिकोपोद्घातत्वाच्च अत्रैव निराक्रियत इत्यनन्तरसङ्गतिः ॥

संशयः

अत्र वैराग्यादिसाधनमवश्यमनुष्ठेयं न भवति, उत भवतीति । तदर्थं कर्मापि मोक्षसाधनं भवति, उत नेति । तदर्थं **'अपाम'** इति श्रुतिः न भाक्ता, उत भाक्तेति । तदर्थमभाक्तत्वे बाधकं नास्त्युतास्तीति चिन्ता ॥

पूर्वपक्षः

अत्र पूर्वपक्षस्तु—कर्मापि मोक्षसाधनं भवति । **"तरति शोकमात्मवित्" "ज्ञानेनामृती भवति"** इत्यादिवत् **"अपाम सोममसृता अभूम"** इति श्रुतिसद्भावात् । न चेयं श्रुतिर्गौणी । बाधकाभावात् । अन्यथा **तरति** इत्यादिरपि तथा स्यात् । न च कर्मापि मोक्षसाधनं भवतु, तथापि घटाद्यर्थिना चक्रादेः कारणत्वेऽपि दण्डस्येव मोक्षार्थिना वैराग्यस्योपादेयता किं न स्यादिति वाच्यम् । न हि दण्डादिसाधारणमुपादेयत्वं वैराग्यादेरिह प्रति-

## शेषतात्पर्यचन्द्रिका

पिपादयिषितम् । किन्तु कर्मादिपरित्यागेनोपादेयत्वरूपमवश्यमनुष्ठेयत्व-मेवेति भवति प्रतिपक्षता । अत एव टीकायां **अवश्यमनुष्ठेयं न वेति** सन्देहो दर्शित इति ॥

### सिद्धान्तः

सिद्धान्तस्तु—न कर्म मोक्षसाधनम् । प्रमाणाभावात् । **कर्मणा बध्यते जन्तुः** इति वचनविरोधाच्च[1] । नच **अपाम** इति श्रुतिः प्रमाणम् । भाक्तत्वात् । सोमयागरूपकर्मणा साध्ये स्वर्गेऽल्पास्थिरभोगवत्त्वेन अमृता इव अभूमेत्यर्थाश्रयणाभावे **नान्यः पान्थाः** इत्यादिश्रुतिविरोधस्य दुरुद्ध-रत्वात् । न च वैपरीत्यमर्हम् । **नान्यः पन्थाः** इति मार्गान्तरनिषेध-प्रतीत्या अस्या निरवकाशत्वात् । **यस्य प्रसादात्परमार्तिरूपादस्मा-त्संसारान्मुच्यते नापरेण** इति मार्गान्तरनिषेधप्रतीत्या निरवकाशैतच्छ्रुति-विरोधात् ज्ञानस्यापि मोक्षसाधनत्वं न स्यादिति चेन्न । व्यापारव्यापारि-भावाश्रयणादिना विरोधपरिहारसम्भवात् ॥

### सिद्धान्तानुबन्धी

### कर्मज्ञानयोर्व्यापारव्यापारिभावनिरासः

कर्मज्ञानयोरपि व्यापारव्यापारिभावाश्रयणेनाविरोध इति चेत् । किमत्र कर्म विवक्षितम् ? यदि काम्यं तदा **कर्मणा बध्यते जन्तुः** इति वचनेन ज्ञानविरोधित्वावगमात्तयोर्व्यापारव्यापारिभावानुपपत्तेः । न हि बन्धसाधनं कर्म मोक्षसाधनज्ञानस्य व्यापारो व्यापारि वा भवितुं युक्तम् ।

[1] प्रमाणविरोधाच्च ।

## शेषतात्पर्यचन्द्रिका

तथा सति दुःखसाधनमर्थहान्यादिकमपि सुखसाधनस्य स्रक्चन्दनादेर्व्यापारादि स्यात्। अकाम्यमपि, जिज्ञासूनां चेत् न साक्षान्मोक्षसाधनम्, किन्तु चित्तशुद्धिद्वारा ज्ञानोपयोगितयैव। न चैतावता मोक्षसाधनकलापस्यावश्यानुष्ठेयता व्याहन्यते। परम्परासाधनेन साक्षात्साधनापह्नवायोगात्। ज्ञानिनामपि अकाम्यं कर्म न संसारनिवृत्तिं जनयति। किन्तु आनन्दातिशयमेवेति न सर्वथापि कर्म मोक्षसाधनम्। न च **कर्मणैव हि संसिद्धिमास्थिता जनकादयः** इत्यवधारणात् कर्मश्रुतिरपि निरवकाशेति वाच्यम्। अयोगव्यवच्छेदार्थत्वोपपत्तेः। अत्रापि तथास्त्विति चेन्न। एवकारस्यार्थत्रयवत्त्वेन सावकाशत्वात् अन्यः पन्थाः नेत्यस्य तदभावादिति ॥

टीकाकारेभ्यः प्राचीनैः कैश्चित् श्रीमद्भाष्यव्याख्यातृभिः
कृतस्याधिकरणरचनस्यानुवादः

टीकाक्षरार्थस्तु— तत्रैवं चिन्ता। अयमध्याय आरम्भणीयो न वा। तदर्थं मुक्तिसाधनमनुष्ठेयं न वेति। अस्तु भूतानामप्यनुगतेर्मृतावपि न मुक्तिः।[1] तथा च मरणमात्रेण मास्तु बन्धनिवृत्तिः। अनुवर्ततां बन्धः। तन्निवृत्तये किमर्थमनुष्ठेयं साधनम्। यदर्थमयमध्यायः। तस्य स्वर्गरूपस्याशास्यत्वात्। न च क्षयिष्णुत्वेन हेयत्वम् **"अपाम सोमममृता अभूम" "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति"** इत्यादिना कर्मजन्यस्वर्गादिबन्धनस्याप्यक्षय्यत्वबोधनात्। अतो न मुक्तिसाधनोपपादनायैतदध्यायारम्भः। ततोऽर्वाक् प्रत्यागत्य-

[1] अस्तु भूतानामप्यनुगतेर्मृता।

## शेषतात्पर्यचन्द्रिका

भावात्तत्रैवानुरागेण न वैराग्यादिसिद्धिरिति सङ्गतिपूर्वपक्षाविति केषाञ्चिद्भाष्यव्याख्यातॄणामेवाधिकरणरचनमयुक्तम् ॥

तन्निरासार्थत्वेन टीकाकाराणामधिकरणरचनान्तरानुसरणमिति वर्णनम्

शास्त्रास्यारम्भणीयत्वं हि समर्थयिष्यमाणं न व्याकरणादिशास्त्रसाधारणम् । मुमुक्षुं प्रति तत्प्रणयनानुपपत्तेः । किन्त्वावश्यकत्वगर्भम् । तथा च मुक्तिसाधनस्यावश्यानुष्ठेयत्वं विना तन्न समर्थयितुं शक्यमिति कर्मणो मोक्षसाधनत्वस्य भाष्यविवरणयोर्निषेधप्रतीत्या च, मुक्तिसाधनस्यावश्यानुष्ठेयत्वपर्यन्तं, अधिकरणार्थो वक्तव्यः । तदर्थञ्च वैराग्यादेरावश्यकसाधनत्वमिति स्वर्गरूपबन्धस्य आशास्यत्वेऽपि तदितरभूतबन्धस्य आशास्यत्वाप्रतीतेस्तन्निवृत्त्यर्थं साधनमनुष्ठेयमेव स्यादिति चाभिसन्धिना स्वयमधिकरणमवतारयति **अत्र भगवत्प्राप्त्यर्थं वैराग्यादेरेवावश्यकसाधनत्वेत्यादिना**[1] ॥

केषाञ्चन टीकावाक्यानां न्यायविरणवाक्यस्य च तात्पर्यवर्णनम्

शास्त्रावश्यारम्भणीयत्वोपयोगिवैराग्यानुष्टेयत्वसिद्ध्यर्थमिति वाक्यं भगवत्प्राप्त्यर्थमित्यनन्तरमध्याहरणीयम् । तेन **यदि वैराग्यादेर्नावश्यानुष्ठेयत्वं** इत्यादिवाक्यं नासङ्गतमिति ध्येयम् । **कर्मणैव मोक्षसम्भवात्** इति। कर्मणापीत्यर्थः । अत एव **सुशकेन कर्मणा मोक्षसिद्धौ** इत्यादिवाक्यं न्यायोदाहरणञ्च युक्तम् । अन्ययोगव्यवच्छेदार्थत्वे तु ज्ञानस्य मोक्षसाधनत्वं पूर्वपक्षिणो न सम्मतमिति दुश्शकपर्वतव्रजनस्थानीयत्वोक्तिरयुक्ता स्यात् । **कर्मैव मोक्षसाधनमिति मन्तव्यम्**[2] इति विवरणोक्तिरपि, कर्मापि तत्साधनम्, तच्च सुलभमेव न दुश्शकमित्येवं योज्या ॥

---

[1] वैराग्यादेरावश्यक [2] कर्मैव तत्साधन

## शेषतात्पर्यचन्द्रिका

भाष्यन्यायविवरणयोः एकेनैव टीकावाक्येन युगपद्व्याख्यानम्

अत्र **अविशेषविशेषौ च** इति सङ्ग्रहे विशेषोक्तिरूपसप्तमन्याय-विवरणं **न च अपाम सोमममृता अभूम इति विशेषत एव मोक्ष फलस्याप्युक्तेः कर्मैव मोक्षसाधनमिति[1] मन्तव्यम्** इत्यन्तं भाष्या-दनतिभिन्नार्थमिति युगपदेव व्याचष्टे **अपाम सोममिति**। अत्र **योग्य-ता बलवत्त्वं च** इति सङ्ग्रहे योग्यताशब्दविवक्षितसैद्धान्तिकन्यायविवरणं **"नान्यः पन्था अयनाय विद्यते" "स य आत्मानमेव लोकमुपास्ते" "यावदिन्द्रो यावन्मनुः[2]" इत्यादिश्रुतिबलादमृतशब्दस्य यथायोग्यमे-वार्थकल्पनोपपत्तेः** इत्यन्तं एतद्भाष्यानतिभिन्नार्थमिति युगपदेव व्याचष्टे **तस्या अन्यार्थत्वात्** इति ॥

संसारनिवृत्तिपदस्वारस्यवर्णनम्

ननु दुःखनिवृत्तिविशिष्टयावदानन्दाविर्भावो हि मोक्षो दलद्वयात्मकः। कर्मणामानन्दातिशयजनकत्वे विशेष्यांशं प्रति हेतुत्वसिद्धेः, **तथापि न तेन मोक्ष** इति कथमुक्तमित्यत आह **सर्वथेति**। सर्वथा न कर्मणा मोक्ष इति वक्तव्ये **संसारनिवृत्तिः** इत्युक्त्या विशेष्यांशः कर्मसाध्योऽङ्गीक्रियत एव। परन्त्विह संसारनिवृत्तिरेव मोक्षो विवक्षित इति ज्ञायत इति ध्येयम् ॥

तदन्तरादिसप्तसूत्री एकमधिकरणमितिपरमतस्य अनुवादः

अत्र उभयेऽपि—**कृतात्ययेऽनुशयवान्** इत्यतः प्राक् सप्तसूत्री गतिप्रकारं सूचयन्ती एकमधिकरणम्। अत्र च भूतानि इतो गच्छन्ति

---

[1] कर्मैव तत्साधनमिति

[2] यावन्मनुर्यविदादित्यः

## शेषतात्पर्यचन्द्रिका

न वा । तथा किं भूतानि जीवमिहैव विसृज्य स्वतन्त्राण्येव गच्छन्ति उत जीवोऽपीतो गच्छति, तमनु संवेष्टचैव[1] भूतानि गच्छन्ति इति संशये **अश्रुतत्वादिति चेत्** इत्यतः प्राक् भूतजीवोभयसाधारणो विचारः । ततो जीवमात्रासाधारणः[2] । यथा **आम्नायस्य क्रियार्थत्वात्** इत्यत्र अर्थवादमन्त्रनामधेयसाधारणोऽर्थवादमात्रासाधारणश्च[3] विचारः । अत एवायं द्विपर्वा विचार इत्याहुः ॥

तत्र द्विपर्वा विचार इत्यंशनिरासः

तन्न । **आनर्थक्यमतदर्थानाम्** इति आद्यसूत्रगतप्रकृतिप्रत्यय-स्वारस्याय, **विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन** इत्यर्थवादमात्रविषय सिद्धान्तसूत्रस्वारस्याय च तत्र विचारस्य द्विपर्वत्वेऽपीह तदभावेन, प्रत्युत **रंहति** इत्यस्य **सम्परिष्वक्त** इत्यस्य चायोगेन च[4] तदभावात् ॥

तदन्तरसूत्रार्थानुवादनिरासौ

यच्चात्र प्रथमविचारे—न भूतानीतो गच्छन्ति । प्रथमाहुतौ तद्वाच-कापुशब्दाश्रवणात् । प्रत्युत श्रद्धाशब्दश्रवणात् । **पञ्चम्यामाहुतौ**[5] इत्यत्रैव अप्शब्दश्रवणादिति प्राप्ते, **प्रश्ननिरूपणाभ्याम्** भूतानीतो गच्छन्तीति पूर्वोत्तरपक्षवर्णनम्—तत्र या आपस्ताः पुरुषवचस इति स्पष्टमुद्देश्य-विधेयभावप्रतीतेरुद्देश्यस्य च व्रीह्यादेरिव प्राक् सत्त्वावश्यम्भावेन भूतानामपि

---

[1] जीवोपेतानि गच्छन्ति [2] जीवमात्रसाधारणः [3] मात्रसाधारण्य
[4] इत्यस्यायोगेन च [5] माहुतावापः

## शेषतात्पर्यचन्द्रिका

गमनसिद्धेर्न पूर्वपक्षोदयः । सिद्धान्तोऽप्ययुक्तः । भूतानां जडत्वेन गमनायोगात् । जीवस्यात्रैवावस्थितिसन्देहेन[1] तत्सन्निधानस्याप्ययोगात् । योगे वा परिष्वङ्गाभावेन तस्याप्रयोजकत्वात् । एकोनसहस्राधिकरणन्यायेन प्रश्ननिरूपणयोरप्शब्दस्य तदुपलक्षितजीवपरत्वेन भूतमात्रपरत्वाभावेनासिद्धेश्च । संपरिष्वक्तशब्दविरोधस्योक्तत्वाच्च ॥

त्र्यात्मकसूत्रार्थानुवादः

यच्च— सर्वैर्भूतसूक्ष्मैः संपरिष्वक्तो रंहतीति पूर्वसूत्रे प्रतिज्ञा न युज्यते । प्रश्ननिरूपणयोरप्शब्दश्रवणेन तन्मात्रपरिष्वङ्गालाभेऽपि इतरपरिष्वङ्गालाभादिति द्वितीयसूत्रमवतार्य, अप्सु आरम्भिकासु अभ्युपगतासु इतरदपि भूतमभ्युपगन्तव्यमेव । त्रिवृत्करणश्रुत्या केवलानामपामारम्भकत्वानुपपत्तेः । किञ्च त्रयाणामपि तेजोऽबन्नानां देहे कार्योपलब्धेः वातपित्तश्लेष्मभिः त्रिभिर्धातुभिरारब्धत्वाच्च देहस्त्र्यात्मकस्तावत्सिद्धः । न स भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते । कथं तर्हि प्रश्ननिरूपणयोरप्शब्दश्रवणमिति चेत् भूयस्त्वादपां देहे, शुक्रशोणितलक्षणे तद्बीजे, अग्निहोत्रादिकर्मलक्षणे तन्निमित्तकारणे च[2]। तत्र देहे भूयस्त्वं तेजआद्यपेक्षया, न पृथिव्यपेक्षया । शरीरे पार्थिवभागस्याप्यधिकस्योपलब्धेः । दृश्यते च देहबीजे द्रवबाहुल्यम् । कर्माणि च सोमाज्यदधिपयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणीति तस्य व्याख्यानम्—

[1] जीवस्यै व अत्रैव अवस्थिति   [2] अग्निहोत्रादिकर्म च तन्निमित्तकारणम्

## शेषतात्पर्यचन्द्रिका

### एतन्निरसनम्

तन्न । मद्रीत्या साक्षादेव वैराग्याक्षेपपूर्वकमवतारसम्भवे पूर्वसूत्रानभिप्रेतसर्वभूतपरिष्वङ्गप्रतिज्ञाक्षेपपूर्वमवतारेण गुणसूत्रत्वाश्रयणायोगात् । अन्यथा जन्मादिसूत्रादिकमपि पूर्वपूर्वसूत्रसूचितब्रह्मशब्दार्थाद्याक्षेपेण प्रवृत्तमित्यवतार्य गुणसूत्रमेवेति वक्तुं शक्यमिति नाधिकरणान्तरं स्यात् । किञ्च अप्शब्दमात्रश्रवणात् इतरभूतपरिष्वङ्गे आक्षिप्ते भूतत्रयकार्योपलब्ध्या त्रिधात्वारब्धत्वेन च देहस्य त्र्यात्मकत्ववर्णनमसङ्गतम् । आरब्धस्य त्र्यात्मकत्वे आरम्भकस्यापि तत्सिध्यतीति चेन्न । तथा व्याप्त्यभावात् । आकाशाद्यारब्धवाय्वादेः स्पर्शादिमत्त्वेऽपि आरम्भके आकाशादौ तदभावात् । शरीरस्य त्र्यात्मकत्ववत् महदादितत्त्वात्मकत्वस्यापि सत्त्वेन तदारब्धे चतुर्विंशतितत्वात्मकत्वस्यापि सत्त्वे सूत्रे विशिष्य त्र्यात्मकत्वोक्तिस्वारस्याभावाच्च । अपां भूयस्त्वस्य च मद्रीत्या **पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता** इत्यादिप्रमाणानुसारिण्या सम्भवे पृथिवीतरभूतविवक्षयेत्यादिकुसृष्ट्या तदयोगात्। देहबीजे द्रवबाहुल्यदर्शनेऽपि पार्थिवत्वेन तत्र अपां भूयस्त्वासिद्धेः । अन्यथा घृतादावपि तत्सिद्धिः स्यादिति पार्थिवत्वादिव्यवस्था न स्यात् । देहनिमित्ते च कर्मादौ द्रवद्रव्यव्यपाश्रयत्ववर्णनेन अब्भूयस्त्ववर्णनमत्यन्तासङ्गतम् । न हि निमित्तकारणे अब्भागाधिक्येन श्रुतौ आप इति विशेषोक्तिः सङ्गता । तण्डुलपुरोडाशमांसचर्वादिकठिनद्रव्यसमवायित्वेन कर्मणां श्रुतौ पृथिवीशब्दश्रवणापत्तेश्च ॥

## शेषतात्पर्यचन्द्रिका

प्राणगतिसूत्रार्थानुवादनिरासौ

यच्च **तमुत्क्रामन्तं प्राणोऽनूत्क्रामति। प्राणमनूत्क्रामन्तं सर्वे-प्राणा अनूत्क्रामन्ति** इत्यादिभिः श्रूयमाणा प्राणगतिः आश्रयमन्तरेणानुपपद्यमाना सती तदाश्रयभूतानामपामप्यर्थाद्गतिमवगमयति। न हि निराश्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा। जीवतोऽदर्शना[2]दिति तृतीयस्य व्याख्यानम्—

तच्चायुक्तम्। गन्तुर्जीवस्यैवाश्रयत्वसम्भवेन प्राणानां गमनोपपत्तेः। जीवव्यतिरिक्ताश्रयापेक्षायान्तु भूतानामेव गमनासिद्धेः॥

अग्न्यादिगतिसूत्रार्थानुवादनिरासौ

अत्र चतुर्थसूत्रे **भाक्तत्वात्** इत्यंशस्य—**ओषधीर्लोमानि वनस्पतीन् केशाः** इति वाक्ये तावल्लोमादीनामोषध्यादिगमनस्य प्रत्यक्षविरुद्धत्वान्न मुख्यार्थता सम्भवति। न हि लोमानि केशाश्चोत्प्लुत्यौषधीर्वनस्पतींश्च गच्छन्ति। तत्समभिव्याहाराच्चाग्न्यादिश्रुतिर्न मुख्यार्था भवितुमर्हति। प्राणेन विना जीवस्य गमनानुपपत्तेः। देहान्तरे उपभोगानुपपत्तेश्च। **तमुत्क्रामन्तं प्राणोऽनूत्क्रामति** इत्यादिना स्पष्टं जीवेन सह गमनश्रुतेश्च। तदेवं मुख्यार्थासम्भवे अग्नौ दग्धानां यथा पुरुषोपकारकता नास्ति तथा मृतिकाले वागादिदेवानामग्न्यादीनां वागाद्युपकारकता नास्तीति सादृश्यमात्रेण प्रवृत्तेः **अग्निं वागप्येति** इत्यादिश्रुतिर्गौण्येवेति व्याख्यानम्—

[1] जीवतोदर्शना

## शेषतात्पर्यचन्द्रिका

तदयुक्तम् । तत्र **प्राणा भागत एवतु अधिदैवं प्राप्नुवन्ति** इत्यादिप्रमाणानुसारेण प्रयुक्तभाक्तशब्दस्य गौणार्थत्वायोगात् । सूक्ष्माणां वागादीनां लोमादीनाञ्च तत्तदधिदैवगमने प्रत्यक्षविरोधाभावात् । अन्यथा शरीरेण सह दग्धानां भूतसूक्ष्माणां जीवेन सह गमनसिद्धान्तोऽपि न स्यात् ॥

प्रथमेऽश्रवणसूत्रार्थानुवादनिरासौ

यत्तु पञ्चमव्याख्यानम्—उपक्रमे श्रवणमसिद्धम् । तत्र श्रुतस्य श्रद्धाशब्दस्य **श्रद्धा वा आपः** इति वैदिकप्रयोगेणाप्सु शक्तेः, तनुत्वसारूप्येण गौण्या वा, श्रद्धापूर्वककर्मसमवायाच्च **आपो हास्मै श्रद्धां सन्नमन्ते** इति श्रुतिसिद्धात् श्रद्धाहेतुत्वाद्वा लक्षणाया वा अङ्गीकारात् । अन्यथा **आपः पुरुषवचसः** इत्युपसंहारानुपपत्तेरिति—

एतदप्ययुक्तम् । यतः, उपसंहारप्राबल्यवादिनां युक्तमपीदं व्याख्यानं नोपक्रमप्राबल्यवादिनस्तव मते युक्तम् । व्याख्यातुश्च श्रुतिप्रयोगदर्शनेन मुख्यत्वाभिधानानन्तरं गौण्यादिप्रदर्शनात्, **आयुर्वै घृतम्** इत्यादिवत् श्रौतप्रयोगोपपत्तौ मुख्यत्वसाधकत्वायोगाच्चाचातुर्यं भ्रमश्च स्फुट एव ॥

अश्रुतत्वसूत्रार्थानुवादनिरासौ

यच्च षष्ठस्य—जीवपरिष्वङ्गस्याश्रुतत्वादुक्तमयुक्तम् । नह्यत्र अपामिव जीवानां श्रावयिता कश्चिच्छब्दोऽस्तीति चेत् । **अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंम्भवन्ति** इत्युपक्रम्य

## शेषतात्पर्यचन्द्रिका

धूमराज्यपरपक्षषण्मासंवत्सरपितृलोकाकाशचन्द्रमआदिप्राप्तिः इष्टादि-कारिणाम् **आकाशाच्चन्द्रमसमेष सोमो राजा** इत्युत्तरस्मिन् नवमे प्रपाठके श्रूयते। न च तत्राप्यपामेव केवलानां श्रवणं युक्तम्। उपासत इति चेतनप्रतीतेः। त एत एवेहापि प्रतीयन्ते **तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा सम्भवति** इति श्रुतिसामान्यादिति व्याख्यानम्—

तत्र। सम्परिष्वक्तो रंहति इत्युक्तवचनान्तरमेवात्र जीववाचकशब्दा-भावादित्याक्षेपस्य सङ्गतत्वेन षष्ठे तदयोगात्। अयुक्तश्चायमाक्षेपः। यतः पूर्वत्र प्राणविद्यायां **यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति** इति दर्शनकर्तृत्वेन चेतनस्यैव प्रकृतत्वात्। वेत्थ यथा इत्यादिप्रश्नवाक्ये तस्यैव प्रकृतत्वेन तत्र च अप्शब्दः अब्वेष्टिते जीवे लक्षणया प्रवर्तत इति सिद्धमेव। परन्तु सर्वैर्भूतैर्वेष्टितो गच्छति उत अम्मात्रेणेति न ज्ञायते। तत्र च स्पष्टश्रुतिः **भूतैरुत्पद्यते** इत्येवंरूपा अद्यापि नोपन्यस्तेति भवत्याक्षेपः। न चात्रापि भूतैः परिष्वक्तो रंहतीति स्पष्टश्रुत्यनुपन्यासात् भवत्याक्षेप इति वाच्यम्। तथापि सिद्धान्ते तथाविधस्पष्टश्रुत्यनुपन्यासान्ना-क्षेपः शाम्येत्। अत एव सिद्धान्तोऽप्ययुक्तः। किमनया भङ्ग्या अर्था-पत्तिरूपप्रमाणमुपन्यस्तम्, उत समाख्या, अथोपसंहारः। नाद्यः। उत्तर-वाक्येऽपि शुद्धजीवग्रहणोपपत्तेः। न द्वितीयः। अप्श्रुतिरूपश्रुतिविरोधमूल-कत्वादाक्षेपस्य दुर्बलसमाख्ययाऽशान्तेः। नान्त्यः। पञ्चाग्निविद्याया

### शेषतात्पर्यचन्द्रिका

अन्तिमस्य प्रश्नस्य परिहारमभिधाय **वेत्थ पथो देवयानस्य पितृयानस्य** इति पृष्टस्य **तद्य इत्थं विदुः** इत्यादिना प्रपाठकेन परिहाराभिधानात्, तदन्तर्गतस्य **ते धूममभिसंभवन्ति** इत्यादेः पञ्चाग्निविद्योपसंहारत्वाभावात् । तथात्वेऽपि वा **भूतैर्भुङ्क्ते भूतैश्चरति भूतैर्विचरति** इति कौण्ठरव्यश्रुताविव स्पष्टं भूतपरिष्वङ्गाप्रतीतेः, **ते धूममभिसम्भवन्ति** इत्यस्य केवलानामेव जीवानां धूमादौ प्रवेशमात्रपरत्वेऽप्युपपत्तेः, अग्न्यादिगतिश्रुतिवत् स्पष्टं भूतगतिश्रुत्यभावान्न जीवानां भूतैः सहगमनमिति प्राप्तस्य पूर्वपक्षस्य परिहाराभावाच्च ॥

भाक्तं वेतिसूत्रार्थानुवादनिरासौ

यच्च सप्तमे—न स्वकर्मफलभोगाय जीवानां रंहणं युक्तम् । **"एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति।" "ते चन्द्रं प्राप्यान्नं भवन्ति । तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेतांस्तत्र भक्षयन्ति"** इति च अत्र अन्यत्र च श्रवणात् । न च व्याघ्रादिभिरिव देवैः भक्ष्यमाणानामुपभोगः सम्भवतीति । अत उत्तरं पठति इत्यवतार्य, नात्र कर्मिणो भक्ष्यमाणत्वरूपमन्नत्वं देवानामुच्यते । तथा सति **स्वर्गकामो यजेतेति** विधानं न स्यात् । अन्नशब्दश्चोपभोगसाम्यादनन्नेऽप्युपचर्यमाणो दृश्यते यथा **विशोऽन्नं राज्ञां, पशवोऽन्नं विशामिति** तथा अत्रापि यथा इष्टस्त्रीपुत्रमित्रादयः गुणभावोपगताः गृहपतेरुपभोग्याः, तथा इष्टादिकारिणोऽपि देवानामुपभोग्याः, न मोदकादिवच्चर्वणनिगरणादि-

शेषतात्पर्यचन्द्रिका

विषयतया। **न ह वै देवा अश्नन्ति** इत्यादिश्रुतिविरोधात्। न च तथाप्युपभोगानुपपत्तिः। राजोपजीविनां परिजनानामिवोपपत्तेरिति भाक्तमितिपदं व्याख्यातम्—

अनात्मवित्वाच्च इष्टादिकारिणोऽपि देवोपभोग्यभावः उपपद्यते। तथा हि—[1]**अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्** इति श्रुतिः। अत्र च अमुष्मिंश्च परस्मिंश्च लोके यागादिभिः प्रीणयंस्तदुपजीवी तदादिष्टं फलमुपभुञ्जानः पशुवद्देवानामुपकरोतीति [2]प्रतीयते इत्युत्तरांशव्याख्यानम्—

अनात्मवित्त्वात्तथा हि दर्शयतीत्यस्यापरा व्याख्या—अनात्मविदो ह्येते केवलकर्मिणः इष्टादिकारिणो न ज्ञानकर्मसमुच्चयानुष्ठायिनः। पञ्चाग्निविद्याविहीनत्वाच्चेदमिष्टादिकारिणां गुणवादेनान्नत्वमुद्भाव्यते पञ्चाग्निविज्ञानप्रशंसायै। तथा हि श्रुत्यन्तरं **स सोमलोके विभूतिमनुभूय पुनरावर्तते** इति **अथ ये शतं पितॄणां** [3]**चिरलोकलोकानामानन्दाः स एकः कर्मदेवानां देवानामानन्दो**[4] **ये कर्मणा देवत्वमभिसम्पद्यन्ते** इति च इष्टादिकारिणां दैवैःसह संवसतां भोगप्राप्तिं [5]दर्शयति। एवं भाक्तत्वादत्र भाववचनस्य इष्टादिकारिणोऽत्रजीवा [6]रंहन्तीति प्रतीयन्ते इति चोक्तम्—

---

[1] अथ ह योऽन्यां [2] गम्यते [3] जित
[4] कर्मदेवानामानन्दो [5] दर्शयत. [6] रंहन्त इति

## शेषतात्पर्यचन्द्रिका

तत्र पूर्वसूत्रे परिष्वङ्गमात्रस्य साधितत्वेन तदाक्षेपस्य सङ्गतत्वेऽपि भोगाक्षेपस्य सङ्गत्यभावादवतारस्तावदयुक्तः । न वा भोगः रंहतीति आदावेव प्रकृतः येन कथञ्चिदाक्षिप्येतापि । प्रकृतत्वेऽपि वा अस्य तदानन्तर्यमेव स्यात् । अयुक्तश्चायमाक्षेपः । देवान्नत्वे कर्मिणो विनाशेन भोगाभाव आक्षिप्यते उत वेदनादिप्राप्त्या । न द्वितीयः । **अन्याधिष्ठिते पूर्ववत्** इत्यनेन गतार्थत्वात् । तत्र हि पुण्यकर्मणो वेदप्रामाण्याद्वेदनादिक्लेशाभावः स्पष्टतरमुपपादयिष्यते । नाद्यः । **तस्मिन् यावत्सम्पातमुषित्वा** इत्यादिना पुनरावृत्तिप्रतिपादकेनोत्तर वाक्येन विरोधात् । न च अव्यवहितोत्तरवाक्यस्याज्ञानं सम्भावितम् । जीव-नित्यत्वस्य द्वितीयादौ साधितत्वाच्च । साक्षादेव वैराग्यस्यास्मद्रीत्या आक्षेपसम्भवे, उपसर्जनीभूतस्यार्थाक्षिप्तस्य दूरस्थस्य पादार्थतया विवक्षितवैराग्यप्रतिकूलस्य भोगस्याक्षेपायोगात् । सूत्राक्षरार्थकथनञ्च न सङ्गतम् । कर्मिणो देवान्नत्वं भाक्तं गौणं, अनात्मवित्त्वाच्च कर्मिणो देवोपभोग्यभावः उपपद्यत इति हि किं केन सङ्गतम् । प्रागुपभोग्यत्वहेतोरनुपन्यासेन चशब्दायोगाच्च । उपभोग्यत्वसाम्येनान्नत्वं गौणम्, उपभोग्यत्वञ्चानात्मवित्त्वादिति योजना-यामपि **एवं स देवानाम्** इति देवोपभोग्यत्वाप्रतीतेः श्रुत्युदाहरण मयुक्तम् । देवपशुत्वस्य प्रमाणाभावादुपभोग्यत्वपर्यवसानमिति[1] चेत् तर्हि पक्षसमत्वेनानिर्णायकत्वात् । प्रकृतेऽपि तत एवोपभोग्यत्वपर्यवसानसम्भवेन सन्दिग्धश्रुत्युपन्यासायोगाच्च ॥

[1] प्रमाणबाधा

### शेषतात्पर्यचन्द्रिका

पञ्चाग्निविद्याहीनस्यानात्मवित्त्वात् निन्दार्थवादोऽयम्, **स सोमलोके** इत्यादिश्रुति र्भोगं[1] दर्शयति इत्यनयोः सङ्गत्यभावेन वर्णकान्तरञ्चायुक्तम् । किञ्च कोऽयमर्थवादो नाम । असदर्थवादश्चेदप्रामाण्यम् । गौणार्थवादश्चेन्न वर्णकान्तरम् । सम्भोगसाधनत्वस्यार्थवादत्वोपयोगाभावाच्च ॥

वाचस्पतिमतानुवादनिरासौ

अत्रोक्तं वाचस्पतिना—अनन्नेऽप्यन्नत्वोपचारस्य प्रयोजनं **अनात्मविदो ह्येते** इत्यादिना उच्यते । उपचारनिमित्तमनुपपत्तिमाह **तथाहि दर्शयतीत्यादिना** इति ।

तन्न । भाष्ये गुणवादपदायोगात् । मार्जारादिभोग्यस्यापि मूषकादे र्मोदकादिभोक्तृत्वञ्चास्तीति भोक्तृत्वस्योपचारनिमित्तत्वायोगाच्च ॥

सप्तसूत्री एकमधिकरणमिति पक्षस्य दूषणान्तराणि

मद्रीत्या सप्तानामेषां सूत्राणां प्रत्येकं वैराग्यसाधकत्वसम्भवे[2] एकाधिकरणत्वायोगाच्च । मन्मत इव त्वन्मते पूर्वपक्षे मूतेर्मुक्तित्वपर्यव सानस्याभाषितत्वेन, भाष्यादौ पर्यवसायितस्य भूतपरिष्वङ्गाभावादेः वैराग्य प्रतिकूलताऽभावेनास्याधिकरणस्य पादसङ्गतिश्च न स्यात् । इदं त्वधि करणं तत्र प्रथमे तावत्पादे पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदः प्रदर्श्यते वैराग्यहेतोः इति त्वया भाषितत्वेन अस्मिन्वैराग्यपादे सङ्गतमिति त्वयापि

---

[1] सम्भोगं [2] सम्भवेऽपि

## शेषतात्पर्यचन्द्रिका

वक्तव्यत्वाच्च। मिथ्यात्वप्रतिकूलञ्च[1]। भूतानां जीवपरिष्वङ्गसाधनेन तस्य सत्त्वस्यैव प्राप्तेः। यद्यत्र मिथ्यात्वं सूत्रकृदभिमतं स्यात् तर्हि देवान्नत्वादीनां भाक्तत्ववर्णनं न स्यात्। किन्तु मिथ्यात्ववर्णनमेव स्यात्। एवमुत्तरत्रापि यथासम्भवं मिथ्यात्वप्रतिकूलतोह्या ॥

इति भाक्ताधिकरणम् ॥ ७ ॥

—:o:—

1 चैतत्

॥ अथ कृतात्ययाधिकरणम् ॥ ८ ॥

कृतस्य कर्मणो भोगेन क्षयान्मुक्तिरित्यत आह—

॥ ॐ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॐ ॥ ८ ॥

"ततः शेषेणेमं लोकमायाति। पुनः कर्म कुरुते। पुनर्गच्छति ॥ पुनरागच्छति" इति श्रुतेः,

"भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः ।
कर्म कृत्वा पुनर्गच्छेत्पुनरायाति नित्यशः ॥
आचतुर्दशमाद्वर्षात्कर्माणि नियमेन तु ।
दशावराणां देहानां कारणानि करोत्ययम् ।
अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति ॥"

इत्यादिस्मृतेश्च शेषवानेवायाति ॥ ८ ॥

---

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्रापि भगवत्प्राप्त्यर्थं वैराग्यादिसाधनस्यावश्यानुष्ठेयत्वसाधनादस्ति शास्त्रादिसङ्गतिः। वैराग्यादेः मुमुक्षूणामनपेक्षितत्वे शास्त्रवैयर्थ्यापत्तेस्तस्यावश्यानुष्ठेयत्वं साधनीयमेव। वैराग्यादिकं विषयः। मुमुक्षुणाऽवश्यमनुष्ठेयं न वेति सन्देहः। उक्तन्यायः, तदनपेक्षफलनिष्पत्तिदर्शनं च सन्देहबीजम् ॥

पूर्वपक्षः

पूर्वपक्षयति **कृतस्येति**। कर्मनिबन्धनो हि बन्धः। **कर्मणा** बध्यते जन्तुः इत्यादेः। कर्मणश्च क्षयो भोगेन भवति। न च

### तत्त्वप्रकाशिका

भोगकाले कर्मान्तरापादनेन असमाप्तिः। स्वर्गादिष्वेव कर्मणां सह आगतत्वेन क्षेप्तुं शक्यत्वात्। तत्र कर्मान्तरापादनस्याभावात्। कर्मणां च क्षये तन्मूलस्य संसारस्योच्छेदः स्वयमेव भवतीति किं वैराग्यादिना। अतो व्यर्थमिदं शास्त्रमिति भावः ॥

सिद्धान्तः

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **अत इति**। कृतस्य कर्मणः सहागतत्वेन भोगेन क्षयः स्वत एवेति न युक्तम्। **ततः शेषेण** इति श्रुत्या **भुक्तशेषानुशयवान्** इति स्मृत्या च स्वर्गं गतस्य यथायोग्यं कर्म सहागतमपि किञ्चिद्भुक्तवतः कर्मशेषयुक्ततयैवागमनस्योक्तत्वात्। एवं द्वित्रावर्तनेषु अशेषकर्मसमाप्तिः स्यादिति चेन्न। **पुनः कर्म कुरुते** इति श्रुतौ **कर्म कृत्वा** इति स्मृतौ च आगतस्य पुनः कर्मसम्पादनोक्तेरिति भावः। अल्पापादने कर्मसमाप्तिः स्यादिति शङ्कानिरासायाह **आचतुर्दशमादिति**। चतुर्दशमं वर्षमारभ्येत्यर्थः। दश अवरा येषु ते तथा। अतो वैराग्यादिसाधनमन्तरेण मोक्षाभावात्तदर्थं वैराग्यादिविधायकशास्त्रस्य न वैयर्थ्यमिति सिद्धम् ॥ ८ ॥

---

ठति अपांते

## शेषतात्पर्यचन्द्रिका

आगतिपेटिका

## ॥ ॐ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॐ ॥ ८ ॥

सङ्गतिसंशयौ

यदुपोद्धाततया कर्मणो मोक्षासाधनत्वं वर्णितम्, सैवागतिरत्र विचार्यत इति सङ्गतिः। मास्तु तावत् कर्मफलस्य नित्यत्वात्[1] प्रत्यागत्यभावादनपेक्षालक्षणानुपपत्तिः साधनानुष्ठाने। तथापि **कर्मणा बध्यते जन्तुः** इत्यादेः कर्मायत्तत्वाद्बन्धस्य कर्मणश्च स्वर्गादिभोगनष्टत्वेन पुनः कर्मभूमिप्रापककर्माभावेन स्वत एव बन्धाभावसम्भवेन साधननैरपेक्ष्यरूपानुपपत्तिस्तु स्यादित्युत्थानादनन्तरसङ्गतिः।

अत्र रंहतीतिशब्दसन्निधापितगत्या स्मृता ह्यागतिरेव मोक्षः, उत न। तदर्थं स्वर्गादागन्ता जीवः कर्मशेषवान्न भवति उत भवतीति चिन्ता॥

पूर्वपक्ष.

अत्रागतिरेव मुक्तिर्भवितुमर्हति कर्मबन्धशून्यत्वात् व्यतिरेकेण जीवनवत्। न चात्र हेतुरसिद्धः। कर्मणां भोगप्रदानेन चरितार्थतया समाप्तत्वात्। कर्मणामसमाप्तौ **क्षीणे पुण्ये मर्त्यलोकं विशन्ति** इत्युक्तं कर्मसमाप्तिनिमित्तकमागमनमेव न स्यात्। न चैकदेशेन कर्मणां क्षयः, एकदेशान्तरेण चागमनं भविष्यतीति वाच्यम्। कर्मणां निरवयवत्वेनैकदेशाभावात्। निर्निमित्तं **क्षीणे पुण्ये** इत्यस्य सङ्कोचायोगाच्च। शेषेणागमनकल्पकस्पष्टप्रमाणा-

[1] गत्यभावात्

## शेषतात्पर्यचन्द्रिका

भावाच्च । न च स्वर्गप्रापकज्योतिष्टोमादिजन्यपुण्यनाशेऽपि पूर्वजन्मकृत ब्रह्महत्यादिजन्यपापस्य स्वर्गे भोगाभावेन क्षयाभावात् पुनरसिद्धो हेतुरिति वाच्यम्। स्वर्गभोगकाले प्राग्भवीयतादृशकर्मणां प्रागेव निवृत्तिकल्पनात् । अन्यथा स्वर्गप्राप्तेरेवासम्भवः । न हि सुकृतिनां प्राप्यो लोको दुष्कृतिनामपि प्राप्यो भवति । पुण्यपापयोः साङ्कर्यप्रसङ्गात् । न च स्वर्गादौ पुण्यान्तरस्य वा पापान्तरस्य वा आर्जनं सम्भवति । अकर्मभूमित्वात् । ततश्च स्वर्गादागति रूपा मुक्तिः कर्मक्षयेण भवतीति न साधनमपेक्षत इति पूर्वः पक्षः ॥

सिद्धान्तः

सिद्धान्तस्तु—न आगतिरेव मुक्तिः कर्मसम्बन्धवत्त्वात् जीवनवत् । न च कर्मणो भोगेन क्षीणत्वाध्देतुरसिद्ध इति वाच्यम् । किं प्राग्भवीयानन्तकर्मणां पुण्यपापात्मकानां स्वर्गे भोगेन क्षयः, उत केषाञ्चिदेव । नाद्यः । यत्पुण्यसाध्य.स्वर्गः तत्पुण्यस्यैव भोगेन क्षयेऽपि पुण्यान्तरस्य क्षयाभावात् । अन्यथा **विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्** इत्यादिवचनबोधितब्रह्मलोकप्रापकपुण्यान्तराणामपि स्वर्गलोक एव भोगेन क्षयापत्त्या ब्रह्मलोकप्रापकाभावेन वचनाप्रामाण्यप्रसङ्गात् । ज्योतिष्टोमादीनां दक्षिणाधिक्याल्पत्वविद्वदविद्वत्त्वादिकृतबहुकालीनाल्पकालीन भोगप्रदानशीलानामल्पकालीनभोगप्रदकर्मणः[1] परिपाकेन स्वर्गगतस्याल्पकालीनभोगेनैव बहुकालीनभोगनिर्माणधुरीणस्यापि कर्मणः क्षये तद्बोधकागमाप्रामाण्यापाताच्च । एकस्मिन्नपि कर्मणि भुज्यमाने न निश्शेषं

[1] भोगप्रदानकर्मणः

## शेषतात्पर्यचन्द्रिका

नाशः । यतो हि दृश्यते भुक्तशिष्टकर्मसद्भावानुमापकः इहाप्यतिशयितसुखदुःखादिभोगोऽतिशयितबुद्ध्यादिमत्त्वञ्च । अन्यथेह समकर्मणां सम[2]श्रमिणामेव अल्पावृत्तिबह्वावृत्तिभ्यां ग्रहणावधारणादिकार्यभेदो न स्यात् । "ततः शेषेणेमं लोकमायाति" "भुक्तशेषानुशयवान्" इत्याद्यागमाश्चात्र साक्षिणः ॥

अस्तु वा पुण्यकर्मणां क्षयः । न पापकर्मणाम् । यत्कर्मभोगो यदा समाप्यते तदा तज्जातीयसमस्तकर्मणो नाशनियमेऽपि विजातीयस्य नाशनियमाभावात् । अन्यथा प्राग्भवीयपापवत एव पुण्यकर्मपरिपाकवशेन स्वर्गप्राप्तौ तदीयपापस्यापि नाशेन पापकर्मणो नरकादिप्रापकत्वबोधकागमविरोधः स्यात् । ननु पापकर्मवतः स्वर्गप्राप्तिर्न सम्भवति । अन्यथा पुण्यपापयोः साङ्कर्यप्रसङ्गादित्युक्तमिति चेत्, किमिदं साङ्कर्यम् । तत्फलयोः सुखदुःखयोरेककाले भोगः, उत एकदेशे भोगः । नाद्यः । यस्मिन् क्षणे दुःखभोगः न तस्मिन्नेव सुखभोगः । किन्नाम क्षणान्तर इत्यङ्गीकारात् । न द्वितीयः । सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् । इति सर्वत्र नियमः इति आगमेनैव सामानाधिकरण्यस्य श्रुततया अनिष्टत्वाभावात् । निरवयवत्वञ्च भाष्यादौ निरस्तम् । तदेवं कर्मसम्बन्धवत्त्वादिति हेतुर्नासिद्ध इति, आगतिर्नमुक्तिः कर्मसम्बन्धवत्त्वादिति प्रयोगः सुस्थ इति ॥

---

[2] समाश्रमिणामेव

## शेषतात्पर्यचन्द्रिका

### सूत्राक्षरार्थः

सूत्राक्षरार्थस्तु—कृतस्य कर्मणो भोगेन नाशे आगमनसमये कर्मसम्बन्धो नास्तीति दुराशामात्रम् । यतो दृष्टस्मृतिभ्यां श्रुतिस्मृतिभ्यां सुखातिशयभोगादिरूपभुक्तशेषकर्मानुमापकलिङ्गदर्शनेन चागन्ता अनुशयवान् प्रतीयत इति । एतदर्थञ्च दृष्टपदं लिङ्गदर्शनपरञ्च व्याख्येयम् ॥

### न्यायविवरणगतपूर्वपक्षवाक्यस्य भाष्यगतपूर्वपक्षवाक्येन अगतार्थतायै केषाञ्चन टीकावाक्यानां प्रवृत्तिः

टीकाक्षरार्थस्तु—**सहभावो विमिश्रता** इति सङ्ग्रहे सहभावशब्दविवक्षितसहगमनरूपमाष्टमिकं न्यायं, सम्बन्धिनं फलञ्चाध्याहृत्य विवृण्वत् **न चानुशयस्य**[1] **सहभावात् स्वर्ग एव फलदत्वम्**[2] इत्यन्तं विवरणवाक्यं व्यर्थम् । भाष्य एव पूर्वपक्षस्योक्तत्वादित्याशङ्क्य भाष्योक्तकक्ष्याऽऽक्षेपसमाधानार्थत्वान्न व्यर्थमित्यभिप्रेत्य भाष्योक्तकक्ष्यामनुवदति **कर्मणश्च क्षयो भोगेन भवति इति** । विवरणं व्याख्यातु भ्रान्तस्य शङ्कामनूद्य निराचष्टे **न च भोगकाल इति** । भुवि कस्यचित् कर्मणः भोगकाले कर्मान्तरं करोत्येव । तथा च[3] कृतस्य कर्मणः भुव्येव भोगकाले कर्मान्तरजननसम्भवेन **कृतस्य कर्मणो भोगेन क्षयान्मुक्तिरिति** भाष्यम् अयुक्तम् इति शङ्कितुर्हृदयम् । तत्परिहाराय विवरणं व्याचष्टे **स्वर्गादिष्वेवेति** । भ्रान्तोऽसि । न वयं भूमौ कर्मक्षयान्मुक्तिमापादयामः । येन कर्मान्तरापादनं शङ्कसे । किन्तु स्वर्ग एव । अत्र च अकर्मभूमित्वान्न कर्मान्तरा-

---

[1] चानुशयस्यापि  [2] फलवत्त्वम्  [3] ततश्च

## शेषतात्पर्यचन्द्रिका

पादनशङ्का । न च स्वर्गे नास्ति कर्मेति वाच्यम् । भूतसहगमनन्यायेन कर्मणामपि श्रद्धाशब्देनोपलक्षणया सहगमनप्रत्यायनस्यावश्यकत्वात् । तथा च एवमभिप्रायेणाप्रवृत्तस्यापि भाष्यस्याभिप्रायमन्यथा गृहीत्वा शङ्कितुर्भ्रान्तस्य शङ्कां भाष्याभिप्रायकथनव्याजेन परिहर्तुं विवरणवाक्यं सार्थकमेवेति भावः ॥

न्यायविवरणगतसिद्धान्तभागस्य आचतुर्दशमादिति
भाष्यस्य च व्याख्यानार्थानां टीकावाक्यानां
आशयवर्णनम्

**योग्यता बलवत्वञ्च** इति सङ्ग्रहे योग्यतापदस्यावृत्त्या विवक्षिताष्टमिकसिद्धान्तन्यायविवरणं **भुक्तशेषानुशयवान्** इत्यादि वचनात् **यथायोग्यमेव फलदानोपपत्तेः** इत्यन्तं व्याचष्टे **स्वर्गं गतस्य यथायोग्यमिति** । सहगतमपि कर्म यथायोग्यं किञ्चिद्भुक्तवतः स्वर्गं गतस्येत्यन्वयः । कर्मणां सहगतत्वमात्रेण न कार्त्स्न्येन भोगः । किन्तु तत्तत्पुरुषयोग्यतानुसारेण सशेषभोग एवेति भावः । चतुर्दशवर्षपर्यन्तमेव कर्मार्जनं ततो नास्ति कर्मार्जनमिति यावज्जीवं भोगेन कर्मक्षयसम्भवादुक्तमयुक्तमित्यतो नात्र आङ् मर्यादायाम् । किन्तु **एन्द्रतोऽखिलैः** इत्यादाविव अभिविधाविति सम्यग्व्याख्याति **चतुर्दशवर्षमारभ्येति** ॥

**इति कृतात्ययाधिकरणम् ॥ ८ ॥**

—:o:—

अथ यथेताधिकरणम् ॥ ९ ॥

"यथेतमेव गच्छति यथेतमागच्छति स भुङ्क्ते स कर्म कुरुते स परिवर्तते" इति गतिप्रकारेणाऽऽगतिः प्रतीयते । अतो ब्रूते—

॥ ॐ यथेतमनेवञ्च ॐ ॥ ९ ॥

"धूमादभ्रमभ्रादाकाशमाकाशाच्चन्द्रलोकं यथेतमाकाशमाकाशाद्वायुं, वायुर्भूत्वा धूमो भवति, धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति" इति काषायणश्रुतेः, यथागतमन्यथा च ॥ ९ ॥

---

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनवैराग्याय स्वर्गादागतिप्रकारनिरूपणादस्ति शास्त्रादिसङ्गतिः । यद्यागमनस्य क्लेशिष्ठता न प्रतिपाद्येत तर्हि न स्वर्गेऽपि वैराग्यं स्यादिति सा निरूपणीया । प्रकृतमागमनं विषयः । तत्किं गतिप्रकारेणैवान्यथा वा इति सन्देहः । लौकिकागमनेषूभयथादर्शनं सन्देहबीजम्॥

पूर्वपक्षः

पूर्वपक्षयति **यथेति** । गमनप्रकारेणैवागमनम् । **यथेतमागच्छति** इति श्रुतेः । येन च पथा गतः तस्य स्मृतिविषयत्वेन मनसि सहभावाच्च । न हि विज्ञातं पन्थानं विहायाविज्ञातेन आगमने प्रयोजनमस्ति । अतः स्वर्गफलस्य

## तत्त्वप्रकाशिका

अतिक्लेशानुषङ्गाभावान्न तत्र वैराग्यमापादनीयमिति भावः। यथा स्वर्गादिमं लोकं प्रति स्वयमितं तथा गच्छति, यथास्माल्लोकात् स्वर्गमितं, तथा आगच्छतीत्यर्थः ॥

सिध्दान्तः

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे अत इति। गमनप्रकारादन्यथाऽऽगमनम्। न चैवं श्रुतिविरोधः। क्वचिद्गमनप्रकारेणागमनस्याङ्गीकृतत्वेन श्रुतेस्तद्विषयत्वात्। कुत एतत्। धूमादिति विशेषश्रुतेरेव। न च युक्तिविरोधः। आगमने जीवस्य अस्वातन्त्र्येण तत्स्मरणस्यागमनानुपयोगित्वादिति भावः। तस्मात् आगमनादावतिक्लेशयुक्तत्वेन स्वर्गफलेऽपि विरक्तेन भवितव्यमिति सिद्धम् ॥ ९ ॥

—:o:—

ठति अपोति

## शेषतात्पर्यचन्द्रिका

आगतिपेटिका

# ॥ ॐ यथेतमनेवञ्च ॐ ॥ ९ ॥

सङ्गतिसंशयौ

अत्र पूर्वाधिकरणे विहिते विमताऽऽगति र्न मुक्तिः कर्मसम्बन्धवत्त्वात् इति प्रयोगे क्लेशवत्त्वादिरूपोपाधिरिति वा, गमनं यत्कर्मनिमित्तं तस्य पुण्यकर्मणो निःशेषक्षयाभावेनागमनकालेऽपि सत्त्वात्तदेव यथेतमेवागमनं प्रापयतीति वा, दृष्टस्मृतिभ्यां चेत्कर्मणोऽनुशयः आगमनेऽङ्गीक्रियते तर्हि ताभ्यामेव यथेतमेवागमनमङ्गीकार्यमिति वा शङ्कनादनन्तरपेटिकासङ्गती ।

अत एवात्रागति गेमनप्रकारेणैवोतान्यथापि । तदर्थं तत्र निमित्तमस्ति न वा । तदर्थं कर्मेच्छादि निमित्तं भवितुं योग्यं न वेति चिन्ता ॥

पूर्वपक्षः

तत्र—गमनप्रकारेणैवागमनं नान्यथापि । निमित्ताभावात् । तत्र हि स्वस्येच्छाभावो निमित्तमुतेश्वरस्य । नाद्यः । परिचितमार्गेच्छायाः न्यायसिद्धत्वेनासिद्धेः । नान्त्यः । कर्मशेषादिमत्त्वेनेश्वरेच्छासिद्धेः । तस्याः कार्यैकोन्नेयतया तदभावानुमाने चान्योन्याश्रयः । किञ्च कर्म तावद्गमननिमित्तम् । कर्मणा विना धूमादिमार्गे गमनानुपपत्तेः । आगमनस्यापि तदेव निमित्तमित्युपगन्तव्यम् । **रमणीयचरणा रमणीयां योनिमापद्यन्ते** इति वचनाद्रमणीयशरीरपर्यन्तस्य कार्यजातस्य तत्कृतत्वावगमेन तन्मध्यपात्यागमनस्यापि तत्कृतत्वावश्यम्भावात् । न हि निमित्ते सत्यपि कार्यानुत्पादः शङ्क्यः ।

## शेषतात्पर्यचन्द्रिका

निमित्तत्वव्याघातात् । न चैवं मार्गान्तरगमने निमित्तमस्ति । न तावत् स्वस्येच्छा निमित्तम् । अपरिचितमार्गे तदयोगात् । नापीश्वरस्य । कर्माभावे हि तथा स्यादेव । पूर्वाधिकरणे च समर्थितं कर्मानुशयोऽस्तीति । तथा च पूर्वकर्मयोग्यतादेशकालाद्यनुसारेणैवेश्वरेच्छा कल्पनीया । अन्यथा तद्बोधकागमाप्रामाण्यापत्तेः । तथा च आगतौ क्लेशाभावः सिद्ध्यतीति आगति र्न मुक्तिः कर्मसम्बन्धवत्त्वादित्यस्मिन्प्रयोगे क्लेशवत्त्वमुपाधिः । न च घटादौ साध्यव्यापकताभङ्गः शङ्क्यः । साधनावच्छिन्नसाध्यव्यापकतोपपत्तेरिति पूर्वः पक्षः ॥

सिध्दान्तः

अत्रोच्यते—अन्यथाप्यागमनमङ्गीकार्यम् । तथा वचनादेव । किं हि वचनं न कुर्यात् । यदत्रोक्तम् आगन्तुरिच्छारूपं निमित्तमस्तीति । तन्न । तस्या जीवस्वातन्त्र्यप्रसङ्गेण निमित्तत्वासम्मतेः । ईश्वरस्य स्वातन्त्र्यात्तदिच्छा निमित्तमस्तीति चेत् । सा किं गमनप्रकारेणैनमागमयिष्यामीत्येवंरूपा उत गमनप्रकारेणैवेतिरूपा । नाद्यः । अविरोधात् । न द्वितीयः । कार्यैकोन्नेयायाः तस्याः श्रुत्यनुसारेणैव वक्तव्यतया तदसिद्धेः । अत एव दृष्टस्मृतिभ्यां कर्मानुशयवदिहापि ताभ्यामेव तत्सिद्धिरिति परास्तम् । तथा चागतौ क्लेशसिद्धावुपाधिः साधनव्यापक एवेति पूर्वप्रयोगः साधुरेवेति ॥

## शेषतात्पर्यचन्द्रिका

स्वयूथ्यैः कैश्चित् प्रदर्शितं सङ्गतिप्रकारं निरसितुं
टीकाचार्यैः स्वयं सङ्गत्युक्तिरित्यवतरणम्

टीकाक्षरार्थस्तु—अत्र प्रसङ्गादागतिप्रकारश्चिन्त्यत इति सङ्गतिः। नेदञ्च साधनानुष्ठाने वैराग्ये वोपयुज्यते। अतः प्रासङ्गिकी सङ्गतिरिति स्वयूथ्यानामेव व्याख्यानम्, उक्तरीत्या साक्षात्सङ्गतिसम्भवेऽपि प्रासङ्गिक्या अङ्गीकारे अधिकरणान्तरेऽपि तथा स्यात्। न चेष्टापत्तिः। प्रायेण वैराग्यार्थं गत्यादिनिरूपणा प्रथमपाद[2] इति हि भाष्यं स्यात्। अपशूद्राद्यधिकरणव्यावृत्तिवदेव एतदाद्यधिकरणव्यावृत्तेरप्यावश्यकत्वादित्ययुक्तमिति मन्वानः स्वयं सङ्गतिमाह **अत्र भगवत्प्राप्तिसाधनवैराग्यायेति**॥

भाष्यविवरणघटकपूर्वपक्षवाक्ययोः क्रमेण व्याख्यानं टीकायामिति निरूपणम्

अत्र **सहभावो विमिश्रता** इति सङ्ग्रहे सहभावशब्दविवक्षितमेव न्यायं मार्गस्येति सम्बन्धिपदाध्याहारेण साध्यप्रदर्शनेन च नवमाधिकरणसङ्गतत्वेनापि विवृण्वत् **न च मार्गस्यापि सहभावाद्यथागतमेवागमनमिति नियमः** इत्यन्तं विवरणवाक्यं भाष्योक्तश्रुत्या पूर्वपक्षस्य, सिद्धान्त्यभिमतश्रुत्या प्रतिरोधेन मन्दाशङ्काव्यावृत्तये युक्त्यन्तरोपन्यासपरमित्यभिप्रेत्य क्रमेण व्याख्यातुं भाष्यं तावद्व्याचष्टे **गमनप्रकारेणैवेति**। मनसीति पदमध्याहृत्य विवरणं व्याचष्टे **येन च पथेति**। मार्गस्य मनसि सहभावमुपपादयितुं **स्मृतिविषयत्वेनेति**। यथा कर्मणः सहभावादागमनं प्रसक्तं तथा मार्गस्यापीत्येपरर्थ इति, एवकारव्याख्यानमेव नियम इतीति विवरणे द्रष्टव्यम्॥

---

2 प्रथमे पादे

## शेषतात्पर्यचन्द्रिका

भाष्यविवरणघटकसिद्धान्तभागयो र्युगपत् व्याख्यानमिति निरूपणम्

योग्यताबलवत्त्वं चेत्युक्तन्यायमेव आवर्त्य एतदधिकरणसङ्गतत्वेनापि विवृण्वन् **वचनबलाद्यथायोग्यमेवागमनोपपत्तेः** इति विवरणम्, अनतिभिन्नार्थत्वात् भाष्यञ्च युगपद्व्याचष्टे **गमनप्रकारादिति** । शिष्टं सुगमम् ॥

इति यथेताधिकरणम् ॥ ९ ॥

—:०:—

अथ चरणाधिकरणम् ॥ १० ॥

॥ ॐ चरणादिति चेन्न तदुपलक्षणार्थेति
काष्र्णाजिनिः ॐ ॥ १०॥

"तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयामि"ति श्रुतेः चरणफलमेव गमनागमनं न यज्ञादिकृतः ।

"आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः ।
अशुद्धिदस्त्वनाचारश्चरणं तूभयं स्मृतम् ॥"

इति स्मृतेरिति चेन्न । यज्ञाद्युपलक्षणार्था चरणादिश्रुतिरिति काष्र्णाजिनिर्मन्यते ॥ १० ॥

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्रेश्वरप्राप्तिसाधनवैराग्यार्थं गतागतस्य कर्मफलत्वसाधनादस्ति शास्त्रादिसङ्गतिः । यदि गतागतक्लेशस्य न कर्मसाध्यत्वं, न तर्हि काम्ये कर्मण्ययं विरज्येत । अतः तत्समर्थनीयम् । प्रकृतं गतागतं विषयः । यज्ञादिकर्मफलं न वेति सन्देहः । तन्निमित्तानिमित्तयोरुभयोरपि सहभावदर्शनं सन्देहबीजम् ॥

पूर्वपक्षः

पूर्वपक्षस्य सूत्र एवोक्तत्वात् तदुपन्यस्य पूर्वपक्षांश तावद्व्याचष्टे **चरणादिति** । न यज्ञादिकर्मफलं गतागतम् । किन्नाम **चरणफलमेव** । **तद्य इह रमणीयचरणाः** इति **श्रुतेः** । **न च वाच्यं यज्ञादिकर्मण एव चरणत्वाच्छून्यमभिधानं चरणफलमेव गमनागमनं न यज्ञादिकृत** इतीति । **स यथाकारी यथाचारी तथा भवति** इति **श्रुतेः आचार इति**

## तत्त्वप्रकाशिका

**सम्प्रोक्तः** इति स्मृतेश्च कर्मणोऽन्यस्य चरणस्य प्रतीतेः। अथापि स्यात्। **अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति** इत्युपक्रम्य **तस्मिन्यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनरावर्तन्ते** इति श्रुतेः गतागतस्य यज्ञादिफलत्वप्रतीतेरयुक्तं चरणफलत्वकल्पनमिति। मैवम्। तत्रापि गतागतस्य चरणफलत्वेनैवाङ्गीकारात्। न च तत्र चरणशब्दो नास्ति। **इष्टापूर्ते दत्तमित्युपासते** इत्युपशब्दस्यैव तद्वाचकत्वात्। स हि समीपवर्ति वक्ति। चरणमेव यज्ञादिसमीपवर्ति। तत्र येयं गतागतस्य कर्मफलत्वप्रतीतिरुपजायते शब्दात् सा च करणचरणे सहैवोक्त्वा स्वर्गगतागतयोश्च सहोक्तिनिमित्ता भ्रान्तिरेव। न च मन्तव्यं कुत एतत्कल्प्यत इति। चरणश्रुतेः विषयान्तराभावेनाप्रामाण्यभयात् सावकाशश्रुतेरर्थान्तरकल्पनस्य न्यायप्राप्तत्वात्। अतो गतागतस्यान्यफलत्वात् कर्मणा पुनरावृत्तिशून्यस्वर्गसिद्धेः न तत्र वैराग्यमापाद्यमिति भावः॥

काष्र्णाजिनिमतेन सिद्धान्तः

सिद्धान्तांशं व्याचष्टे नेति। न गतागतस्य कर्मफलत्वाभावः। **नान्यः पन्थाः** इति श्रुत्या गतागतशून्यफलस्य कर्मसाध्यतायाः निषिद्धत्वात्। **इष्टापूर्तं मन्यमाना** इति श्रुत्या, **त्रैविद्या माम्** इत्यादिस्मृत्या च गतागतस्य कर्मफलत्वोक्तेश्च। न च **तद्य इह रमणीयचरणा** इति श्रुतिविरोधः। तस्याः उदाहृतश्रुत्याद्यनुरोधेनाजहल्लक्षणया यज्ञाद्यर्थत्वोपपत्तेरिति काष्र्णाजिनिराचार्यो मन्यत इति भावः। एतेन यत् एतछ्रुत्यवष्टम्भेनादिवाक्यस्यार्थान्तरपरिकल्पनं तदपि परास्तं भवति। **अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसम्भवन्ति** इत्यादिसमाख्याविरुद्धं च॥ १०॥

॥ ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॐ ॥ ११ ॥

तर्हि 'रमणीयाः' 'कपूया' इत्येव स्यात् । चरणशब्दस्य आनर्थक्यमिति चेन्न। चरणापेक्षत्वाद्रमणीयत्वादेस्तज्ज्ञापनार्थत्वेनोपपत्तेः॥ ११ ॥

---

### तत्त्वप्रकाशिका

उक्तेऽर्थे आक्षेपः

उक्तमाक्षिप्य समादधत् सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे **आनर्थक्यमिति**। कथं यज्ञाद्युपलक्षणार्था **रमणीयचरणा** इत्यादिश्रुतिः। तथात्वे चरणशब्दस्यानर्थक्यप्रसङ्गात्। रमणीयकपूयपदाभ्यामेव तदुपलक्षणस्य सम्भवात्, यज्ञादिकारिणां प्रकृतत्वेन ये यज्ञादिकारिणो रमणीयाः कपूयाश्चेति। न चानर्थक्यं युक्तमिति भावः॥

तत्परिहारः

परिहारांशं व्याचष्टे **नेति**। किमत्र चरणशब्दानर्थक्यप्रसङ्गाद्यज्ञाद्युपलक्षणाभावसाधनम् उतोपलक्षणपक्षमभ्युपेत्य चरणपदकृत्यविचारः। नाद्यः। तथात्वे श्रुत्यादिविरोधस्योक्तत्वात्। द्वितीये ब्रूमः। सत्यं रमणीयादिपदेन शक्यं यज्ञाद्युपलक्षणम्। तथापि तन्मात्रोक्तौ यज्ञादिकर्तृत्वे समाने कथमेषां रमणीयत्वमन्येषां कपूयत्वमिति शङ्का स्यात्। तां निराकर्तुं, साध्वसाधुयज्ञादिमत्त्वस्य **आचार इति सम्प्रोक्त** इति स्मृतेराचाराद्यपेक्षत्वात्, रमणीयकपूयचरणाभ्यां यज्ञादिकारिणामपि रमणीयत्वादीति ज्ञापनाय चरणशब्दस्य सार्थक्योपपत्तेः। एवञ्च सति रमणीयचरणत्वेन ये साधवो यज्ञादिकृत इत्यादिवाक्ययोजना स्यादितिभावः॥ ११ ॥

॥ ॐ सुकृतदुष्कृते एवेति तु बादरिः ॐ ॥ १२ ॥

"धर्मं चरत माऽधर्मम्" इत्यादि प्रयोगात् सुकृतदुष्कृते एव चरणशब्दोक्ते इति बादरिर्मन्यते। तुशब्दात् स्वसिद्धान्तोऽपि स एवेति सूचयति। "तुशब्दस्तु विशेषे स्यात्स्वसिद्धान्तेऽवधारणे" इति नाममहोदधौ ॥ १२ ॥

---

तत्त्वप्रकाशिका

बादरिमतेन स्वमतेन च सिद्धान्तः

प्रकारान्तरेण चरणश्रुतिं व्याकुर्वत्सूत्रं पठित्वा व्याचष्टे सुकृतेति। न चरणश्रुतिः यज्ञाद्युपलक्षणत्वेनैवोक्ताऽविरोधिनी। किन्नाम साध्वसाधुतया कृतयज्ञादिकर्मवाचिनी च भवति। यथा खलु चरणशब्दस्य कर्माङ्गे प्रयोगः तथा कर्मण्यपि प्रयोगात्। प्रयुज्यते हि धर्मं कुरुतेत्यर्थे चरतेति। साधारणश्रुतेश्चात्र बाधकवशात् साङ्गकर्मार्थत्वस्यैवोपपत्तेरिति बादरिराचार्यो मन्यत इति भावः। परमतमभिधाय सूत्रकारः स्वमतं कुतो न वक्तीत्यत आह तुशब्दादिति। तुशब्दस्यैतदर्थाभिधायकत्वं कुत इत्यत आह तुशब्द इति। अतो मतागतस्य कर्मफलत्वात् क्लेशसाधने तस्मिन् तत्साध्ये च विरक्तेन भाव्यमिति सिद्धम् ॥ १२ ॥

—:o:—

## शेषतात्पर्यचन्द्रिका

### पुण्यपेटिका

# ॥ ॐ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॐ ॥

अस्याधिकरणस्य दशमत्वमेवोचितमिति स्थापनम्

एवं षट्सूत्र्या गतिपेटिकया, त्रिसूत्र्या चागतिपेटिकया, गत्यागति स्वरूपनिरूपणव्याजेन वैराग्यादिसाधनस्य फलमुखो व्यतिरेकव्यभिचारः परिहृतः। अथ साधनमुखः परिह्रियते। ननु भावतनये सोऽपि परिहृतः। सत्यम्। आगतिपेटिकोपोद्घातत्वेन तस्य प्रवृत्ततयार्थात् परिहारेऽपि नैदम्पर्यम्। पुण्यमादाय व्यभिचाराभावेऽपि पापमादाय व्यभिचारः स्यादितिशङ्कया प्रवर्तिष्यमाणायाः पापपेटिकायाः एतदधिकरणोपजीवित्वात् ततः प्राग-स्यारम्भः ॥

सङ्गतिः

कर्मणो निरूपितगत्यागत्यादिफलकत्वसमर्थनेन व्यभिचारपरिहाराद्वा, गतागतयोः सक्रमयोः निरूपितयोः तत्साधनविचारोऽवसरप्राप्त इति वा, यथा वचनबलाद्यथेतमनेवं च आगमनमङ्गीकृतम्, तथा चरणफलमप्यङ्गी-क्रियतामित्युत्थानाद्वानन्तरसङ्गतिः ॥

संशयः

अत्र वेदविहितं पुण्यं कर्म मोक्षसाधनं न वेति चिन्ता। तदर्थं गता-गतमाचारफलमुत कर्मफलमिति। तदर्थं **रमणीयचरणा रमणीयां योनि-मापद्यन्त** इति वचने चरणशब्देन आचार एव विवक्षितः, उत कर्मापीति।

## शेषतात्पर्यचन्द्रिका

यद्याचार एव विवक्षितः तदा गतागतस्याचारफलत्वात् वेदविहितस्य कर्मणो नैष्फल्यायोगेन मोक्ष एव फलं कल्प्यमिति मोक्षसाधनत्वसिद्धिरित्यादिः फलफलिभावः ॥

पूर्वपक्षः

कर्म मोक्षसाधनं, तदितरासाधनत्वे सति वेदविहितत्वात् । ननु **इष्टापूर्ते दत्तमित्युपासते** इत्युपक्रम्य श्रुतं गतागतं प्रति इष्टापूर्तशब्दितकर्मैव साधनं प्रतीयत इति सत्यन्तमसिद्धमिति चेन्न । **रमणीयचरणा** इत्युत्तर वाक्यानुसारेण अप्शब्दानुसारेण श्रद्धावाक्यस्येव **इष्टापूर्ते** इत्यस्याप्याचार परत्वेनैव नेयत्वात् । उपशब्दस्यैव तत्परत्वाच्च । चरणशब्द एव कर्मपरोऽस्त्विति चेत् , **आचार इति सम्प्रोक्तः** इति वचनविरोधेन तत्र शक्त्यभावात् । लक्षणायां च प्रथमनयविरोधादनुपपत्तिप्रयोजनयोरभावाच्चेति पूर्वः पक्षः ॥

सिध्दान्तः

सिद्धान्तस्तु—गतागतं कर्मफलम् । **इष्टापूर्ते** इति वचनात् । रमणीयवाक्यविरोध इति चेत् । अत्रास्ति मतद्वयम् । **आचार इति सम्प्रोक्त** इति वचनानुसारेण चरणशब्दः आचार एव शक्त इत्याद्यम् । धर्मं कुरुत इत्यर्थे चरत इति प्रयोगादाचारविशिष्टकर्मवाचक इति द्वितीयम् । तत्राद्ये मते चरणशब्दे लक्षणया न विरोधः । अन्यथा इष्टापूर्तवाक्यविरोधः । न च प्रथमनयविरोधः । तत्र सन्दिग्धश्रद्धाशब्दः निश्चितेनोपसंहारस्थाप्शब्देन निर्णेय इत्युक्तम् । इह पुनर्मतद्वयप्रवृत्त्या सन्दिग्धोपसंहारस्थचरणशब्दो

## शेषतात्पर्यचन्द्रिका

निश्चितोपक्रमस्थेष्टापूर्तशब्देन निर्णय इत्युच्यते । अतो न विरोधः । नहि सावकाशा सन्दिग्धा वा श्रुतिर्निरवकाशेन निश्चितेन च लिङ्गेन बाध्येत्येतावता श्रुतिप्राबल्यसिद्धान्तहानिः । कुण्डपायिनामयने विहिते कर्मणि नैयमिकाग्निहोत्रधर्मप्रतिपत्तिरग्निहोत्रपदलक्षणाया इव आचारपूर्वककृतकर्मण एव साधुत्वप्रतिपत्तिः चरणशब्दस्य कर्मणि लक्षणायाः प्रयोजनमस्तीति युक्ता लक्षणा । विशिष्टविशेष्यवाचकयोः चरणेष्टापूर्तशब्दयोर्न विरोध इति द्वितीय मतमपि युक्तमिति सिद्धान्तः ॥

### सूत्रक्रमौचित्यम्

लक्षणापक्षकक्षीकारेण तत्र प्राप्तदोषनिराकारणपूर्वकं प्रथमपक्षोपक्षेपानन्तरं तन्निर्मुक्तस्वपक्षोपन्यास इति सूत्रक्रमः । चरणशब्दवाच्ये एव न लक्ष्ये इति सूत्रस्थैवकारस्य अध्याहृतेनान्वयः । **तदुपलक्षणार्था** इति पूर्वसूत्रे श्रवणादिति ध्येयम् ॥

### परमतीयाधिकरणानुवादः

अत्र **कृतात्ययेऽनुशयवान्** इत्यारभ्य **अनिष्टादिकारिणाम्** इत्यतः प्राक् पञ्चसूत्रीं द्वितीयस्य प्रथमशेषतया पाठं विधाय चतुःसूत्रीं कृत्वोभाभ्यामेकमधिकरणं व्याख्यातम् । तथा हि—**तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनरावर्तन्ते** इत्यत्र किं भुक्तकृत्स्नकर्माणः इष्टादिकारिणोऽवरोहन्त्युताभुक्तफलककर्मवन्तः इति सन्देहे उपक्रमगतात् **यावत्सम्पातम्** इतिवचनात्,

शेषतात्पर्यचन्द्रिका

**प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ।**
**तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे ॥**

इति श्रुत्यन्तराच्च भुक्तकृत्स्नकर्माणोऽवरोहन्ति । न च तदानीं तदीयानन्तकर्मणां सामस्त्येन भोगे नियामकाभावः । अस्ति तावदिष्टादिकारिणोऽवरोहकाले प्रायणम् । न च तद्यज्ञफलम् । स्वर्गादिभोगस्यैव तत्फलत्वात् । किन्तु कर्मान्तरफलमेव । तथा चाविशेषात्तदीयानन्तकर्माण्यपि व्यञ्जयति दीप इव घटपटादीन् । व्यञ्जनं चात्र फलाभिमुखीकरणमेव । तथा च प्रायणेन तदीयानन्तकर्मणां भोगः सेत्स्यति । न च प्रायणकाल एव तदीयानामशेषाणां कर्मणां भुक्तत्वेन नाशात् कारणाभावेनावरोहस्याकस्मिकत्वापत्तिः । न च स्वर्गार्थं कृतकर्मण एव नाशो न सर्वकर्मणाम् । तत्रापि न निश्शेषं नाशः । किन्तु दध्याज्यादिस्नेहद्रव्यपूर्णभाण्डं न सर्वात्मना रिच्यते किन्तु सशेषमेव यथा, कर्मापि भुज्यमानं तथैवेति वाच्यम् । यतः कार्यविरोधित्वाददृष्टस्य न भुक्तफलस्य शेषावस्थानं न्याय्यम् इति वाच्यम् । यथा **"अथ यत्पितृभ्यो निमृणाति तेन पितॄणां लोकम्" "यस्मिञ्जात एतामिष्टिं निर्वपति स पूतः ।"** इति पुत्रपितृनिष्ठाभ्यां श्राद्धेष्टिरूपाभ्यां कर्मभ्यां पितृपुत्रादिगतं फलमुत्पद्यते, तथा स्वर्गारूढस्य तदीयभार्यापुत्रादिकृतापचारादवरोह उत्पद्यते **"पतत्यर्धशरीरेण यस्य भर्या सुरां पिबेत्"** इति श्रवणादिति पूर्वः पक्षः । तदुक्तम्—

**यावद्यत्किञ्चशब्दाभ्यां सर्वकर्माभिधानतः ।**
**मृतौ सर्वक्रियाव्यक्तिरवरोहोऽन्यकर्मतः ॥**

## शेषतात्पर्यचन्द्रिका

यावद्यत्किञ्चशब्दयोः स्वर्गार्थकृतकर्मविषयत्वेन सङ्कोचोपपत्तेः न स्वर्गगत[1]पुंनिष्ठसर्वकर्मणां नाशोऽङ्गीकार्यः। सङ्कोचस्तु **रमणीयां योनिमापद्यन्ते** इत्युपसंहारविरोधात् न्याय्य एव। न चोपसंहारे रमणीयं चरणं येषामिति विग्रहे भार्यापुत्रादिकृतचरणं परम्परया इष्टादिकारिसम्बद्धं भविष्यतीति वाच्यम्। साक्षात्सम्बन्धलाभे परम्पराश्रयणस्यान्याय्यत्वादिति सिद्धान्तः। यथाह—

**बहुव्रीहिसमासोऽयं मतुबर्थे [2]प्रयुज्यते।**
**साक्षात्सम्बन्धलाभे च न युज्येत परम्परा**—इति॥

उक्तपूर्वपक्षनिराकरणम्

तत्र स्वर्गार्थकर्ममात्रस्य निश्शेषनाशशङ्कासम्भवेऽपि **नाभुक्तं क्षीयते कर्म** इति सर्वप्रसिद्धवचनात् सर्वकर्मनाशशङ्काया असम्भवात् प्रायणस्य व्यञ्जकत्वान्यथानुपपत्त्या फलाभिमुखीकरणरूपव्यञ्जनसम्भवेऽपि कर्मणां भोगासिद्धेः, स्वर्गार्थकृतकर्मणो निश्शेषनाशस्य अदृष्टस्य कार्यविरोधित्वादिति युक्तियुक्तत्वेन तद्विषयस्य प्रबलस्य पूर्वपक्षस्य सम्भवे फल्गुपूर्वपक्षाश्रयणायोगाच्च पूर्वपक्षस्तावदयुक्तः॥

उक्तसिद्धान्तनिराकरणम्

सिद्धान्तोऽपि स्वर्गार्थे कृतकर्मणः शेषमभ्युपेत्य प्रवर्तते, उत तदनभ्युपगमेन। नाद्यः। **आमुष्मिकफले कर्मजाते उपभुक्तेऽवशिष्टमैहि-**

[1] पुरुषनिष्ठ　[2] प्रतीयते

शेषतात्पर्यचन्द्रिका

**कफलं कर्मान्तरजातमनुशयः,** तद्वन्तोऽवरोहन्तीति त्वद्भाष्यविरोधात् । तदीयसर्वकर्मणां नाश इति पूर्वपक्षप्रतिद्वन्द्वितया तदीयसर्वकर्मणां नाशाभावस्यैवेह वक्तव्यतया स्वर्गार्थकृतकर्मशेषस्य अवक्तव्यत्वाच्च । न द्वितीयः । **कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक** इष्यते इति वचनात् कर्मनाशकत्वेनाभिमतप्रायश्चित्तादेरिव भोगस्यापि कर्मनाशकत्वसाम्येन कृत्स्नकर्मनाशकत्वायोगात् । **वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुल** इत्यादित्वद्भाष्योदाहृतस्मृतिविरोधाच्च । एतत्स्मृतिसमाख्यानात् सौत्रानुशयशब्दस्य शेषार्थत्वे तद्विषयविरोधस्या[1]पाताच्च । न ह्यनारब्धे कर्मणि शेषशब्दो युक्तः । स्वर्गार्थकृतकर्मणो भुक्तफलस्यावशेषः कश्चित्तु भाण्डानुसारिस्नेहवदनुशयो नामेति पक्षस्य त्वयोदाहृतस्मृतेः सौत्रानुशयपदाच्च युक्तस्य दुराग्रहमात्रेण[2] दूषणायोगाच्च । न च फलविरोधित्वाददृष्टस्य भोगरूपे फले उत्पन्ने कथमदृष्टशेषोऽनुवर्ततामिति वाच्यम् । न हि सर्वात्मना कर्मणां भोगं प्रतिजानीमहे । किन्तु बहुतरभोगः स्वर्गे, तच्छेषभोगस्तु पृथिव्यामिति । स्नेहभाण्डादौ दर्शनाच्च ॥

कृतात्ययसूत्रार्थानुवादनिरासौ

यत्तु प्रथमसूत्राक्षरव्याख्यानम्—स्वर्गार्थं कृतस्य कर्मणो निश्शेषं नाशे कर्मान्तररूपानुशयवानायाति तद्य इह **रमणीयचरणा** इति प्रत्यक्षश्रुतिः,

[1] तद्विरोधस्या　　[2] मन्त्रेण

## शेषतात्पर्यचन्द्रिका

**वर्णा आश्रमाश्च स्वकर्मनिष्ठाः** इत्यादिस्मृतिश्चास्ति यतः । ते चावरोहन्तो यथेतमनेवं च अवरोहन्ति । अथवा दृष्टशब्देनोच्चावचरूपः सम्भोग उच्यते इति—

तदयुक्तम् । कृतस्य कृत्स्नस्यात्यये कर्मान्तरवानायातीत्यस्य यथा श्रुतस्य व्याहतत्वात् । स्वर्गार्थं कृतस्येति विवक्षायामनुशयशब्दस्वारस्येन बहुतरमत्ययस्यैव विवक्षणीयत्वात्, कृतस्य कर्मणोऽत्यये तच्छेषवानायातीत्युक्ते व्याहत्यभावाच्च । श्रुतेः प्रत्यक्षविशेषणवैयर्थ्याच्च । उच्चावचरूपभोगे दृष्टशब्दप्रयोगाभावाच्च । उच्चावचभोगस्य दृष्टत्वादिति व्याख्याने किमनेनोपन्यस्तं स्यात् । श्रुतिवचनमिति चेन्न । योजनाभेदाभावप्रसङ्गात् । अनुमानमिति चेन्न । **न शब्दप्रमाणकानामीदृशी कल्पनाऽवकल्पते** इति स्वोक्तिविरोधात् । ते च अवरोहन्तो यथेतमनेवं चावरोहन्तीति सिद्धवन्निर्देशरूपत्वेन सूत्रस्याल्पार्थत्वप्राप्तेः । मद्रीत्या वैराग्याक्षेपसम्भवे तदनाक्षेपकत्वायोगाच्च । मन्मतेऽपि तदाक्षेपः कर्तुं शक्यत एवेति चेत् तर्ह्यधिकरणान्तरमिदं स्यात् । तदेवमधिकरणान्तरं भवितुं योग्यस्यापि तदनादृत्य गुणसूत्रत्वं वानभ्युपेत्यैकसूत्रत्वेन पाठः, सम्प्रदायानभिज्ञत्वनिबन्धनः स्वकीयभाष्यस्य दुर्भाष्यतां प्रकटयतीत्यलम् ॥

सूत्रार्थोऽपि स्वसिध्दान्तविरुध्दः । **तद्य इह रमणीयचरणाः** इत्युपसंहारश्रुतेः प्राबल्यापातात् ॥

## शेषतात्पर्यचन्द्रिका

भामत्युक्तपक्षप्रतिक्षेपः

अत्रोक्तं वाचस्पतिना—न ह्यसावुपसंहारानुरोधेऽपि यावत्सम्पातश्रुतिरसङ्कुचद्वृत्तिरुपपत्तुमर्हति। न हि यावन्तः सम्पाताः यावतां पुंसां वा सम्पाताः सर्वे तत्रेष्टादिकारिणो भोगेन क्षयं नीयन्ते। पुरुषान्तराश्रयाणां कर्माशयानां तद्भोगेन क्षयेऽतिप्रसङ्गात्। चिरोपभुक्तानाञ्च कर्माशयानां सतां चन्द्रमण्डलोपभोगेनानपनयात। तथा च स्वयं सङ्कुचन्ती यावत्पदश्रुतिरुपसंहारानुरोधप्राप्तमपि सङ्कोचनमनुमन्यत इति ॥

तत्र प्रष्टव्यम्—आद्ये कोऽयमतिप्रसङ्गो नामेति। अकृतप्रायश्चित्तानामभुक्तफलानाञ्च कर्मणां क्षयः स्यादिति चेन्न। तद्य इह **रमणीयचरणा** इति श्रुतिं विनात्रेष्टापत्तौ बाधकाभावात्। वाक्यान्तरमेव बाधकमितिचेत्। न हीदं युक्तं—सम्पातश्रुतिः वाक्यशेषविरोधान्न सङ्कुचद्वृत्तिः, किन्तु तत्समानार्थस्थलान्तरस्थवाक्यविरोधादेवेति। चिरभोक्तव्यानामपि कर्मणां नाशे रमणीयश्रुतिमन्तरा बाधकाभावाच्च। अन्यथा अग्नीषोमीयवाक्याननुरोधेऽपि हिंसामात्रस्य निषेधेऽतिप्रसङ्गात् स्वयमेव सङ्कुचद्वृत्तिः **न हिंस्यादिति** श्रुतिरग्नीषोमीयश्रुत्यनुरोधप्राप्तमपि सङ्कोचनमनुमन्यत इति स्यात् ॥

पूर्वपक्षन्यायविवरणव्याख्यानभूतटीकाऽऽशयवर्णनम्।

टीकाक्षरार्थस्तु—अत्र सहपाठो यद्यपि पूर्वपक्षस्य साक्षान्नोपपादकः। किन्तु सौत्रचरणशब्दघटितश्रुतिविशेष एव। तथापि **अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते** इति श्रुताविष्टापूर्तशब्दितपुण्यकर्मफलप्रतीतेः, अत

## शेषतात्पर्यचन्द्रिका

एव तथा कथयन्ति च केचिदिति न सौत्रो हेतुर्युक्त इति चोद्ये, श्रुतौ पुण्यकर्मफलत्वप्रतीतिर्भ्रान्तिरेवेति तद्विरोधोऽकिञ्चित्कर इति बहिरेव समाधानमभिप्रेत्य, भ्रान्तेर्दोषजन्यत्वनियमेनेह दोषादर्शनात् न भ्रान्तिरिति पुनश्चोद्यमध्याहृत्य, तदुत्तरत्वेन **'सहभावो विमिश्रता'** इत्यत्रावृत्तसहभावशब्द विवक्षतसहपाठरूपदशमाधिकरणन्यायः प्रवृत्त इत्यभिप्रेत्य, केन कस्य सहपाठ इति सम्बन्धिद्वयापेक्षत्वात् तदुभयमध्याहारसूचनाभ्यां विवृण्वत् **न च इष्टापूर्ते दत्तमित्युपासते इत्युपशब्देन इष्टादिभिराचारस्य सह पाठात् चरणफलं पुनरावृत्तिं करणफलत्वेन भ्रमाद्वदन्तीति वाच्यम्** इति वाक्यं उपशब्देनेत्यतः परं वाच्यस्येति षष्ठ्यन्तस्याध्याहृतस्य व्यवहितेनाचारस्ये-त्यनेन सम्बन्ध इत्यभिप्रेत्य व्याचष्टे **अथापि स्यादिति। वाचं ब्रह्म** इत्यादौ सामानाधिकरण्यादैक्यभ्रान्तिः। तया च केचिद्यथातथावदन्ति, तथेहाप्युप-शब्दार्थस्याचारस्येष्टापूर्तेन, आचारफलस्य गतागतस्य पुण्यफलेन स्वर्गेण च सह पाठात् गतागतस्य पुण्यफलत्वभ्रान्तिः। तथा (तया) च केचित्तथा वदन्तीति समुदायार्थोऽनुसन्धेयः॥

### भष्यविवरणोभयानुसारिसिद्धान्तटीकावतारणम्

अत्र योग्यतेत्युक्तावृत्त्या एतदधिकरणसङ्गतत्वेन योग्यतान्यायमपेक्षि-ताध्याहारपूर्वकं मतद्वयसाधारण्येन विवृण्वत् **नान्यः पन्था इत्यादि वचनादेवोभयोरपि चरणशब्देनैवोक्तेर्योग्यत्वात्** इति वाक्यं साक्षा-त्सिद्धान्तसङ्गतत्वेनादौ संयोज्य, ततो भाष्यं योज्यमित्यभिसन्धिः सौत्र-प्रतिज्ञां विवृणोति **न गतागतस्येति**॥

## शेषतात्पर्यचन्द्रिका

चरणश्रुतेः साङ्गकर्मार्थित्वनिर्वाहकटीकावतारणम्

**बाधकवशात् साङ्गकर्मार्थित्वस्यैवोपपत्तेरिति** । चरणशब्दः प्रयोग बलेनाचारे कर्मणि च शक्तः । यद्यत्राचारपरः **नान्यः पन्थाः** इति श्रुति-विरोधः । यदि च कर्मपरस्तदा **रमणीयचरणाः कपूयचरणा** इति यज्ञादि-(धि) कारिष्वेव निर्निमित्तं विशेषोक्त्ययोग इति बाधकवशेनैव विशेषण-विशेष्योभयवाचकस्य रमणीयकपूयचरणविशिष्टकर्मपरत्वं वक्तव्यम् ॥

न चैवमस्मिन्मतेऽपि लक्षणापत्त्या कार्ष्णाजिनिमताद्भेदो न स्यादिति वाच्यम् । विशेष्ये लक्षणाया निरूढत्वेन शक्तितुल्यत्वात् । अत एव इन्द्र पीतादिशब्देषु लक्षणापत्त्या तत्पुरुषं दूषयित्वाऽन्यपदार्थलक्षणायास्तुल्यत्वेऽपि निरूढतया केवलपुरुषबुद्धिकल्पितलक्षणापेक्षया ज्यायस्त्वेन बहुव्रीहिमाश्रित्या-नैन्द्रेष्वपि प्रदानेषु समन्त्रकमेव भक्षणमङ्गीकृतम् ॥

यद्वा—**धर्मं चरत** इत्यत्र साङ्गकर्मप्रतीतेस्साङ्गकर्मवाचकत्वम् । **चरणं तूभयं मतमिति** वचनादाचारवाचकत्वमङ्गीकृतमेव । न चैवमने कार्थत्वे किमाचारमात्रपरित्यागेन साङ्गकर्मपरत्वग्रहणेनेति वाच्यम् । उक्तबाधकवशादेवेति न बादरिमते लक्षणास्वीकारः ॥

यद्वा केवलकर्मण्याचारे च प्रयोगादक्षादिशब्दवदुभयवाचक एव चरणशब्दः। तथाप्युक्तबाधकवशात् तन्त्रन्यायेनाङ्गाङ्गिरूपोभयवाचक इतिभावः॥

पुण्यपेटिकोपसंहारः

तदेवमनया द्वादशसूत्र्या पुण्यपेटिकया गतागतस्वरूपनिरूपणव्याजेन क्लेशानुषङ्ग बुद्धिस्थेऽधिकारिणः स्वत एव तत्र विरागा भवन्तीति सिद्धम्॥

**इति चरणाधिकरणम् ॥ १० ॥**

॥ अथानिष्टादिकार्यधिकरणम् ॥ ११ ॥

पुण्यकृतामेव गमनागमने नेतरेषामित्यत आह ।

॥ ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ ॥ १३ ॥

"तद्य इह शुभ(भा)कृतो येचाशुभकृतस्ते शुभमशुभमनुभूयावर्तन्ते पुनः कर्म कुर्वन्ति पुनर्गच्छन्ती"ति भाल्लवेयश्रुतौ ॥ १३ ॥

## तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनवैराग्यायानिष्टादिकारिणां गतागतादिदुःख समर्थनादस्ति शास्त्रादिसङ्गतिः । अनिष्टादिकारिणां गतागतादिदुःखाभावे न तत्र विरक्तिस्स्यादतस्तत्साधनीयम् । प्रकृतगतागतादि विषयः । तत् किमिष्टादिकारिणामेवोत सर्वाज्ञानिनामिति सन्देहः । विशेषोक्तिरज्ञानित्वं च सन्देहबीजम् ॥

पूर्वपक्षः

पूर्वपक्षयति **पुण्येति** । इष्टादिपुण्यकृतामेव अज्ञानां गतागतादि, न त्वनिष्टादिकारिणामप्यज्ञानाम्[1] । इष्टादिकारिणां प्रत्यवायभयवत्त्वेन तदुपपत्तेः, । अन्येषाञ्च तदभावात् । **बिभ्यत् पतति पादपात्** इति न्यायात् । फलकामित्वाच्चेष्टादिकारिणां तदुपपत्तिः । अनिष्टादिकारिणां न हि कामोऽस्ति । **कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र । पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रतिमुच्यन्ति[2] कामाः** इतिश्रुतेः ।

[1] अज्ञानिनाम् ।

[2] प्रविलीयन्ति

## ॐ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॐ ॥ १४ ॥

संयमनमनुभूय केषाञ्चिदारोहः केषाञ्चिदवरोहः । तुशब्दोऽवधारणे। सर्वे वा एतेऽशुभकृतः संयमने प्रपतन्ति। तत्र ह ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति, नैवैत उत्तिष्ठन्तेऽपि कर्हिचिद्धत्रं वा एतादित्याहुः । अथ येऽन्ये ब्रह्मद्विषस्तेनाः सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्तीति कौण्ठरव्यश्रुतेः ॥ १४ ॥

### तत्त्वप्रकाशिका

इष्टादिकारिणस्तु स्वयमेवात्मानं विधिप्रतिषेधाभ्यां बध्नन्ति, नेतरे । अतः पुण्यकृतामेव गमनागमनादि । इतरेषान्तु तद्रहितो मोक्षएवेति पुण्ये तत्फले च विरक्त्या भाव्यं, नान्यत्रेति भावः ॥

### सिद्धान्त.

अनिष्टादिकारिणामपि गतागतं फलम्

सिध्दान्तयत्सूत्रमवतार्य तदुपात्तश्रुतिमेवोदाहरति । अत इति । न केवलमिष्टादिकारिणामेव गतागतम् । किन्नामानिष्टादिकारिणामपि । तद्य इह इति श्रुतत्वादित्यर्थः । अनिष्टादिकारिण इति तदकारिणस्तद्विरुध्दकारिणश्चोच्यन्ते। चशब्दो दुःखान्तरसमुच्चयार्थः । तदेवोत्तरसूत्रेऽनूद्यते॥ १३॥

अनिष्टादिकारिणां केषाञ्चिदतिदुःखानुभवः

न केवलमनिष्टादिकारिणां गतागतमात्रमतिदुःखं चान्यदस्तीत्येतदर्थप्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे संयमनेत्विति[1]। अस्ति तावत्सर्वेषामनिष्टादि

[1] संयमनेत्वति ।

## ॥ ॐ स्मरन्ति च ॐ ॥ १५ ॥

गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः ।
तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम् ॥
महातमसि मग्नानां न तेषामुत्थितिः क्वचित् ।
इतरेषान्तु पपानामुत्थानं विद्यतेऽपि च ॥
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
इति सर्वत्र नियमः पञ्चकष्टे तु तत्सदा—इत्यादि ॥ १५ ॥

तत्त्वप्रकाशिका

कारिणामज्ञानां यमशासनम् । तदनुभवावसाने केषाञ्चिदनिष्टादिकारिणां ततो व्युत्थानं भवति । केषाञ्चित्ततोऽपि नीचस्थले नित्यनरके पातो भवति । कुतः तेषामनिष्टादिकारिणामेवंविधगतेः श्रुतिसिध्दत्वादिति भावः । यथा नित्यनरकपाते विकल्पस्तथा संयमनेऽप्यस्तीति नाशङ्क्यमितिभावेनाह **तुशब्द इति** । अशुभकृत इति न शुभकृत इति च अर्थः । द्वेषःप्रतीपबुद्धिः । अवमतिर्नीचतया विज्ञानम् । शाठ्यं गूढद्वेषः । मौर्ख्यं तत्त्वज्ञानराहित्यम् । **नैवैत उत्तिष्ठन्ते** इत्यस्योपपादनं **वत्रमिति** । स्वस्थितान् वारयति गन्तुं न मुञ्चतीत्यर्थः ॥ १४ ॥

उक्तार्थे स्मृत्युदाहरणं बाधकपरिहरणञ्च

उक्तार्थं स्मृत्या च समर्थयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति **स्मरन्ति चेति** । रौरवादिपञ्चभ्योऽतिकष्टे नित्यनरके दुःखमेव सदेत्यर्थः । सूत्रे बहुवचनश्रवणात् **इत्यादि स्मरन्तीत्युक्तम्** । तेन **तानहं द्विषतः** इत्यादेः सङ्ग्रहः । न च भयकामनाद्यभावविरोधः । अबिभ्यता फलकामनाशून्येनाप्युपभुक्तविषस्य मरणहेतुत्वदर्शनात् । अतोऽनिष्टादिकारिणामपि महानर्थवत्त्वेन मोक्षाशाया दूरोत्सारितत्वाद्भवितव्यं तत्रापि विरक्तेनेति सिद्धम् ॥ १५॥

## ॥ ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ ॥ १३ ॥

पापपेटिकायाः पुण्यपेटिकानन्तर्यौचित्यम्

पुण्ये क्लेशानुषङ्गाभाव आपाततो यथा प्रतीयते न तथा पाप इति वा, न पुण्यसाधारणमेव पापे वैराग्यमापाद्यम्, किन्तु ततोऽतिशयेनेति प्रतिपादनाद्वा, विचारबहुत्वाद्वा पुण्यपेटिकानन्तरं पापपेटिकाऽऽरभ्यते । अत एवात्र प्राचीना द्वादशसूत्री पुण्यपेटिकेति ज्ञापयितुमेव **पुण्यकृतामेव गमनागमने** इत्यवतारभाष्ये द्वादशसूत्रीप्रमेयानुवादः । सङ्क्षेपभाष्ये च **शुभेन कर्मणा स्वर्गं** इति द्वादशसूत्रीप्रमेयसङ्ग्रहः ॥

सङ्गतिः

**सुकृतदुष्कृते एवेति** दुष्कृतं प्रकृतं विचार्यत इति वा, दुष्कृतस्य **तत्र ह[1] ये परद्विषः** इत्यादिश्रुत्याऽपुनरावृत्तिफलश्रवणान्न गतागतं फलमिति वा, यदि **इष्टापूर्ते दत्तमित्युपासते** इत्युपक्रमानुसारेणोपसंहाररूपरमणीयचरणश्रुतिर्नीयते तर्हि **इष्टापूर्ते दत्तम्** इत्युपक्रमानुसारेण गतागतं पुण्यस्यैव फलं स्यादिति वाऽऽक्षेपाद्वा अनन्तरसङ्गतिः ॥

संशयः

अत्र गतागतं पापफलं न भवत्युत भवतीति, तदर्थं पापफलत्वे बाधकमस्ति न वेति, तदर्थं **नैवैत उत्तिष्ठन्तेऽपि कर्हिचित्** इति कौण्ठरव्यश्रुतिः पापकृतां प्रत्यागमननिषेधिका न वेति, तदर्थं श्रुतिरेकवाक्यतया नेयोत भिन्नवाक्यतयेति चिन्तनीयम् ॥

---

[1] तत्र ये

## शेषतात्पर्यचन्द्रिका

पूर्वपक्षः

तत्र पापफलं नेति पूर्वः पक्षः। प्रमाणाभावात्। प्रत्युत **इष्टापूर्ते** इति श्रुत्या पुण्यफलत्वप्रतीतेश्च। न च पापोपलक्षणार्था सा। चरणश्रुताविवेह प्रयोजनादर्शनात्। न च पुण्यफलत्वस्याप्यङ्गीकारादविरोधः। नित्यवच्छ्रवणविरोधात्। **नैवैत उत्तिष्ठन्तेऽपि कर्हिचित्** इति पापिनां प्रत्यागमननिषेधाच्च। न च **ये परद्विषः** इत्यादिना पापविशेषवतामेव[1] प्रत्यागमननिषेधः। **सर्वे वा एते अशुभकृतः संयमने प्रपतन्ति** इत्यविशेषेणोपक्रमात्। न च **ये परद्विषः** इत्युपसंहारप्राबल्यान्नैवमिति वाच्यम्। पूर्वाधिकरणे उपक्रमानुसारस्यापि स्वीकृतत्वात्। न चोभयोर्भिन्नविषयत्वं वाक्यभेदापत्तेरिति ॥

सिद्धान्तः

सिद्धान्तस्तु—पापिनां फलं भवन्त्येव। **तद्य इह शुभकृतो ये चाशुभकृतस्ते शुभमनुभूयावर्तन्ते**[2] इति तत्फलत्वश्रवणात्। इष्टापूर्तश्रुतिस्तु तत्फलस्याप्यङ्गीकारान्न विरुद्धा। न च **तत्र ह ये परद्विषः**[3] इत्यादिकौण्ठरव्यश्रुतिबाधः। तस्या भगवद्द्वेषादिरूपपापविशेषविषयत्वात्। न च **सर्वे वा एतेऽशुभकृतः** इत्युपक्रमविरोधः। स्यादयं यदि श्रुतिस्थयोरनयोः पूर्वोत्तरवाक्ययोरुपक्रमोपसंहारभावः स्यात्। न चैवम्। किन्तु **तत्र ये परद्विषः** इति तद्विशेषानारभ्य तेषां तमसि पतनमभिधीयते। अत एव **अथ येऽन्ये ब्रह्मद्विषः स्तेनाः** इत्युत्तरवाक्ये तदन्येषां प्रत्यागतिः श्रूयते। अत एव च **तत्र ह ये परद्विषः** इति प्रकरणान्तरत्वप्रापकस्तत्रशब्दः ॥

---

1 वतामपि  2 शुभमशुभ  3 तत्र ये

## शेषतात्पर्यचन्द्रिका

न चैवं वाक्यभेदापत्तिः । सति कर्मभेदज्ञापके **'यजति' 'ददाति' 'जुहोति' 'समिधो यजति' 'तनूनपातं यजति' 'सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' 'अथैष ज्योतिरथैष विश्वज्योतिः'** इत्यादाविव तस्या अदोषत्वात् । अत एव व्रीह्यादिवाक्य इव नित्यवच्छ्रवणमसिद्धम् । अत एव "तत्र ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खाः सर्वे वा एते अशुभकृतः" इति एकवाक्यतया योजना निरस्ता । तत्रेति निर्धारण-सप्तमीस्वारस्यविरोधात् । **अथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापाः इति ते वै तदनुभूयेमं लोकमनुव्रजन्ति** इत्युत्तरवाक्यविरोधाच्च ॥

न चेदमपि वाक्यं **ते वै ततोऽवरुह्य तमसि प्रपतन्ति** इत्यनेनैक-वाक्यतया कथञ्चिन्नेयमिति वाच्यम् । तद्य इह इत्यादिभाल्लवेयश्रुतौ स्पष्टमा-वृत्तिश्रवणात् । न च तदपि वाक्यं **पुनरागच्छन्ति** इत्यतः परं **ते वै ततो-ऽवरुह्य तमसि प्रपतन्ति** इति वाक्याध्याहारेण योजनीयम्, तथा च श्रुत्यन्तरमनुगृहीतं भवतीति वाच्यम् ॥

**गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः ।**
**तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम् ॥**
**महातमसि मग्नानां न तेषामुत्थितिः क्वचित् ।**
**इतरेषां तु पापानां ह्युत्थानं[1] विद्यते क्वचित्[2] ॥**

---

[1] व्युत्थानं [2] विद्यतेऽपि च ॥

### शेषतात्पर्यचन्द्रिका

इत्यादिकया पापद्वैविध्यश्रवणेन फलद्वयव्यवस्थापिकया हरिद्वेषादिव्यतिरिक्त-ब्रह्महत्यादिपापानां गतागतं फलमिति प्रतिपादनात्, अध्याहारादिसापेक्षकु-सृष्टिमार्गानुसरणायुक्तेः ॥

अत एव श्रुतेः प्राबल्यात्स्मृतिबाध इति चायुक्तम्। अनध्याहारे विरोधाभावात्। अध्याहारस्य च स्मृतिविरोधेनानुन्मेषात्। श्रुतिस्मृत्योः स्वभावतः प्राबल्यदौर्बल्ययोर्व्यवस्थापितत्वेऽपि स्मृतेर्निरवकाशत्वप्रयुक्त-प्राबल्यसम्भवाच्च। इष्टादिकारिवदेव पापकारिणामप्यज्ञानित्वाविशेषाद्गता-गतयोर्न्यायप्राप्तत्वाच्च। न चाज्ञानित्वमप्रयोजकं गतागतं प्रति, किन्तु प्रत्यवाय-भयवत्त्वम्, **कामान् यः कामयते मन्यमानः** इति श्रुतेः फलकामत्वं वा प्रयोजकम्, न चोभयं पापिजनेऽस्तीति वाच्यम्। अबिभ्यता फलकामशून्येन चोपभुक्तविषे मरणहेतुत्वदर्शनेन तयोः फलं प्रत्यप्रयोजकत्वादिति ॥

#### सूत्रक्रमः

सूत्रक्रमस्तु—न केवलमनिष्टादिकारिणां गतागतमात्रम्। अतिदुः-खञ्चान्यदस्तीत्यर्थप्रतिपादनस्यानिष्टादिकारिणां गतागतमस्तीत्यर्थोपजीवनेनास्य प्रथमता। अत्रत्यचशब्दसूचितार्थप्रतिपादकत्वेन संयमनसूत्रस्य द्वितीयता। यद्यपि तृतीयेन श्रुत्युपन्यासानन्तरं स्मृत्युपन्यासस्य युक्तत्वात् द्वितीयेन भवितव्यम्। तथापि सूत्रद्वयार्थे स्मृत्युपन्यासरूपतयाऽन्त्यतेति ॥

#### टीकोक्तसन्देहस्वरूपनिर्वहणम्

टीकाक्षरार्थस्तु—**उत सर्वाज्ञानिनामिति**। यद्यप्यत्रानिष्टादिकारि-णामिति सूत्रस्वारस्याय किमिष्टादिकारिणामेवोतानिष्टादिकारिणामपीति

## शेषतात्पर्यचन्द्रिका

सन्देहो युक्तः, न तु सर्वाज्ञानिनामिति । तथापि **इष्टापूर्ते दत्तम्** इति विशिष्य श्रवणात् सन्देहबीजान्वेषणप्रयासनिरासाय,[1] सङ्क्षेपभाष्ये **ज्ञानेनैव परं पदम्** इत्युक्तिस्वारस्यायाज्ञानिनामेव गतागतादि प्रतिपादनीयमिति सूचनाय तथा सन्देहप्रदर्शनमिति ज्ञेयम् ॥

पूर्वपक्षटीकायाः भाष्यविवरणमूलकत्वम्

**विमिश्रते**त्युक्तमेतदधिकरणन्यायं सम्बन्धिनिरूपणेन विवृण्वत् **न च भयफलकामादिमिश्रबुद्धित्वादिष्टादिकारिणां संसारः, अनिष्टादिकारिणां तदभावान्मुक्तिरिति वाच्यम्** इति वाक्यं भयादिमिश्रबुद्धित्वाभावः पापकारिषु प्रत्यवायाज्ञानित्वादेव सुलभ इत्युपपादनसौकर्याय प्रत्यवायाज्ञानिपदयोरध्याहारमभिप्रेत्य, भाष्यञ्च साक्षात्साध्यपरतयोपपादयन् सहैव व्याचष्टे **इष्टादिपुण्यकृतामेवाज्ञानामिति**।[2] **इष्टादिकारिणस्त्विति** । पूर्वतन्त्रकुशलाः प्रत्यवायं फलं च जानन्त्येव। पापकारिणस्तु विधिं वा निषेधं वा नैव जानते । न चैवमुभयोरज्ञत्वोक्तिविरोधः । ब्रह्ममात्रब्रह्मकर्मोभयाज्ञानित्वाभ्यां तदुपपत्तेरिति भावः । **स्वात्मानं बध्नन्ति** संसरन्ति । अनेन विवरणोक्तं साध्यं व्याख्यातम् । **तद्रहितो मोक्ष एवेति** । कृतस्य कर्मणः फलवत्त्वनियमात् पुनरावृत्त्यसम्भवेऽपुनरावृत्तिसम्भव इति भावः ॥

सिद्धान्तटीकायाः सूत्रभाष्यविवरणमूलकत्वम्

अत्र **बलवत्त्वमि**त्युक्तसैद्धान्तिकन्यायं, स्वार्थे भावप्रत्ययः, दोषश्रुतिशब्दश्चाध्याहार्य इत्यभिप्रेत्य विवृण्वत् **तेषां प्रबलदोषश्रुतेः** इति वाक्यं,

---

[1] बीजाभावान्वेषण [2] इष्टादिपुण्यकृतामेवेति अज्ञानिनामिति च

## शेषतात्पर्यचन्द्रिका

भाष्योक्तश्रुतिग्रहणपूर्वकं भाष्यसूत्रयोर्योजनां च सूचयन् व्याचष्टे **न केवलमिति**। अनेन यतःशब्दाध्याहारेण सूत्रं योजनीयमित्युक्तं भवति। अत्र गतागताख्यदोषप्रतिपादकप्रबलश्रुतेरिति विवरणयोजना द्रष्टव्या। **तद्य इह शुभकृतो ये चाशुभकृतः** इति श्रुत्यनुसारेणानिष्टादिकारिणामपीति सौत्रं पदं नञस्तदभावतद्विरुद्धार्थकत्वग्रहणेन नञ्व्यत्यासेन योजनीयमित्याह **अनिष्टादिकारिण इतीति**। आदिशब्दग्राह्यश्च रमणीयाचारकपूयाचारादि द्रष्टव्यम्। अपिनैव समुच्चयसिद्धेश्चो व्यर्थ इत्यत आह **चशब्द इति**। उपलक्षणमेतत्। न केवलमनिषिद्धं श्रुतश्चेत्यर्थ इत्यपि ग्राह्यम्॥

'संयमने' 'स्मरन्ति' सूत्रीयटीकाभागावतारणम्

संयमनसूत्रव्याख्यानमनेन क्रियत इति सूचयन्नवतारव्याजेन विवरणं प्रकारान्तरेणापि व्याचष्टे **न केवलमनिष्टादिकारिणामिति**। प्रबलदोषश्रुतेरित्युक्त्या सूचितदोषकथनेन मिश्रबुद्धित्वन्यायं निराह **न च भयफलकामनेति**॥

**इति अनिष्टादिकार्यधिकरणम्॥ ११॥**

—:o:—

अथ सप्ताधिकरणम् ॥ १२ ॥

## ॥ ॐ अपि सप्त ॐ ॥ १६ ॥

रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा ।
कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि च ॥
तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तितौ ।
इति सप्त प्रधानानि बलीयो ह्युत्तरोत्तरम् ॥
एतानि क्रमशो गत्वैवाऽऽरोहोऽथावरोहणम् ॥
इति भारते ॥ १६ ॥

### तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र परमात्मप्राप्तिसाधनवैराग्यार्थं नित्यनरकसमर्थनादस्ति शास्त्रादिसङ्गतिः । यदि भगवद्द्वेषादिफलस्य न नित्यदुःखात्मकत्वं समर्थ्यते न तर्हि ब्रह्महननादिभ्योऽतिशयेन वैराग्यं भवतीत्यतस्तत् समर्थनीयम् । प्रकृतं नरकमेव विषयः । नित्यफलप्रदमुत नेति सन्देहः । पूर्वोक्तिर्लोकदृष्टिश्च[1] सन्देहबीजम् ॥

पूर्वपक्षः

पुनरावृत्तिमदेव न तु नित्यफलप्रदमिति पूर्वः पक्षः । यावदिन्द्राश्चतुर्दश इत्यादौ नरकभोगस्यानित्यत्वोक्तेः । न चोभयं युक्तम् । विरोधात् । न चैकस्यैव पुरुषभेदेन व्यवस्था । चकार नरकं शून्यम् इत्यादेः । अतो यदुक्तं संयमने तु इति सोक्तिर्विरुद्धा । एवञ्च फलसाम्यान्न भगवद्द्वेषादावितरपापेभ्योऽतिशयेन वैराग्यं प्रयोजकमिति ॥

[1] लौकिकदृष्टिश्च

## तत्त्वप्रकाशिका

सिद्धान्त.

सिद्धान्तयत्सूत्रं पठति **अपीति** । अपिपदेन **स्मरन्ति** इत्यनुकृष्यते । तां स्मृतिञ्चोदाहरति **रौरव इति** । नरकभोगो भवत्येव नित्यः । **नैवैत उत्तिष्ठन्तेऽपि कर्हिचित्** इत्यादिश्रुतेः । अनित्यत्वोक्तिविरोध इति चेन्न । भवेदयं विरोधो यदि नरकैक्यं स्यात् । नैतदस्ति । किं तर्हि सप्तापि सन्ति । तेषु च नित्यानित्यत्वविभागेनोपपत्तेः । कुतो नरकाणां सप्तत्वम्, तथात्वेऽपि कुतो नित्यानित्यतया विभाग इति चेत् **रौरव इति** स्मृतेरित्यर्थः । महान् महारौरवः । एतानि पञ्च । सप्त प्रधानानीत्यनेन बहुनरकाभिधायकपुराणविरोधोऽपि परिहृतः । अतो भगवद्द्वेषादिफलस्य नरकस्य नित्यत्वादितरपापेभ्योऽतिशयेन तत्र वैराग्येन भवितव्यमिति सिद्धम् ॥ १६ ॥

—:o:—

ठति **अपीति**

## शेषतात्पर्यचन्द्रिका

पापपेटिका

### ॥ ॐ अपि सप्त ॐ ॥ १६ ॥

सङ्गतिसंशयौ

साधारणपापनिरूपणानन्तरं असाधारणपापं निरूप्यते इति वा, संयमनादिसूत्रोक्तावरोहादीहाक्षिप्य समाधीयत इति वा पेटिकानन्तरसङ्गती ।

नरकं पुनरावृत्तिमद्भवति न वा, तदर्थं द्वितीये पक्षे बाधकमस्ति न वा, तदर्थं नरके द्वैविध्यं नास्त्युतास्तीति संशयः ॥

सन्देहोत्पादस्थापनम्

न च **'नैवैत उत्तिष्ठन्तेऽपि कर्हिचित् ।' 'महातमसि मग्नानां न तेषामुत्थितिः क्वचित् ।'** इति श्रुतिस्मृतिभ्यां निर्णीतत्वात् सन्देहाभावः शङ्कनीयः । यावत् तत्र प्राप्तविरोधो न परिह्रियते तावद्-निर्णीतप्रायत्वात् । अन्यथा जिज्ञासासूत्रविषयेण **तद्विजिज्ञासस्व** इति वाक्येनैव निर्णीतत्वात् पुनः प्रत्यधिकरणं संशयानुत्पादः स्यात् ॥

द्वितीयाध्यायसङ्गतस्यापि विरोधपरिहारस्य

अत्र समावेशोपपत्तिः

नन्वथापि विरोधपरिहारस्य द्वितीये सङ्गतत्वेन कथमत्र सङ्गतिः । न च तत्र श्रुतेः स्मृत्यादिविरोधः परिहृतः, अत्र तु उक्तसङ्गत्या श्रुतिस्मृत्योः स्मृतिविरोधः परिह्रियत इति वाच्यम् । प्रतियोग्यनुयोगिभेदमात्रेण बहु-

## शेषतात्पर्यचन्द्रिका

विप्रकर्षायोगात् । स्मृतेरपि श्रुतिमूलत्वेन तत्रैव पर्यवसानाच्चेति चेन्न । किमत्र सङ्गतिरेव नेत्युच्यते, उत तत्सत्त्वेऽपि तत्रैव निवेशोऽस्त्विति । नाद्यः । उक्तत्वात् । द्वितीये कुत एतदिति वक्तव्यम् । सङ्गतत्वादिति चेत्, किमिहासङ्गतम् । अथाप्यत्र यदि न निवेशस्तत्रापि स न स्यादित्यनारम्भ एव प्राप्नोति । बहुदूरविप्रकर्षस्य तु हरिद्वेषादावतिशयेन वैराग्योत्पादः फलम् । द्वितीयेऽस्य निवेशे तत्रत्याधिकरणैः पाशुपतादिस्मृतिविरोधपरिहारेण विष्णुकारणत्वदार्ढ्यवदनेनापि नरकस्य नित्यत्वादिदार्ढ्यमेव स्यात् । अत एव जन्माद्यधिकरणानां भगवन्माहात्म्यपर्यवसानेन भक्तिपादे सङ्गतत्वेऽपि जीवभेददृढीकरणाद्यर्थमन्यत्र निवेशः । इह पूर्वसङ्गतिवत्तत्र सङ्गत्यस्फुरणाच्च । एवमुपरिष्टादपि द्रष्टव्यम् ॥

पूर्वपक्षः

तत्र नरकं पुनरावृत्तिमदेव । न च '**नैवेत उत्तिष्ठन्तेऽपि कर्हिचित्**' '**महातमसि मग्नानां**' इत्यादिविरोधः । **यावदिन्द्राः** इति वाक्यविरोधेन तस्य नरके बिभीषिकार्थं[1] **हेलयो हेलय**[2] इति वदन्त इत्यादिवदर्थवादत्वेनोपपत्तेः । तदविरोधाय नरकद्वैविध्यकल्पने अपाम इत्यादिश्रुत्यविरोधाय स्वर्गद्वैविध्यमपि स्यात् । **चकार नरकं शून्यम्** इति निरवकाशवचनात् **यावदिन्द्रा** इत्यादेरेवार्थवादत्वकल्पना युक्तेति पूर्वः पक्षः ॥

---

[1] विभीषिकार्थं [2] हेऽलयो हेऽलय

## शेषतात्पर्यचन्द्रिका

सिद्धान्तः

सिद्धान्तस्तु—नरकमपुनरावृत्तिमत्, कौण्ठरव्यश्रुतेरेव । न च **यावदिन्द्रा** इत्यादिस्मृतिविरोधः । **विरोधेत्वनपेक्षम्** इति न्यायेनाप्रमाणत्वात् । **महातमसि मग्नानाम्** इति स्मृतेश्च । ननु स्मृतेरपि वेदमूलत्वात् तद्व्याख्यानरूपत्वात् निर्णायकत्वात् सर्वज्ञप्रणीतत्वाच्च नाप्रामाण्यं युक्तम् । अत एव विरोधाधिकरणे भाष्यकृदधिकरणमपोद्य वार्तिककृत् शाक्यादिस्मृतीरुदाजहार । सत्यम् । तथाप्यावृत्तितदभावयोरेकस्मिन्नसम्भवादेव नरकद्वैविध्यसिद्धेः[1] । न चान्योन्याश्रयः । वेदमूलत्वाद्युक्तयुक्त्यधीनत्वेन स्मृतिप्रामाण्यस्य द्वैविध्यसिद्ध्यनधीनत्वात् । एतेन स्वर्गप्रतिबन्दी निरस्ता । नित्यानित्यविभागस्य, वस्तुनिर्देशस्य, तत्र उत्तरोत्तरबलीयस्त्वस्य च सङ्कीर्तनपूर्वकं ससत्वाभिधायकभारतवचनस्य भाष्योदाहृतस्य स्पष्टस्य सत्त्वात् । एतदर्थमेव, स्पष्टमपि **स्मरन्ति** इति सूत्रस्थमपिपदं व्याख्येयम् ॥

परमात्मशब्दस्वारस्यम्

टीकाक्षरार्थस्तु—**अत्र परमात्मप्राप्तीति** । अनेन ब्रह्महन्त्रादिरूपात्महन्तृप्राप्यनरकापेक्षया हरिद्विडाऽदिरूपपरमात्महन्तृप्राप्यनरकस्योक्तं नित्यत्वं युक्तमिति सूचयति ॥

---

[1] सिद्धिः ।

## शेषतात्पर्यचन्द्रिका

लौकिकशब्दविवरणम्

**लौकिकदृष्टिश्चेति**[1] । शास्त्रनिष्ठारहिताः, आपाततः शास्त्रविचारे युक्ता लौकिकाः । न तु पामराः । तेषां नरकसद्भावस्यैवाप्रतीतेः । तथाच **चकार नरकं शून्यम्** इति वाक्यजन्या लौकिकानां नरकैकविध्यप्रतीतिर्युक्तेति ध्येयम् ॥

पूर्वपक्षन्यायविवरणव्याख्यात्मकटीकावतारणम्

अत्र विरुद्धोक्तिन्यायं साध्यपरत्वेनापि विवृण्वत् **न च नरकभोगस्यानित्यत्वकथनान्नित्यनरकोक्तिर्विरुद्धा** इति वाक्यं क्रमेण तथाविधवाक्यद्वयोदाहरणपूर्वकं व्याचष्टे **यावदिन्द्रा** इत्यादिना ॥

सिद्धान्तन्यायविवरणभाष्यव्याख्यात्मकटीकांशावतारणम्

**विभागः कारणाभवः** इत्युक्तविभागरूपसैद्धान्तिकन्यायं सप्रमाणं विवृण्वत्—

**"रौरवोऽथ महाँश्चैव वह्निर्वैतरणी तथा ।**
**कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु ॥**
**तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तितौ ।" इति**
**विभागात्**—इति वाक्यं भाष्येण सहैव व्याचष्टे **नरकभोग इति** ॥

**इति सत्ताधिकरणम् ॥ १२ ॥**

---

[1] लोकदृष्टिश्चेति ।

अथ तत्राप्यधिकरणम् ॥ १३ ॥

ईश्वरस्य नरकायुक्तेः "सर्वं विसृजति सर्वं विलापयति, सर्वं रमयति, सर्वं न रमयति, सर्वं प्रवर्तयत्यन्तरस्मिन्निविष्ट" इति कौषारवश्रुतिविरोध इति । अतो वक्ति—

॥ ॐ तत्रापि च तद्व्यापारादविरोधः ॐ ॥ १७ ॥

चशब्दाददुःखानुभवेन । "स स्वर्गे स भूमौ स नरके सोऽन्धेतमसि प्रवृत्तिकृदेक एवानुविष्टो नासौ दुःखभुगीश्वरः प्रभुत्वात् सर्वं पश्यति सर्वं कारयति नासौ दुःखभुग्य एवं वेदे" ति पौत्रायण श्रुतेरविरोधः ।

"नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते ।
नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते ॥
नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः ।" इति भागवत तन्त्रे ॥ १७ ॥

---

तत्त्वप्रकाशिका

सङ्गत्यादिः

अत्रेश्वरप्राप्तिसाधनवैराग्याय नरकस्य सदुःखत्वसाधनादस्ति[1] शास्त्रादि-सङ्गतिः । नरकस्य निर्दुःखत्वे न तत्र तत्साधने च वैराग्यं स्यात् । अतः सदुःखत्वं साधनीयम् । प्रकृतं नरकमेव विषयः । किं सदुःखं न वेति सन्देहः । उभयविधस्थानदर्शनं सन्देहबीजम् ॥

---

[1] समर्थनादस्ति

## तत्त्वप्रकाशिका

पूर्वपक्षः

न नरके दुःखमस्तीति पूर्वः पक्षः । तथाहि—यदि नरकेऽस्ति दुःखं, तत्र पृच्छामः किं तत्रेश्वरः प्रेरको न वेति । आद्यं दूषयति **ईश्वरस्येति** । यदि नरकस्य सदुःखतामङ्गीकृत्य तत्रस्थानां प्रेरकतयेश्वरो वर्तत इत्यभ्युपगम्यते तर्हि तस्य दुःखिसहावस्थानान्नरकभोगप्राप्तिः । ईश्वरस्य च नरकदुःखायुक्तेर्न तत्र दुःखमिति भावः । न च वैशेष्ययुक्त्यैतत्परिहृतमिति वाच्यम् । दुःखाननुभवे सार्वज्ञाभावप्रसङ्गात् । द्वितीयं निराचष्टे **सर्वमिति** । यदि नरके दुःखसिद्ध्यर्थं तत्रेश्वरो न प्रेरक इत्युच्यते तर्हि श्रुतिविरोधः । अतः प्रकारद्वयेनापि नरकस्य सदुःखत्वानुपपत्ते र्न तत्र तत्साधने च वृथा वैराग्यमापाद्यमिति भावः ॥

सिद्धान्तः

योग्यं सव सिद्धान्तयत्सूत्रमवतारयति **अत इति** । भवत्येव नरकं सदुःखम् । न चोक्तदोषः । नरकेऽपि तस्येश्वरस्य प्रेरणरूपव्यापाराभ्युपगमेन श्रुतिविरोधाभावादिति सूत्रार्थः । सदुःखत्वे नरकस्यास्मिन्नपि पक्षे कथितविरोधपरिहारो वाच्यः । स कुतो न सूत्रित इत्यत आह **चशब्दादिति** । तत्राप्यदुःखानुभवेन तद्व्यापारादुभयविरोधाभाव इत्यर्थः । इति समुच्चिनोतीति शेषः । अस्यार्थस्य प्रामाणिकत्वे भवेदविरोधः, तत्कुत इत्यत आह **स** इति । सहभावयुक्तिपरिहारः **प्रभुत्वादिति** । असार्वज्ञमाशङ्क्य **सर्वं पश्यतीत्युक्तम्** । अत्र स्मृतिश्चाह **नरकेपीति** । सर्वज्ञस्य कथं दुःखानुभवाभाव इत्यत आह **नीचेति** । अतो नरकस्य सदुःखत्वाद्भवितव्यं तत्र वैराग्येणेति सिद्धम् ॥ १७॥

## शेषतात्पर्यचन्द्रिका

पापपेटिका

# ॥ ॐ तत्रापि च तद्व्यापारादविरोधः ॐ ॥ १७ ॥

सङ्गतिः

पूर्वाभ्यामधिकरणाभ्यां पापस्य यथायोगं नित्यानित्यनरकदुःखसाधनत्वेन परमानन्दावाप्तिलक्षणमोक्षसाधनत्वाभावात्, विमतं पापं मोक्षसाधनं तदितरासाधनत्वे सति साधनत्वात् इत्यसिद्धं बाधितं चेति न व्यतिरेकव्यभिचारः इत्युक्तावेव नरके दुःखं नास्तीति शङ्कोदयेन वा, नरकद्वैविध्यकथनानन्तरमेव तयोर्दुःखविचारावसर इति वा, **पञ्चकष्टे तु तत्सदा** इत्युक्ताक्षेपेणारभ्यत इति वाऽनन्तरसङ्गतिः ॥

संशयः

अत्र नरकं दुःखरहितं न वा। तदर्थं दुःखसद्भावे बाधकमस्ति न वा। तदर्थं भोगः किं दुःखसाक्षात्कार एवोतान्यः। तदर्थं तत्र प्रमाणं नास्त्युतास्तीति चिन्ता ॥

पूर्वपक्षः

तत्र नरके न दुःखमस्ति। तथा सतीश्वरस्यापि तत्स्थत्वाविशेषाज्जीववदेव दुःखभोगप्राप्तेः। न च स तत्र नास्तीति वाच्यम्। **यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा** इत्यादिविरोधात्। नरकस्थजीववदेव श्वादिस्थजीवानामप्यवस्थानसम्भवेन जीवनियामकत्वस्यैवाभावापाताच्च। न चेष्टापत्तिः **सर्वं विसृजति** इत्यादिकौषारवश्रुतिविरोधात्। न च दुःखानु-

## शेषतात्पर्यचन्द्रिका

भवाभावाद्दुःखित्वाप्राप्तिः। असार्वज्ञापत्तेः। दुःखसाक्षात्कार एव हि दुःखभोगः। स एव च दुःखित्वम्। जीवेऽपि ततोऽन्यस्य[1] दुःखित्वस्य सद्भावे मानाभावात्। न च **पञ्चकष्टे तु तत्सदा** इति पूर्वाधिकरणोदाहृत-वचनविरोधः। **न हि निन्दान्यायेन अपशवो वा अन्ये गो अश्वेभ्यः** इति-वदिहापि स्वर्गादिस्तुतावेव तात्पर्यात्। न चात्र स्तुतिबुद्धिर्नास्तीति वाच्यम्। प्रत्यक्षादिविरोधेन गवाश्वयोः स्तुतिबुद्धिरिवेहापीश्वरस्यादुःखत्वव्यासत्ववचन-विरोधेन तत्कल्पनादिति पूर्वः पक्षः ॥

सिद्धान्तः

सिद्धान्तस्तु—नरके दुःखमस्ति। न चेह दुःखानुभवः साक्षात्कार-मात्रम्। येनेश्वरस्य सार्वज्ञरक्षणाय सोऽपि स्यात्। किन्तु तत्कृतनीचोच्च-तैव। **नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते** इत्यादेः। भवितव्यं चावश्यमीशस्य दुःखसाक्षात्कारेण। निषेद्धव्यश्चासौ दुःखानुभवः। **निरनिष्टो निरवद्य** इत्यादेः। ततोऽपि दुःखसाक्षात्कारातिरिक्तो नीचोच्च[2]-लक्षणो दुःखानुभवोऽङ्गीकार्यः। नासावीश्वर आपादयितुं शक्यः। दुःखानु-भवप्रयोजकस्य अस्वातन्त्र्यादेरभावेन विद्यावतो दाहाभाववत् स्वतन्त्रस्य तस्या-दुःखानुभवोपपत्तेरिति ॥

ईश्वरपदस्वारस्यम्

**टीकाक्षरार्थस्तु—ईश्वरप्राप्तिसाधनेति।** विशिष्टसामर्थ्यवत्त्वादेव दुःखिसहावस्थानमप्रयोजकमिति सूचयितुमीश्वरेत्युक्तम् ॥

---

[1] इतोऽन्यस्य [2] नीचोच्चता

पूर्वपक्षन्यायविवरणव्याख्यानभूतटीकाभाववर्णनम्

अत्र **सहस्थानम्** इत्युक्तन्यायं पूर्वपक्षे सङ्गमयितुमापाद्यप्रदर्शनपूर्वकं विवृण्वत् **न च सहस्थानादीशस्यापि नरकदुःखप्राप्तिः** इति वाक्यं विकल्पमुखेन प्रवृत्ते भाष्ये आद्यपक्षे दूषणत्वेनादौ संयोज्य तत्रेष्टापत्तिपरिहाराय भाष्यं योज्यमिति भावेन सम्बन्धिपदाध्याहारपूर्वकं **सहस्थान** पदविवक्षितं दर्शयन् पीठिकां रचयति **तथा हि यदि नरकेऽस्ति दुःखमिति**।[1] **दुःखाननुभव इति**। तद्व्यापारतत्साक्षात्कारयोः सत्त्वेऽपि न तत्कृतनीचोच्चत्वमित्येवंरूपकल्याणगुणलाभार्थं, निर्दुःखेश्वरसहावस्थानेऽपि दुःखमवर्जनीयमिति तत्र वैराग्यलाभार्थं चैतन्न्यायप्रवृत्तिरिति द्रष्टव्यम् ॥

योग्यं सर्वमिति टीकास्वारस्यम्

**सर्वं विसृजति सर्वं विलापयति** इत्ययुक्तम्। **सृज्यसृष्टावीक्षा बभूव** इति सृज्यपदस्वारस्याय मुक्तानां सृष्ट्यभावेन च कतिपयानामेव सृष्टेर्वक्तव्यत्वात्। देवानां लयेऽपि मनुष्याणामुत्क्रान्त्यधिकारिणां तदयोगाच्च। **सर्वं रमयतीति** चायुक्तम्। न हि तमोयोग्यानां रमणमस्ति। **सर्वं न रमयतीति** चायुक्तम्। योग्यानां रमणनियमादित्यतो योग्यविषयत्वेन व्याचष्टे **योग्यं सर्वमिति**। सृष्टियोग्यं लययोग्यं मोक्षयोग्यं तमोयोग्यं चेत्यर्थः ॥

---

1 तथाहीति। यदि नरकेऽस्ति दुःखमिति।

## शेषतात्पर्यचन्द्रिका

सिद्धान्तटीकाभाववर्णनम्

**प्रासादात्प्रेक्षते** इत्यादिवत् ल्यब्लोपनिमित्तां तृतीयार्थे वा पञ्चमीं स्वीकृत्याद्यपक्षकक्षीकारेण तत्पक्षोक्तदोषनिरासकतया[1] सूत्रं व्याचष्टे **न चोक्त दोष इति**। कारणाभव इति सङ्ग्रहे भवो भावः सत्ता। तथा च कारणस्याभाव इति विवक्षितमित्यभिप्रेत्य कारणाभावः कुत इत्यतोऽत्र कारणस्वरूपसूचनेन हेतुं वदन् **स्वातन्त्र्यात्कारणाभावात्** इति वाक्यं तस्यार्थं सूचयन्नेव श्रौतपदस्वारस्यमाह **सहभावयुक्तिपरिहार इति**॥

**इति तत्राप्यधिकरणम्॥ १३॥**

—:o:—

[1] तत्तत्पक्षोक्त

अथ विद्याधिकरणम्

'अथैतयोः पथोर्न कतरेण च गच्छन्ति[1] तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानम्' इति गतिस्वातन्त्र्यं भूतानां प्रतीयत इति। अत आह—

॥ ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ ॥ १८ ॥

विद्याकर्मापेक्षयै[2]तद्वचनम्। तयोरपि प्रकृतत्वात्।

विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ।
तद्वर्जितस्त्रिधा याति तिर्यग्वा नरकं तमः॥

इति च भारते ॥ १८ ॥

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनवैराग्यार्थं भूतानां गतिस्वातन्त्र्यनिरासात् अस्ति शास्त्रादिसङ्गतिः। यदि गतिस्वातन्त्र्यं भूतानां स्यात् तदा वैराग्यवैयर्थ्यप्रसङ्गात् तन्निरसनीयम्। प्रकृतः पितृयाणः तत्प्रकृतिसन्निधापितो देवयानश्च विषयः। किं भूतैः स्वातन्त्र्येण गम्यो न वेति सन्देहः। लौकिकमार्गदर्शनं अलौकिकत्वञ्च सन्देहबीजम् ॥

पूर्वपक्षः

पूर्वपक्षयति **अथेति**। अस्त्येव भूतानां गतिस्वातन्त्र्यम्। **'तेऽर्चिषमभिसम्भवन्ति,' 'ते धूममभिसम्भवन्ति'** इत्युक्त्वा **'अथैतयो'**रिति श्रुतौ तदुक्तेः। न हि पुरुषप्रयत्नाविषये **'न गच्छन्ति च'** इति प्रयोगो

[1] गच्छन्तीति [2] पेक्षयैवैतद्वचनम्

## तत्त्वप्रकाशिका

युज्यते । न च वाच्यं जीवस्यास्वातन्त्र्यं प्रतिपादितम्, अतः कथं गतिस्वातन्त्र्यमिति । तदधीनस्वातन्त्र्यस्य विवक्षितत्वात् साधनवत् । तादृशस्याप्यभावे वैराग्यादिसाधनमपि नोत्पादयितुं शक्यं स्यात् । न च फलस्वातन्त्र्ये सर्वेषां तत्प्राप्तिः स्यादिति वाच्यम् । साधनेऽपि साम्यात् । अतः **मूले लब्धफलो नैव शाखाग्रं गन्तुमिच्छति** इति न्यायात्फल एव स्वातन्त्र्यात् किं वैराग्यादिसाधनेनेति भावः ॥

अथैतयोरिति श्रुत्यर्थः

उक्तयोः पथोर्मध्ये यान्येकतरेणापि पथा न गच्छन्ति तानीमान्यल्पानि सुखदुःखमिश्राणि सदा गत्यादिमन्ति पुनः पुनर्जायन्ते म्रियन्ते च । एतत् स्वर्गापवर्गयोरन्यत् तृतीयं भूतानामवस्थानमित्यर्थः ॥

सिद्धान्तः

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **अत इति** । नतच्छ्रुतिबलेन भूतानां गतिस्वातन्त्र्यं मन्तव्यम् । तस्याः मार्गद्वयसाधनविद्याकर्मविषयत्वोपपत्तेः । न च मन्तव्यं देवयानपितृयाणयोः प्रकृतत्वात् एतच्छब्देन तत्परामर्शोपपत्तिरिति । **'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति,' 'अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति'** इति विद्याकर्ममार्गयोरपि प्रकृतत्वादेतच्छब्देन तत्परामर्शोपपत्तेरिति भावः । एवमर्थद्वयस्यापि सति सम्भवे किं साधनार्थत्वग्रहणे कारणमिति स्मृतिसमाख्येति भावेनाह **विद्येति** । न च साधने स्वातन्त्र्याभ्युपगमे फलेपि तत्स्यादिति युक्तम् । साधने विधिसद्भावात् फले तदभावाच्च । विध्यादिशास्त्रावैयर्थ्यायैव तत्रेश्वरः स्वातन्त्र्यं ददातीति प्रागुक्तम् । अतः फले स्वातन्त्र्याभावादपेक्षितं वैराग्यादिसाधनमिति सिद्धम् ॥ १८ ॥

## शेषतात्पर्यचन्द्रिका

पापपेटिका

## ॥ ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ ॥ १८ ॥

पादसङ्गतिः

अत्रयं पादसङ्गतिः[1]—मोक्षो हि चतुर्दलः । **कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोगश्चतुष्टयम्** इति वचनात् । एतच्चतुष्टयमपि यदि पुरुषप्रयत्नगोचरस्तर्हि तदर्थं वैराग्यादिसाधनाराधितभगवत्प्रसादो नापेक्षणीयः । न हि स्वप्रयत्नगोचरेऽप्यर्थे पुरुषान्तरप्रसादमर्थयमानो दृष्टः । इह च मार्गशब्दितदेवयानाख्यमोक्षदलस्य पुरुषाधीनत्वश्रवणेन न भगवत्प्रसादोऽपेक्षणीय इत्यतो जीवानां तत्र स्वातन्त्र्यं निषेध्यमेव । तदत्र क्रियत इति ॥

पेटिकासङ्गतिः

पेटिकासङ्गतिस्तु—पापफलनरकस्य विचारात् विद्याकर्मफलं देवयानं पितृयाणं स्मृतं विचार्यत इति प्रासङ्गिकी । इयञ्च **प्रकृतः पितृयाणः**[2] इत्यादिविषयटीकया सूचिता ॥

पादसङ्गतिः

पापफलस्य नरकस्य ईश्वराधीनत्वेऽपि विद्याकर्मफलस्य देवयानादेः नेश्वराधीनत्वम् । विशिष्य प्रमाणाभावात् । प्रत्युत जीवाधीनत्वमेव । श्रौतविधिनिषेधान्यथानुपपत्तिरूपप्रमाणस्य सद्भावादिति वा, सर्वं रमयतीत्यादिश्रुत्यविरोधाय भगवद्व्यापाराङ्गीकारेण पापफले नरके स्वातन्त्र्यमीश्वरस्यैवेति

---

[1] भावसङ्गतिः [2] पितृयानः

## शेषतात्पर्यचन्द्रिका

यत्फलितं तदनुपपन्नम् । विद्याकर्मफले मार्गे **अथैतयोः** इत्यादिश्रुत्यविरोधाय पुरुषस्यैव स्वातन्त्र्यावश्यम्भावेन फलत्वाविशेषात् नरकेऽपि तत्स्वातन्त्र्यस्यैव युक्तत्वादिति वा आक्षेपादनन्तरसङ्गतिः । इयञ्च न्यायविवरणे फलपदप्रयोगात् सूचिता ॥

यद्यपीदं पादादावेव युक्तम् । फलस्वातन्त्र्यस्य सर्वसाधनानुष्ठानविरोधित्वात् । अत एव जिज्ञासाधिकरणादपि पूर्वं युक्तम् । तथाप्युक्तरीत्या तद्व्यापारनयेन सङ्गतत्वेन तत्रेवेहापि सङ्गतस्येह निरूपणे दोषाभावात् । पितृयाणसन्निधापितदेवयानश्चिन्त्यत इति सूचनाय प्रयुक्तस्य सौत्रकर्मपदस्यानुसारेण भाष्यादौ पितृयानो[1]ऽपि चिन्त्यत इति न तदंशेऽप्यसङ्गतिः ॥

संशयः

अत एव देवयानपितृयाणयोः जीवः स्वतन्त्रो न वेति चिन्ता । तदर्थं तत्र नियामकमस्ति न वेति चिन्तनीयम् ॥

पूर्वपक्षः

अत्र पूर्वः पक्षः—तयोरपि जीवस्य स्वातन्त्र्यमस्ति । तथाहि वैराग्यादौ यागादौ च फलसाधने तावज्जीवस्य स्वातन्त्र्यमस्ति । न च तत्रापि विवादः । **'ब्राह्मणो निर्वेदमायात्' 'यजेत'** इत्यादीनां निरधिकारिकत्वप्रसङ्गात् । न च हिताकरणादिनयविरोधः । तत्रेशदत्तस्वातन्त्र्यानिराकरणात् । न च

[1] पितृयाणमपि

## शेषतात्पर्यचन्द्रिका

सर्वेषामपि सर्वसाधनानुष्ठानं प्रसज्जते[1]। कानिचिदेव साधनानि प्रति केभ्यश्चिदेव ईशः स्वातन्त्र्यं ददातीत्युपपत्तेः। आहिताग्निवत् अन्यदत्तस्वातन्त्र्यं न कार्यकारीति चेन्न। परदत्तान्ने क्षुन्निवृत्तिरूपकार्यकारित्वदर्शनात्। तथा च साधनं सर्वं जीवस्य स्वाधीनमेव। ततश्च स्वाधीनेन सह श्रुतत्वात् गुणकर्मणा सह श्रुतानां वत्सापाकरणादीनां गुणकर्मत्ववत्, फलस्यापि स्वाधीनत्वमेवैष्टव्यम्[2]। श्रूयेते हि **'य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति'** इति इष्टापूर्तवैराग्यादिना सह पितृयाणो देवयानश्च ॥

किञ्च **ते धूममभिसम्भवन्ति** इत्यादिविधिना पितृयाणादौ स्वातन्त्र्यं प्रतीयते। न चास्वातन्त्र्ये[3] पाषाणादौ पङ्कादौ च गन्ता भवतीति प्रयोगो युज्यते। किञ्च **अथैतयोः पथोर्न कतरेण च** इति श्रूयते स्वातन्त्र्यनिषेधः। स च प्रसक्तिसापेक्ष इति स्वातन्त्र्यं सिद्धम्। **अङ्गुल्यग्रे हस्तिशतं नास्ति, नान्तरिक्षे चेतव्यः** इति लोकवेदयोः अप्रसक्तस्यापि निषेधो[4] दृश्यत इति चेत् तत्रापि शब्दाभासादिना कथञ्चित्प्रसक्तेः सम्पादनीयत्वात्। न चात्र गमनमात्रं निषिध्यते स्वातन्त्र्यगर्भकर्तृत्वविहितलडनुपपत्तेः। गमनस्वरूपमात्रस्य निषेधानुपपत्तेः। गमनकर्तारो न भवन्ति इति व्याख्यानाच्च। यानि भूतानि एतयोर्देवपितृयाणयोः पथोर्मध्ये एकतरेणापि न गच्छन्ति तानि तृतीयं स्थानं प्राप्नुवन्ति इत्युक्तौ केचन गन्तारो वर्तन्त इति स्फुटं प्रतीतेश्च ॥

---

[1] प्रसज्यते। [2] मेवेष्टव्यम्। [3] अस्वतन्त्रे [4] निबन्धो

## शेषतात्पर्यचन्द्रिका

न चात्र एतयोरिति विद्याकर्मणोः परामर्शे तत्रैव स्वातन्त्र्यं निषिध्यत इति साधन एव स्वातन्त्र्यं प्रसक्तं न तु फल इति वाच्यम्। पथिशब्दस्य मार्गे रूढस्य मार्गसाधने अप्रवृत्तेः तत्समानाधिकृतेनैतच्छब्देन देवयानादि-मार्गस्यैव परामर्शोपपत्त्या साधनपरामर्शायोगात्। देवयानादेरव्यवहितस्य परामर्शोपपत्तौ **इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति** इत्यत्र व्यवहितेष्टापूर्तादिपरामर्शायोगाच्चेति ॥

सिद्धान्तः

सिद्धान्तस्तु—स्यादिदं यदि **अथैतयोः** इति वाक्ये देवयानादेः परामर्शः स्यात। न चैवम्। तत्र विद्याकर्मणोरेव परामर्शात्। न च तयोर-प्रकृतत्वं शङ्कनीयम्। इष्टापूर्तवाक्ये तयोरपि प्रकृतत्वात्। न च पथिशब्दा-स्वारस्यम्। **विद्यापथः कर्मपथः** इत्यभियुक्तप्रयोगेण देवयानादाविव साधने-ऽपि रूढत्वात्। जन्मादिसूत्रे ब्रह्मादेरव्यवधानेन प्रकृतत्वेऽपि जगतस्तत्कर्तृ-त्वासिद्धिभयेन बुद्धौ ग्रन्थान्तरे वा प्रकृतस्य जगतः इदंशब्देनेव **ब्राह्मणो निर्वेदमायात्** इत्यादिवैयर्थ्यप्रसङ्गभयेन तत्रैव[2] किञ्चिद्व्यवहितपूर्ववाक्ये प्रकृतस्य साधनस्य सुतरां परामर्शोपपत्तेः। ज्ञानकर्ममार्गयोर्मध्ये ये ज्ञान कर्म वा प्रति न स्वतन्त्राः, न सम्पादयन्तीति यावत्, ते तृतीयं स्थानं प्राप्नुवन्ति इत्युक्तौ ज्ञानकर्मणोः अन्ये स्वतन्त्रा वर्तन्त इति प्रतीतावपि देवयानादौ कस्यापि स्वातन्त्र्याप्रतीतेः ॥

---

[1] तत्रैव

## शेषतात्पर्यचन्द्रिका

### जीवस्य साधने फले च अस्वातन्त्र्यमविशिष्टमिति कथनेन पूर्वोक्तसिद्धान्तदूषकाणां स्वयूथ्यानामाशयोपक्षेपः

अत्र केचित् स्वयूथ्या एव दूषयाञ्चक्रुः—किं नामात्र अङ्गीकृतं साधने स्वातन्त्र्यम्, इतरानपेक्षं साधनगोचरव्यापारकर्तृत्वम् उत ईशदत्तम्। नाद्यः। **'न ऋते त्वत्क्रियते' 'नाहं कर्ता न कर्ता त्वम्' 'स कारयेत् पुण्यमथापि पापम्'** इत्यादिविरोधात्। न द्वितीयः। तत्तत्साधनगोचरानुष्ठानादिरूपव्यापारकर्तृत्वात्मकमीशदत्तं स्वातन्त्र्यं यथा साधने तथा फलेऽपि तत्तत्फलानुभोक्तृत्वाद्यात्मकव्यापारकर्तृत्वरूपस्वातन्त्र्यमीश्वरदत्तमस्त्येव। अन्यथा भोगशक्तिरेव न स्यात्। तस्मात् साधनफलयोरविशिष्टमस्वातन्त्र्यम् इति ॥

### एतन्मतनिरासेन पूर्वोक्तसिद्धान्तस्थापनम्

अत्र ब्रूमः—यद्गोचरक्रियायां स्वकामनया आरब्धायां तद्विच्छेददशायां त्यागः सुशकः कामनादशायां च त्यागे प्रायश्चित्तं अनिष्टलाभो वा अस्ति यस्य स तत्र स्वतन्त्रः। यस्य तु यद्गोचरक्रियायां आरब्धायां त्यागो दुश्शकः कथञ्चित्त्यागेऽपि प्रायश्चित्तमनिष्टलाभो वा नास्ति स तत्रास्वतन्त्रः। साधने च अयमिच्छया अनुष्ठातुमारब्धेऽपि तद्विच्छेदादिना शक्नोति त्यक्तुं निष्पन्नं चान्यस्मै दातुम्। **दिनद्वयसमुद्भूतं पुण्यं तस्मै ददौ मुनिः** इति वचनात्। कामनादशायां च त्यागे प्रायश्चित्ती भवत्यनिष्टं च लभत इति स्वतन्त्र एव। फले तु भोक्तुमारब्धे नैवं भोगकामनादिविच्छेदसहस्रेणापि त्यक्तुं शक्नोति। भोगनयविरोधात्। उपमर्दादिना कथञ्चित्त्यागेऽपि न प्रायश्चित्तानिष्टयोर्लाभः। अन्यथा तच्छ्रवणानुपपत्तेः ॥

## शेषतात्पर्यचन्द्रिका

प्रसङ्गात् ईश्वरस्य जीवकर्तृके साधने परानपेक्षकर्तृत्वरूपस्वातन्त्र्यसाधनम्

नन्वेवंविधं साधने स्वातन्त्र्यं फले च तदभावो यद्यपि जीवे अस्ति, तथापि ईश्वरे साधनस्वातन्त्र्यं न प्राप्तम्। निरुक्तस्य साधनस्वातन्त्र्यस्य तत्र असम्भवादिति चेत्, किं ततः स्यात्। न ऋते इत्यादिविरोध इति चेन्न। इह वैराग्याद्यनुष्ठानसिद्ध्यर्थं निरुक्तस्य वैवक्षिकस्य स्वातन्त्र्यस्य अभावेऽपि **'एकः' 'स्वतन्त्रः' 'स्वराट्'** इत्यादिश्रुत्यभिप्रेतस्य परानपेक्षकर्तृत्वरूपस्वातन्त्र्यस्याङ्गीकृतत्वात् ॥

उक्तस्वातन्त्र्यस्य एतदधिकरणाविचार्यत्वसमर्थनम्

परन्तु एतदिह न विचार्यम्। किन्तु यद्गोचरक्रियायां इत्यादिना उक्तं यथेष्टविनियोगार्हत्वरूपमेव। यदि साधनवत् फलमपि यथेष्टविनियोगार्हं तर्हि काम्यकर्मार्जितमपि स्वर्गादि अन्यस्मै दातुमर्हमिति न तत्साधने विरज्येत इत्यापादनवत्, यद्ययं फले परानपेक्षकर्ता स्यात् तर्हि तत्साधने च न विरज्येत इत्यापादनायोगात्। न हि भोजनादिजन्यतृप्त्यादिरूपफले[1] परानपेक्षकर्तापि फलमन्यस्मै दातुमीष्टे। साधनसमकक्ष्यतया प्राप्तस्य स्वातन्त्र्यस्य [2]वैवक्षिकस्य निरसनीयत्ववत् परानपेक्षकर्तृत्व[3]रूपस्य स्वातन्त्र्यस्य [4]ग्रामाधिपत्यप्राप्तौ राजापेक्षायाः सत्त्वेऽपि तदनन्तरभावितदनुभोक्तृतत्क्रियायां [5]तदभावेन

[1] तृप्त्यादिपरा [2] अवैवक्षिकस्य [3] कर्तृक

[4] ग्रामाद्यधि [5] तदा

## शेषतात्पर्यचन्द्रिका

उक्तस्वातन्त्र्यस्य सत्त्वेऽपि तदनुकूलराजसेवादिलक्षणसाधननैरपेक्ष्यस्य[1] अभाववदुपपत्तेः अवश्यं निरसनीयत्वाभावेन एतदधिकरणाविषयत्वात् । अत एव टीकायां **यदि गतिस्वातन्त्र्यं भूतानां स्यात् तदा वैराग्यवैयर्थ्य-प्रसङ्गात् तन्निरसनीयम्** इति तच्छब्दः स्वातन्त्र्यद्वैविध्यसूचकः[2] स्वातन्त्र्य-विशेषणतयोपात्तः[3] ॥

प्रसक्तानुप्रसक्तं ईश्वरस्यैव जीवीयसाधनफलयोरुभयोरपि परानपेक्षकर्तृत्वरूपस्वातन्त्र्यसमर्थनम्

इदन्त्ववधेयम् । ईश्वरे फलसाधनयोरपि स्वातन्त्र्यं, अनन्यापेक्ष-मस्ति । जीवे तु ईशदत्तम् । तदपि साधन एव न फले । साधनविध्य-वैयर्थ्याय साधने तद्दानसम्भवेऽपि फलेऽपि दाने हेत्वभावादिति । अत्र फलेऽपि तत्तत्फलमुद्दिश्य तत्तत्साधनविध्यवैयर्थ्यायैव फलानुभोक्तृत्वरूपकर्तृ-व्यापारदानसम्भव इति कैश्चिदुक्तं निरस्तम् । अनुभोक्तृत्वदानेऽपि यथेष्ट-विनियोगार्हत्वस्यादानात् । तद्दाने तस्यैव ईश्वरत्वहानेः । न च साधनेऽपि तद्दाने तदापत्तिः । फलभोगे तद्दानेन तद्भोगाय तदपेक्षानपगमात्[4] ॥

स्वयूथ्यैरापादितस्य जीवे फलस्वातन्त्र्यस्य समुत्सारणम्

यदुक्तं **'ते धूममभिसम्भवन्ति' 'तेऽर्चिषमभिसम्भवन्ति' 'अथैतयोः पथोर्न कतरेण च'** इति विधिनिषेधबलात्[5] फलेऽपि स्वातन्त्र्यमेष्टव्यमिति।

---

[1] रपेक्षस्य [2] कम् [3] णमुपात्तः [4] नव [5] फलात्

## शेषतात्पर्यचन्द्रिका

तत्रोच्यते। **स्वतन्त्रः कर्ता** इति स्वातन्त्र्यगर्भकर्तृत्वाश्रये लस्य शक्तत्वेऽपि उक्तबाधकवशात् यथेष्टविनियोक्तृत्वरूपस्वातन्त्र्यशून्येऽपि[1] क्रियाश्रयमात्रे लक्षणोपपत्तिः। यद्वा **सप्तदशारत्निर्वाजपेयस्य यूपः** इत्यत्र सप्तदशारत्नित्वस्य वाजपेयाङ्गपशुयागाङ्गयूपे अन्वयवत् इहापि लकारबोधितस्य स्वातन्त्र्यस्य अर्चिरादिगमनेऽन्वयायोग्यतया तत्साधनेऽन्वयः। **दध्ना जुहोति** इत्यत्र आख्यातवाच्यायां भावनायां च दूरस्थमपि दधि अप्राप्तत्वात् करणत्वेन यथा अन्वेति, तथा इहापि लार्थस्वातन्त्र्ये दूरस्थमपि विद्या कर्म च अन्वेति इति चोपपन्नम्[2] ॥

स्वयूथ्यैरुक्तस्य साधनसहपाठरूपहेतोः
अप्रयोजकत्वोपपादनम्

यच्च जीवाधीनतया निर्णीतसाधनसहपाठात् फलस्य जीवाधीनत्वमित्युक्तम्। तन्न। **सोमेन यजेत** इत्यत्र अकरणेन यागस्य सहपाठेऽपि तददर्शनेन तत्र सहपाठस्याप्रयोजकत्वात्। साधने स्वातन्त्र्यप्रयोजकतया क्लृप्तस्य विहितत्वस्य फले अभावाच्च। न हि क्वचिदपि साधनविधिवत् फलविधिरस्ति। तथा सति भाव्याकाङ्क्षानिवृत्तिर्न स्यादिति ॥

न्यायरत्नावल्युक्तमधिकरणम्

टीकाक्षरार्थस्तु—अत्र **धूमो भूत्वाभ्रं भवतीत्युक्तधूमादिभावप्राप्तिस्तत्पारतन्त्र्यमेवेति** वक्ष्यते। तत् प्रसङ्गाद्युक्तं न वेति चिन्त्यत इति सङ्गतिः। न युक्तमिति पूर्वः पक्षः। **तेऽर्चिषमभिसम्भवन्तीत्याद्युक्त्वा**

[1] शून्ये हि  [2] च आपन्नम्

## शेषतात्पर्यचन्द्रिका

**अथैतयोः पथो नैकतरेणेति** पितृदेवयाननिषेधेन तत्परतन्त्रगमननिषेधेन भूतानां गतौ स्वातन्त्र्यप्रतीतेः। राद्धान्तस्तु नात्र **अथैतयोः पथोरिति** पितृदेवयानपरामर्शः। तद्यानेन गमनस्य श्रुतिसिद्धस्य श्रुत्यन्तरेणापि परिमार्ष्टुमशक्यत्वात्। अतः अविरोधाय **'तद्य इत्थं विदुः', 'अथ य इमे'** इति विद्याकर्मणोरपि प्रकृतत्वात् तत्परामर्शोऽस्तु। तथा च विद्याकर्मलक्षणमार्गद्वयविहीनतया तद्विहीनानां तिर्यग्गमनादिना असकृदावृत्त्या जननमरणादियोगितया स्वर्गापवर्गलक्षणस्थानद्वयाभावेनावशिष्टतिर्यग्योन्यादिरूपतृतीयस्थानाभिधायिकेयं श्रुतिः। तथा च पितृदेवयानेनैव ज्ञानिकर्मिणो र्गमनान्न स्वतन्त्रगमनम्। तथा च पितृदेवयानगमनस्य धूमादिपराधीनगमनत्वेन तत्प्रतिषेधे धूमाद्यधीनतां विना स्वातन्त्र्येणागमनसिद्धेः। पूर्वपक्षे तदप्रतिषेधेन विद्याकर्मप्रतिषेधे तु विद्वत्कर्मिणोरर्चिराद्यधीनगमनम्। विद्याकर्मविहीनानान्तु तिर्यङ्नरकतमःसिद्धिरित्येवाधिकरणार्थः। तेन वैराग्यसिद्धिश्चेति न्यायरत्नावल्युक्तमधिकरणम्॥

### उक्ताधिकरणपरीक्षापूर्वकं टीकायां स्वमतेनाधिकरणरचनम्

तत्र देवपितृयाणनिषेधे स्वतन्त्रगमनसिद्धिः किं सर्वेषां, केषाञ्चिदेव वा। नाद्यः। **तानीमानि क्षुद्रमिश्राणि** इति तच्छब्दश्रवणात् अथशब्दश्रवणाच्च देवपितृयाणगमननिषेधस्य कतिपयाधिकारिविषयत्वेन सर्वेषां तदसिद्धेः। न द्वितीयः। सिद्धान्तेऽपि विद्याकर्मविहीनानां देवपितृ-

## शेषतात्पर्यचन्द्रिका

याणनिषेधस्य सत्त्वात् , तेषां गतिस्वातन्त्र्यप्राप्तावपि विद्वत्कर्मिणोस्तदप्राप्त्या वैराग्यसिद्धिप्रतिक्षेपकत्वाभावाच्च इति न पूर्वपक्षो युक्तः । नापि सिद्धान्तः । विद्वत्कर्मिणोरर्चिराद्यधीनगमनं तद्रहितानां स्वातन्त्र्येण गमनमित्येव सूत्राक्षर-स्वारस्येन सिद्धान्तयितव्ये, तिर्यङ्नरकतमःसिद्धिरिति पर्यवसानायोगात् । विद्याकर्मिणां पारतन्त्र्येण गमनं तद्विहीनानां देवयानाद्यभावेन स्वातन्त्र्येण गमनमित्यापत्त्या विद्यायामेव प्रवृत्त्ययोगेन वैराग्यसिद्धिश्च न स्यात्— इत्यभिप्रेत्य स्वमतेनाधिकरणं रचयति **अत्र भगवत्प्राप्तीति । विद्याकर्मणो**रिति सूत्रानुसारात् तत्फलीभूतदेवयानपितृयाणौ विषयाविति वक्तव्यम् । पूर्वाधिकरणे नरकस्य प्रकृतत्वात् कथमनयोः प्रकृतत्वमित्यत आह **प्रकृत** इति । **रंहति सम्परिष्वक्त** इत्यादिगतागतविचारप्रसङ्गात्पितृयाणः साक्षा-त्प्रकृतः । तत्प्रकरणसन्निधापितो देवयानश्च स्मृत इति भावः ॥

### भाष्यविवरणीयपूर्वपक्षग्रन्थस्य पूर्वपक्षटीकायां प्रथमभागे व्याख्यानम्

न्यायमालोक्तं **सहस्थानन्यायं**, तिष्ठति व्यवतिष्ठतेऽर्थोऽनेनेति स्थान-शब्देन श्रवणं विवक्षित्वा सम्बन्धिधर्मिसाध्यप्रदर्शनेन विवृण्वत् **न च साधनेन सह श्रुतेस्तद्वत्फलेऽपि जीवस्य स्वातन्त्र्यम्** इति वाक्यं भाष्येणैकार्थतां नयन् व्याचष्टे **अस्त्येव भूतानां गतिस्वातन्त्र्यम्** इत्यादिना । अनेन साधनशब्दः साध्यतेऽनेनेति विधिपरः । ततश्च 'तेऽर्चिषमभिसम्भवन्ति' 'ते धूममभिसम्भवन्ति' इति विधिना सह

## शेषतात्पर्यचन्द्रिका

**अथैतयो**रिति निषेधस्य श्रुतेः श्रवणात् विधिनिषेधयोश्च पुरुषप्रयत्नागोचरे असम्भवात् फलेऽपि जीवस्य स्वातन्त्र्यमङ्गीकार्यम् । अन्यथा साधनेऽपि स्वातन्त्र्यं न स्यादिति विवरणं योज्यमिति सूचितं भवति । तदर्थमेव टीकायामपि इत्युक्त्वा इति विधाय तदुक्तेः निषेधोक्तेः भूतानां गतिस्वातन्त्र्यमस्त्येवेति योज्यम् ॥

द्वीतीयभागे पूर्वपक्षन्यायविवरणस्य प्रकारान्तरत्रयेण व्याख्यानम्

यद्वा साधनेन विद्यया कर्मणा च सह **'तद्य इत्थं विदुः'** **'तेऽर्चिषमभिसम्भवन्ति'** **'अत य इमे ग्रामा इष्टापूर्ते'** **'ते धूममभिसम्भवन्ति'**इत्यादिना फलस्य श्रवणात् निर्णीतस्वातन्त्र्यसाधनवत् फलेऽपि जीवस्य स्वातन्त्र्यमङ्गीकार्यमिति विवरणवाक्यं योजनीयमित्याह **अस्त्येव भूतानामिति** । अस्मिंश्च पक्षे टीकायां **तेऽर्चिषमभिसम्भवन्ति** इत्यतः प्राक् **तद्य इत्थं विदु र्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते** इति वाक्यं, **ते धूममभिसम्भवन्ति** इत्यतः प्राक् **अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते** इति वाक्यं चाध्याहरणीयम् । अत एव सिद्धान्तटीकायां **'तद्य इत्थं' 'अथ य इमे'** इति वाक्यद्वयमात्रे उदाहर्तव्येऽपि फलवाक्यद्वयमप्युदाजहार । ततश्च इत्युक्त्वा इति साधनफले सह पठित्वा **अथैतयोः** इति श्रुतौ निषेधात् स्वातन्त्र्योक्तेः इति योजनया व्याख्यानव्याख्येयभावो द्रष्टव्यः ॥

## शेषतात्पर्यचन्द्रिका

विवरणे तद्वदित्युक्तिस्वारस्यं प्रकारान्तरेणाह **न च वाच्यमिति** ॥
प्रकारान्तरेणापि तत्स्वारस्यमाह **न च फलस्वातन्त्र्य इति** ॥

अविहितत्वेन कारणाभावादिति सिद्धान्तन्यायविवरणस्य
यथाटीकं स्वयं व्याख्यानम्

**कारणाभवन्यायं**[1] एतदधिकरणसङ्गतत्वेनापि विवृण्वत् **अविहितत्वेन कारणाभावात्, अथैतयोः पथोरित्यस्य च साधनार्थत्वात्** इति वाक्यं व्याचष्टे **न च साधने स्वातन्त्र्याभ्युपगम इति** । तथा चात्र पूर्वपक्षे उपन्यस्तयोः साधनसहपाठ-निषेधान्यथानुपपत्त्योः युक्त्योः आद्यां तावद्दूषयति **अविहितत्वेन कारणाभावादिति** । साधनस्य विहितत्वेन कारणेन खलु स्वातन्त्र्यमङ्गीकृतम् । तत्र उक्तरीत्या फलस्य विधानं नास्तीत्यवि-[2]हितत्वे सिद्धे अत एव कारणाभावात् फले स्वातन्त्र्यं नास्तीति वाक्य-सम्बन्धः ॥

अवशिष्टविवरणस्य सिद्धान्तभाष्यविवरणरूपत्वेन
स्वयं व्याख्यानम्

**विद्याकर्मापेक्षयैतद्वचनम्**[3] इति द्वितीययुक्तिदूषणपरं भाष्यं विद्या-कर्मणोः फलत्वस्यापि प्रतीतिसम्भवेन अस्पष्टमिव मन्यमानस्तद्विवृण्वन् द्वितीयां दूषयति **अथैतयोः पथोरित्यस्य च साधनार्थत्वादिति** । उक्त-रीत्या विद्याकर्मरूपप्रकृतसाधनार्थत्वात् निषेधानुपपत्तिरूपकारणाभावः, अतो न फले स्वातन्त्र्यमिति विवरणस्य व्याख्यानं द्रष्टव्यम् ॥

---

[1] कारणाभाव [2] नास्तीत्यव्यव [3] यैवैत

## शेषतात्पर्यचन्द्रिका

सर्वावस्थाप्रेरकश्चेति सङ्क्षेपभाष्ये एतदधिकरणतात्पर्यनिरूपणम्

अत्र **सर्वावस्थाप्रेरकश्च** इति सङ्क्षेपभाष्यं हरेर्मोक्षादिसर्वावस्थाप्रेरकत्वात् फले जीवानां स्वातन्त्र्यं नास्ति, साधने तु तद्दत्तमस्तीति चशब्देन सूचयति । कुतो वैषम्यमित्याशङ्कायामिदमेवोत्तरम् । फले स्वातन्त्र्यं न प्रयच्छति । सर्वप्रेरकत्वात् । अन्यथा तन्न स्यादिति एतदधिकरण सङ्गतत्वेनापि व्याख्येयम् ॥

सूत्राक्षरार्थः

सूत्रार्थस्तु—विद्याकर्मणोरिति विषयसप्तमी षष्ठी च । तुशब्द एवार्थः, अप्यर्थश्च । **अथैतयोरिति** श्रुतिः विद्याकर्मणोरेवविषये प्रवृत्ता, न तु फलविषये । देवयानपितृयाणरूपफलस्य यथा प्रकृतत्वं तथा **तद्य इत्थं**[1] **विदुः** इति विद्याकर्मणोरपि प्रकृतत्वात् । **अथैतयो**रित्यत्र एतयोरितिशब्देन विद्याकर्मणोः परामर्शसम्भवादिति ॥

**इति विद्याधिकरणम् ॥ १४ ॥**

1 इह

॥ अथ नतृतीयाधिकरणम् ॥

'यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते ।
अपि नीचगतौ किञ्चित् किमु मानुषदेहिनः ॥'

इति वचनात् महातमस्यपि सुखप्राप्तिः । इत्यत आह—

॥ ॐ न तृतीये तथोपलब्धेः ॐ ॥ १९ ॥

'अथाविद्वानकर्माऽवाग्गच्छति । त्रिधा ह वाऽवाग्गतिः । तिर्यग् यातना तम इति । द्वे वाव सुखानुवृत्ते । न तमः सुखानुवृत्तम् । केवलं ह्येवात्र दुःखं भवति' इति श्रुतेः न तृतीयावाग्गतौ सुखम् ॥ १९ ॥

---

## तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनवैराग्याय अन्धतमसो दुःखमात्रतासाधनात् अस्ति शास्त्रादिसङ्गतिः । अन्धे तमस्यपि सुखसद्भावे न तत्र अतिशयेन वैराग्यमुत्पद्यते । अतस्तन्निषेध्यम् । प्रकृतं अन्धं तमो विषयः । सुखयुक्तं न वेति सन्देहः । लौकिकदृष्टिरलौकिकत्वञ्च सन्देहबीजम् ॥

पूर्वपक्षः

पूर्वपक्षयति यत्रेति । अन्धं तमोऽपि सुखयुक्तमेव । दुःखयुक्तत्वात् । सुखेन च दुःखस्य व्याप्तत्वात् । न च वक्तव्यं सर्वसुखदुःखयोरप्रत्यक्षत्वात् व्याप्तिग्रहणानुपपत्तिरिति । यत्र दुःखम् इत्यागमेन तद्ग्रहणोपपत्तेः । अतोऽन्धतमस्यपि सुखसद्भावात् न तत्र वैराग्यमपेक्षितमिति भावः ॥

॥ ॐ स्मर्यतेऽपि च लोके ॐ ॥ २० ॥

'तिर्यक्षु नरके चैव सुखलेशो विधीयते ।
नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चन ॥'

इति भविष्यत्पर्वणि ।

लोकसिद्धश्चैतत् । चशब्दाल्लोकसिद्धिरपि स्मार्तेत्याह ।

'अतिप्रिये यथा राजा न दुःखं सहते क्वचित् ।
अत्यप्रिये सुखमपि तथैव परमेश्वरः ॥'

इति ब्राह्मे ॥ २० ॥

---

तत्त्वप्रकाशिका

सिद्धान्तः

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे अत इति । अधोगतिषु तृतीये तमसि न सुखमस्तीति मन्तव्यम् । अथाविद्वान् इति तथाभिधायकश्रुतेरित्यर्थः ॥१९॥

एतमेवार्थं स्मृत्यनुमानाभ्यां च साधयत्सूत्रमुपन्यस्य तां स्मृतिमुदाहृत्य अनुमानस्वरूपं च सूचयति स्मर्यतेऽपीति । एतत् अन्धे तमसि सुखराहित्यम् । लोकसिद्धं लौकिकदृष्टान्तयुक्तानुमानसिद्धमित्यर्थः । अयमभिसन्धिः । विप्रतिपन्ना न सुखवन्तः । तथात्वेन ईश्वरानिष्टत्वात् । यद्यथा ईश्वरानिष्टं तत्तथा न भवति । यथा शशो विषाणित्वेन । नैते सुखित्वेनेश्वरेष्टाः । अप्रियत्वात् । यो यस्याप्रियः स सुखित्वेन न तदिष्टः । यथा राजविरोधी राज्ञ इति । एतच्चानुमानं स्मृतिसिद्धत्वेनातिप्रबलमिति भावेनाह चशब्दादिति । लोकसिद्धिः लोकदृष्टान्तवदनुमानेन तमसः सुखराहित्यसिद्धिः । कासौ स्मृतिरित्यत आह अतीति । अनेन व्यतिरेकान्वयौ दर्शितौ । सदसज्जनानां वा प्रकृतिः ॥ २० ॥

## ॥ ॐ दर्शनाच्च ॐ ॥ २१ ॥

'नारायणप्रसादेन समिद्धज्ञानचक्षुषा ।
अत्यन्तदुःखसँल्लीनान्निश्शेषसुखवर्जितान् ॥
नित्यमेव तथाभूतान् विमिश्रांश्च गणान् बहून् ।
निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः ॥
अपश्यत् त्रिविधान् ब्रह्मा साक्षादेव चतुर्मुखः ।' इति दर्शनवचनाच्च पाद्मे ॥ २१ ॥

## ॥ ॐ तृतीये शब्दावरोधः संशोकजस्य ॐ ॥ २२ ॥

तृतीये तृतीयतमसः श्रवणादेव शब्दानुसारेण संशोकजमोहप्राप्तिः ॥ २२ ॥

---

### तत्त्वप्रकाशिका

प्रत्यक्षेणाप्येतमर्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे **दर्शनाच्चेति** । तमसि स्थितानां सुखलेशराहित्यं हिरण्यगर्भप्रत्यक्षदर्शनाच्च सिद्धयति । न च वाच्यं परप्रत्यक्षस्यास्माकमसिद्धिः, तस्यापि परसुखाभावदर्शनानुपपत्तिरिति; भगवत्प्रसादसमृद्धज्ञानदृष्ट्या तद्दर्शनस्य स्मृतिसिद्धत्वादिति भावः ॥ २१ ॥

अर्थापत्त्या चैतमर्थं साधयत् सूत्रं पठित्वा व्याचष्टे **तृतीय इति** । तमोऽपि त्रिविधम् । तत्र तृतीयविषये यः शब्दस्तेनावरोधः प्राप्तिर्भवति । कस्य । मोहस्य मूर्च्छायाः । कथम् । तच्छ्रवणेन शोकः, शोकान्मूर्च्छेति । एवं तत्स्वरूपश्रोतृणामपि मोहान्यथानुपपत्तेः न तत्र सुखलेश इति भावः ।

**॥ ॐ स्मरणाच्च ॐ ॥ २३ ॥**

**'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् ।**
**श्रवणादेव मूर्च्छादिरधरस्य यतो भवेत् ॥**
**तस्मान्न विस्तरेणैतत् कथ्यते राजसत्तम ।'**

**इति कौर्मे ॥ २३ ॥**

---

तत्त्वप्रकाशिका

अधोगतौ तृतीयत्वस्य प्रथमसूत्र एवोक्तत्वात् अत्र पुनस्तृतीयग्रहणवैयर्थ्यापत्तेः, तृतीयेऽपि तृतीयग्रहणम् । एतच्च अतिद्वेषिणामधिकदुःखसूचनायैव । **शब्दानुसारेणेति** । सम्यग्व्याख्याने अतिमूर्च्छेत्यादि ॥ २२ ॥

तृतीयतमसः स्वरूपश्रवणे श्रोतॄणां मोहप्राप्तिरित्येतत् कुतः यदन्यथानुपपत्त्या तत्र सुखाभाव इत्याशङ्कां स्मृत्या परिहरत्सूत्रं पठित्वा तां स्मृतिमुदाहरति **स्मरणाच्चेति** । अतोऽन्धतमसि सुखलेशाभावात् भवितव्यं तत्र तत्साधने च विरक्तेनेति सिद्धम् ॥ २३ ॥

—:o:—

## शेषतात्पर्यचन्द्रिका

पापपेटिका

## ॥ ॐ न तृतीये तथोपलब्धेः ॐ ॥ १९ ॥

एतदधिकरणप्रतिपाद्यम्

अत्र पञ्चसूत्र्या अन्धे तमसि सुखलेशराहित्यं समर्थ्यते ॥

सङ्गत्यादि

नन्वेतत् **अपि सप्त** इत्येतदनन्तरमेव सङ्गतम् । अन्धतमसस्य नित्यत्वप्रतिपादनानन्तरं तत्र सुखलेशोऽपि नास्तीति प्रतिपादयितुं युक्तत्वात् । सुखलेशराहित्यसमर्थनानन्तरं तत्र नित्यत्वसमर्थनस्योपयुक्तत्वेन एतदनन्तरमेव वा **अपि सप्ते**त्येतत्सङ्गतम् ॥

मैवम् । **अनिष्टादिकारिणामपि च श्रुतम्** इति चशब्दसमुच्चितदुःखान्तरप्रतिपादकसंयमनसूत्रस्थावरोहाक्षेपकत्वेन तत्रैवात्र सङ्गत्यभावात् । सप्तसु तृतीये वन्हौ सुखलेशोऽपि नास्तीत्यर्थस्य बाधितत्वेन तदानन्तर्ये तृतीयपदविरोधाच्च । इह पूर्वाधिकरणोदाहृते **तद्वर्जितास्त्रिधा याति तिर्यग्वा नरकं तमः** इति वाक्ये तृतीयत्वेन निर्दिष्टतमसः इह सूत्रस्थतृतीयशब्देन ग्रहणसौकर्याच्च ॥

अत एव **तिर्यग्वा नरकं तमः** इत्यर्वाग्गतित्वेन निर्दिष्टेषु तिर्यङ्नरकयोर्विवादाभावात् पापफलं तमश्चिन्त्यत इति वा अनन्तरसङ्गतिः पेटिकासङ्गतिश्च ॥

अत्र पूर्वपक्षसिद्धान्तौ टीकायामेव स्पष्टौ ॥

## शेषतात्पर्यचन्द्रिका

### सूत्रक्रमः

सूत्रक्रमस्तु—यत्र दुःखं सुखं तत्र[1] इति स्मृत्या व्याप्त्युपलब्धेः प्रथमद्वितीययोः यथा सुखमस्ति न तथा तृतीयेऽस्तीति मन्तव्यम् । **अथाविद्वान्** इत्यादिश्रुतेः । यत्र दुःखं सुखं तत्र[2] इति स्मार्तव्याप्तेः सङ्कोचोपपत्तेरिति विवक्षितकृत्स्नार्थप्रतिपादकस्य **न तृतीय** सूत्रस्य प्राथम्यम् ॥

स्मृतिमूलानुमानेन पूर्वपक्षिते कथं श्रुतिमात्रेण निर्णय इति शङ्कानिरासकस्य स्मृत्यनुमानविरोधापादकस्य **स्मर्यतेऽपि च** इत्यस्य द्वितीयता । यद्यपि श्रुतिमात्रं स्वतः प्रबलमिति वक्तुं शक्यम् । तिष्ठतु तावत् श्रुतिप्राबल्यसाधनायासः । स्मृत्यनुमानाभ्यामेव सिद्धान्तसम्भवादिति हृदयम् ॥

ननु तथापि साम्यमेव । सिद्धान्ते श्रुतेरिव पूर्वपक्षेऽपि स्मृतिमूलश्रुतेरावश्यकत्वादित्यतः प्रत्यक्षमप्यत्रास्तीति प्रतिपादकस्य **दर्शनाच्चे**त्यस्य तृतीयता ॥

नन्वेतदपि स्मृतितुल्यम् । अत एव हि प्रबलमपि प्रत्यक्षं भवतैवान्ते निवेशितमित्यतोऽर्थापत्तिप्रतिपादकस्य चतुर्थता ॥

तत्रासिद्धिपरिहारकस्य पञ्चमता—इति शङ्काक्रमेण ज्ञातव्यः ॥

पञ्चमे चशब्दः न केवलं मोहस्य स्मरणान्नासिद्धिः, अपि तु त्रैविध्यस्य चेति सूचयति ॥

---

[1]—[2] यत्र दुःखं तत्र सुखम्

## शेषतात्पर्यचन्द्रिका

पूर्वपक्षटीकावतारणम्

टीकाक्षरार्थस्तु—अत्र सङ्ग्रहोक्तसहस्थानन्यायमेव धर्मिणः साध्यस्य च निरूपणेन विवृण्वत् **न च दुःखसहस्थायित्वात् अन्धे तमस्यपि सुखम्**[1] इति वाक्यं, दुःखस्य सहस्थायित्वेनेति[2] विग्रहं सुखेनेत्यध्याहारञ्चाभिप्रेत्य, भाष्येण सह व्याचष्टे **अन्धं तमोपीति**[3] ॥

सिद्धान्तटीकावतारणम्

**कारणाभव**[4] इत्युक्त एव सैद्धान्तिकन्याय ईशेच्छाख्यकारणाभावादिति योज्य इत्यभिप्रेत्य, ईशेच्छाभावः कुत इत्यतस्तत्र हेतुप्रदर्शने[5] प्रवृत्तं **ईशस्याप्रियत्वेनैव कारणाभावात्** इति विवरणवाक्यं भाष्येण सह अभिसन्ध्युक्त्या व्याचष्टे **अयमभिसन्धिरिति** ॥

विवरणे एवकारतात्पर्यम्

न कारणगवेषणेन प्रयासः । तत्तत्साक्षिसिद्धद्वेषस्य स्फुटत्वादिति सूचनाय विवरणे एवकार[6] इति द्रष्टव्यम् ॥

सङ्क्षेपभाष्ये एतदधिकरणतात्पर्यनिरूपणम्

तमसि मग्नानामसुराणां केवलदुःखप्रदत्वेनैव तदवस्थाप्रेरकस्सन् वर्तत इति योजनायां **सर्वावस्थाप्रेरकश्च** इति सङ्क्षेपभाष्यम् एतदधिकरणतात्पर्यनिरूपकमिति ज्ञातव्यम् ॥

---

1 दुःखसहावस्थायित्वादन्धे तमस्यपि सुखमिति वाच्यम्

2 सहावस्थायित्वेनेति 3 अन्धतमोपीति ॥

4 भाव 5 प्रदर्शने च 6 एव तत्प्रकार

## शेषतात्पर्यचन्द्रिका

अद्वैतमतरीत्या अनिष्टाधिकरणपूर्वपक्षः

**अन्ये तु अनिष्टादिकारिणाम्** इत्यारभ्य **तृतीयशब्दावरोधः** इत्यन्तां दशसूत्रीम् एकमधिकरणं विधाय, इष्टादिकारिव्यतिरिक्ता अपि चन्द्रलोकं गच्छन्ति। **ये वै के चास्माल्लोकात्प्रयन्ति**[1] **चन्द्रमसमेव**[2] **ते सर्वे गच्छन्ति** इत्यविशेषेण श्रवणात्। न चात्र यावच्छ्रुतेरिव **अथैतयोः पथोर्नैकतरेण-चन, तानीमानि क्षुद्रमिश्राणि असकृदावृत्तीनि च भूतानि भवन्ति, जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमिति** श्रुतिविरोधात् सङ्कुचद्वृत्तित्वमिति वाच्यम्। तृतीयस्थानशब्दो हि न सर्वशब्दस्य सङ्कोचकः। तेन स्थान-मात्राभिधायकेन मार्गानभिधानात्। चन्द्रलोकादवतीर्णानामपि तत्स्थानत्व-सम्भवात्। सर्वेषां चन्द्रलोकगमनाभावे च देहमात्रलाभे पञ्चाहुतिप्रक्रियाया उपदिष्टाया असम्भवात् तेषां देहप्राप्तिर्न स्यात्। **नैकतरेणचनेति** चन्द्रलोके भोगं निषेधति, न गमनम्। न च भोगाभावे गमनवैयर्थ्यम्। अनन्यमार्गतया ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीतिवत् सांयमिनीं पुरीं गन्तुं चन्द्रलोकगमनादिति पूर्वः पक्षः। यथाहुः—

**सर्वशब्दो न सङ्कोच्यः स्थानमात्राभिधानतः।**
**देहाप्तये च चन्द्राप्तेरनिष्टादिकृतामपि**—इति॥

तत्रैव सिद्धान्तः

**अथैतयोः पथोरिति** मार्गद्वयस्य प्रकृततया तृतीयत्वमपि मार्गस्यैव समञ्जसम्। अवान्तरसङ्ख्यानियमस्य साजात्यापेक्षत्वात्। तस्मात् तृतीयस्थानं

---

[1] प्रयान्ति। [2] चान्द्रमसलोकमेव

## शेषतात्पर्यचन्द्रिका

मार्गान्तरं अनिष्टादिकारिणो गच्छन्तीति अर्थपर्यवसानेन अस्मादेव विशेषवचनात् सर्वशब्दः इष्टादिकारिषु सङ्कुचति[1]। इति पञ्चाम्यामाहुताविति वचनं देहं प्रापयति। नापञ्चम्यां प्रतिषेधति। वाक्यभेदप्रसङ्गात्। न चार्थात्प्रतिषेधति, तृतीयमार्गविषयविशेषवचनविरोधादिति सिद्धान्तः। यथाहुः—

> मार्गापेक्षं तृतीयत्वं मार्गस्यैव समञ्जसम्।
> पञ्चम्यां प्रापयेद्देहं श्रुतिर्नान्यत्र वारयेत्॥

इत्याहुः॥

सामान्याकारेण तन्निरासः

तन्न। रंहतिकृतात्ययसूत्राभ्यां प्रकृतस्य गमनागमनस्य अज्ञानिमात्रनिष्ठत्वसमर्थनाय पापिनां गमनागमनाक्षेपरूपस्य वैराग्यप्रतिक्षेपकस्य पूर्वपक्षस्यैव युक्तत्वेन चन्द्रलोकगमनसाधनपूर्वपक्षस्यायुक्तत्वात्। सांयमिनीं पुरीं गन्तुः उपरितनचन्द्रमण्डलस्य मार्गत्वाभावेन ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीति न्यायस्यावकाशाभावेन निर्दलत्वाच्च। सिद्धान्तेऽपि तृतीयस्थानशब्दात् सर्वशब्दसङ्कोचः, उत पापिनां नैकतरेणेति मार्गद्वयनिषेधात्? नाद्यः। चन्द्रलोकादवतीर्णानामपि तृतीयस्थानत्वसम्भवात्। तस्य मार्गपरत्वेऽपि चन्द्रलोकादर्वाक् मार्गान्तरसम्भवेन तस्याबाधकत्वात्। यागेन भावयेदित्यादौ साधनत्वस्य साध्यत्वेनेव आर्थिकेन श्रौतस्य बाधायोगाच्च। न द्वितीयः। भोगमात्रनिषेधकत्वापत्तेः। न च भोगाभावे गमनं व्यर्थमिति

[1] सङ्कुचति पञ्चम्यामाहुतिवचनं

## शेषतात्पर्यचन्द्रिका

वाच्यम् । कर्मवशेन भ्राम्यमाणस्य वैयर्थ्यशङ्कानुदयात् । पूर्वपक्षसिद्धान्तयोः पादार्थतया त्वया भाषितस्य वैराग्यस्याक्षेपसमाधानाभावात् चिन्ता चेयं निष्फला स्यात् । न ह्यनिष्टादिकारिणां चन्द्रलोकगमनेन वैराग्यमाक्षिप्यते । न वा तन्निरासेन समाधीयते । तस्मात् पापिनां[1] चन्द्रलोकगमने गमनागमननिबन्धनक्लेशस्याभावे न पापे[2] वैराग्यमुत्पत्तुमर्हमिति न पादार्थप्रतिकूलः पूर्वः पक्षः ? चन्द्रलोकगमनाभावे च गमनागमनक्लेशाभावेन न सिद्धान्तोऽपि पादार्थानुकूलः ॥

### अत्रैवामलानन्दमतानुवादनिरासौ

एतेन पञ्चाग्निविद्यायां अविशेषेण दिष्टं गताः श्रद्धाद्याहुतिमयभूतपरिष्वक्ताः पूर्वपक्षेऽनुचिन्तनीया. । सिद्धान्ते तु इष्टादिकारिण इति अमलानन्दोक्तं चिन्ताप्रयोजनं निरस्तम् । तथानुचिन्तनस्य वैराग्यसिद्धिं विना प्रयोजनान्तरादर्शनाच्च ॥

### आद्यसूत्रव्याख्यानपरीक्षा

यच्चाद्य सूत्रस्य पूर्वपक्षपरतया व्याख्यानं तन्न । मद्रीत्या पादार्थस्थापनाय पापिनामपि पूर्वप्रकृतगमनागमनार्थत्वसम्भवे पूर्वपक्षसूत्रत्वायोगात् । चशब्दवैयर्थ्याच्च । कथञ्चेदमवगतं पूर्वपक्षसूत्रमिति । तदुत्तरसूत्रे तुशब्दश्रवणादिति चेन्न । तत्तु समन्वयादित्यत्रापि तच्छ्रवणेण ततः पूर्वतनानामपि सूत्राणां तदापत्तेः ॥

---

[1] पापानां  [2] पापवैराग्य

## शेषतात्पर्यचन्द्रिका

### संयमनसूत्रव्याख्यानपरीक्षा

यच्च **संयमनेत्त्वि**त्यस्य—तुशब्दः पक्षं व्यावर्तयति । तथा च न सर्वे चन्द्रमसं गच्छन्तीति सिद्धयति । इतरे तु संयमनमवगाह्य स्वदुश्चरितानुरूपा यमयातना अनुभूय पुनरेवेमं[1] लोकं प्रत्यवरोहन्ति । एवम्भूतौ तेषामारोहावरोहौ भवतः । **'पुनः पुनर्वशमापद्यते मे' 'वैवस्वतं सङ्गमनं जनानाम्'** इति यमवचनरूपश्रुतौ यमवशत्वरूपतद्गतिदर्शनादिति व्याख्यानं—तदप्ययुक्तम् । यत इतरशब्दस्य प्रकृतसापेक्षत्वात् अनिष्टादिकारीतरेषां संयमनमिति स्यात् । **इष्टादिकारिणां प्रतीतेः** इति सूत्रस्थेष्टादिकारिसापेक्षत्वे तदानन्तर्यमेवास्य स्यात् । पूर्वपक्षसूत्रस्थानिष्टादिकारिपरत्वे तु **नैषामारोहावरोहाविति** सूत्रयितव्यत्वेन इतरशब्दास्वारस्याच्च । **संयमनमनुभूय पुनरिमं लोकं प्रत्यवरोहन्ति** इत्यस्य च यमभूलोकयोरधरोर्ध्वभावस्य स्थितत्वादयोगाच्च । सर्वशब्दाच्चन्द्रलोकप्राप्तिशङ्कने सर्वशब्दसङ्कोचकस्य प्रमाणस्य वक्तव्यत्वेन यमवशत्वप्रमाणकथनस्य, तथा संयमने यातनानुभवारोहावरोहादेः कथनस्य चोपयोगाभावाच्च । मद्रीत्या चशब्दसूचितक्लेशान्तरविवरणेन **अनुभूये**त्यन्तस्य, पापिनां मध्ये साधारणपापिनां यमलोकादुपरितनान् भूम्यादीन् प्रति आरोहः, इतरेषां तु गुर्वादिद्रोहिणां यमलोकादधःस्थान् तामिस्रादीन् प्रति अवरोह इति सूचनेनोत्तरार्धस्य च स्वारस्यसम्भवे त्वद्रीत्या अप्रस्तुतानुपयुक्तार्थत्वायोगाच्च ॥

---

[1] पुनरिमं

## शेषतात्पर्यचन्द्रिका

### स्मरन्तिसूत्रव्याख्यानपरीक्षा

एतेन नाचिकेतोपाख्यानादिषु सांयमने पुरे यमायत्तं कपूयकर्मविपाकं मनुव्यासप्रभृतयः स्मरन्ति च इति तृतीयव्याख्यानं निरस्तम्। कर्मविपाकप्रतिपादनस्योपयोगाभावात्। अवरोहे अपेक्षितप्रमाणानुपन्यासाच्च॥

### अपिसप्तसूत्रव्याख्यानपरीक्षा

एतेन **अपि च सप्त** इत्यपपाठेन चतुर्थं पठित्वा रौरवप्रमुखाः नरकाः सप्त दुष्कृतफलोपभोगभूमित्वेन पौराणिकैः स्मर्यते इति व्याख्यानं निरस्तम्। योगविभागानुपपत्तेश्च। मूलकोशेष्वदर्शनाच्च सम्प्रदायानभिज्ञतानिबन्धनोऽयमपपाठ एव। यदत्रोक्तम् अनिष्टादिकारिणो नरकान् प्राप्नुवन्ति कुतस्ते चन्द्रमसं प्राप्नुयुरित्यभिप्राय इति। तन्न। चन्द्रप्राप्तेः पूर्वं पश्चाद्वा नरकानुभवसम्भवेन कैमुतिकन्यायानवकाशात्॥

### तत्रापिसूत्रव्याख्यानपरीक्षा

एतेनैव तेष्वपि सप्तसु नरकेषु तस्यैव यमस्य अधिष्ठातृत्वरूपव्यापाराभ्युपगमात् अविरोधः। यमप्रयुक्ता एव हि ते चित्रगुप्तादयो रौरवादिष्वधिष्ठातारः स्मर्यन्ते, अतोऽन्ये चित्रगुप्तादयो रौरवादिष्वधिष्ठातारः स्मर्यन्त इति न शङ्कनीयमिति पञ्चमस्य व्याख्यानं प्रत्युक्तम्। कथञ्चिद्यातनानुभवस्यैव सिषाधयिषितत्वेन तत्र यमकर्तृकत्वचित्रगुप्तकर्तृकत्वोक्तिविरोधपरिहारस्य अनवसरत्वादनुपयुक्तत्वाच्च। नरकस्य सदुःखत्वे प्राप्तविरोधपरिहारस्य अवश्यकर्तव्यस्य प्रतिपादनाय अस्य सूत्रस्य मद्रीत्या अधिकरणान्तरत्वे सम्भवति गुणसूत्रत्वायोगाच्च॥

## शेषतात्पर्यचन्द्रिका

विद्याकर्मसूत्रव्याख्यानपरीक्षा

**'अथैतयोः पथोर्नैकतरेण'** इति श्रुतौ एतच्छब्देन **'तद्य इत्थं विदुः' 'इष्टापूर्ते दत्तम्'** इति पूर्ववाक्याभ्यां प्रकृतत्वात् विद्याकर्मणोः परामर्शः। तथा चैतयोरित्यस्य विद्याकर्मणोरिति पर्यवस्यति। ततश्च विद्याकर्मरूपमार्गद्वयापेक्षयैव निषेधः, तृतीयत्वं चेति न चन्द्रलोकप्राप्तिरिति षष्ठव्याख्यानमप्ययुक्तम्। अस्य साक्षादेव पूर्वपक्षप्रतिक्षेपकत्वेन द्वितीयत्वापत्त्या षष्ठत्वायोगात्। चन्द्रलोकप्राप्त्यभावे का तर्हि तेषां गतिरिति पृच्छाया एतदनन्तरभावित्वेन तत्परिहारार्थस्य द्वितीयादेरेतदानन्तर्यस्यैव युक्तत्वाच्च॥

नतृतीयसूत्रव्याख्यानपरीक्षा

यच्च न तृतीये स्थाने देहलाभाय पञ्चसङ्ख्यानियम आहुतीनामादर्तव्यः। यतो **जायस्व म्रियस्वेत्येतत् तृतीयं स्थानमिति** श्रुतौ आहुतिसङ्ख्यानियममन्तरेण देहप्राप्तिरुपलभ्यते। पुरुषशब्दात् मनुष्यशरीरोद्भवे आहुतिसङ्ख्यानियमेऽपि कीटपतङ्गादिशरीरोत्पत्तौ तदभावाच्च। अपञ्चम्यामाहुतौ पुरुषवचस्त्वप्रतिषेधाभावेन येषामारोहावरोहौ सम्भवतः तेषां पञ्चम्यामाहुतौ देह उद्भविष्यति, अन्येषां तु विनैवाहुतिसङ्ख्यया भूतान्तरोपसृष्टाभिरद्भिः देह आरप्स्यत इति सम्भवाच्चेति **न तृतीये तथोपलब्धेः** इत्यस्य भाष्यं, तन्न युक्तम्। न हि **जायस्व** इत्यादिश्रुतौ चाहुतिमन्तरा तृतीयस्थाने देहोपलब्धिरस्ति। न च तदनुक्तिमात्रेण तथोपलब्धिर्युज्यते। तथा सति सौर्यादावपि प्रयाजाद्यनुक्तिमात्रेण तद्विनापि ब्रह्मवर्चसाद्युपलब्धिः स्यात्।

## शेषतात्पर्यचन्द्रिका

द्वितीया युक्तिस्तु सूत्रानुक्ता भवदुदितप्रक्रियानुपयुक्ता च। न ह्यनिष्टादि-कारिणो न मनुष्याः। अत एव न तृतीयापि युक्तिः समीचीना। अनिष्टादिकारिणामपि यमलोकादारोहावरोहासम्भवात् ॥

### स्मर्यतेसूत्रव्याख्यानपरीक्षा

यच्च द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनां चायोनिजत्वं स्मर्यते। द्रोणादीनां योषिद्विषया एका आहुतिर्नास्ति। धृष्टद्युम्नादीनां योषित्पुरुषविषये द्वे अप्याहुती न स्तः[1]। तथा च आहुतिसङ्ख्यानियमो नास्तीति सेत्स्यति इति **स्मर्यतेऽपि च लोके** इत्यस्य सूत्रस्य भाषणं, तदपि न। लोकपद-वैयर्थ्यात्। द्रोणादीनां लोकत्वाभावाच्च। अपवादेन तत्र तथात्वेऽपि प्रकृते तदभावाच्च। प्रधानप्रमेय एव हेत्वन्तरकथनसम्भवे अवान्तरप्रमेये तदयोगाच्च। एतेन बलाकापि अन्तरेण रेतःसेकं गर्भं धत्त इति लोकरूढि-रिति लोकशब्देनोच्यते इति च निरस्तम् ॥

यच्च **दर्शनाच्चे**त्यस्य सूत्रस्य विवरणं। जरायुजाण्डजस्वेदजोद्भिज्ज-लक्षणे चतुर्विधे भूतग्रामे स्वेदजोद्भिज्जयोः अन्तरेणैव ग्राम्यधर्मम् उत्पत्ति-दर्शनाच्च नाहुतिनियम इति। तन्न। असिद्धेः। न हि स्वेदजादौ ग्राम्यधर्मा-भावः प्रत्यक्षसिद्धः। किन्तु स्मृत्यादिनैव। अत एव पूर्वसूत्रेणैव एतत्सिद्ध-मिति अस्य सूत्रस्य वैयर्थ्याच्च। योगविभागायोगाच्च। चतुर्विधे भूतग्राम इति अध्याहारस्य व्यर्थत्वाच्च। प्रकृते अपवादाभावेन वैषम्याच्च। प्रत्यक्षस्य प्रबलत्वेन नवमत्वायोगाच्च ॥

---

[1] द्वे आहुती न स्तः

## शेषतात्पर्यचन्द्रिका

### तृतीयशब्दसूत्रव्याख्यानपरीक्षा

यच्च—भूतग्रामस्य चतुर्विधत्वमनुपपन्नम्, **तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जमिति** त्रिविधत्वश्रवणादित्याशङ्क्य, **तृतीयशब्दावरोधः संशोकजस्य** इति अपपाठेनैव[1] सूत्रं पठित्वा, तृतीयशब्देनैव उद्भिज्जाख्येन स्वेदजोपसङ्ग्रहः, उभयोरपि स्वेदजोद्भिज्जयोः भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वादिति व्याख्यानं—तन्न। साक्षाद्बादरायणप्रेमायनोदाहृतपाठे[2] सप्तम्यन्तश्रवणेन समस्तपदत्वेन व्याख्यानायोगात्। संशोकजशब्देन स्वेदजग्रहणायोगाच्च। शोकजशब्दस्य स्वेदे योगोपपत्तावपि तज्जे तदभावात्। लक्षणायां सैव दोषः। लाघवाय स्वेदजस्येत्येव सूत्रणापाताच्च। चतुर्विधत्वे श्रुतिविरोधपरिहारासङ्गतेश्च[3]। न हि दर्शनसूत्रे चतुर्विधत्वं श्रुतम्। तेषां खल्वेषामिति श्रुत्यनुसारेण त्रिविधे भूतग्रामे ग्राम्यधर्मं विना उत्पत्तिदर्शनादिति सूत्रयोजनासम्भवे तद्विरुद्धचतुर्विधपदमध्याहृत्य दर्शनसूत्रं व्याख्याय चातुर्विध्ये श्रुतिविरोधपरिहाराय अन्तिमसूत्रप्रवृत्तिरिति व्याख्यानस्य अपेशलत्वाच्च॥

### दोषोपसंहारः

एवमेव दशानामपि सूत्राणामवश्यवक्तव्यानेकप्रमेयसाधकतया अनेकाधिकरणत्वे सम्भवति एकाधिकरणत्वमन्याय्यमित्याद्यूह्यम्॥

### विशिष्टाद्वैत्यभिमताधिकरणपरीक्षा

केचित्तु दशसूत्रीं **तत्स्वाभाव्यापत्तिरि**त्यतः प्राक्तनीम् एकाधिकरणं विधायापि **विद्याकर्मणो**रित्यतः प्राचीनानि पञ्च सूत्राणि अन्येषामेव

---

1 अपवादेनैव    2 प्रेमापज्ञोदाहृत    3 तिश्च

## शेषतात्पर्यचन्द्रिका

द्वितीया युक्तिस्तु सूत्रानुक्ता भवदुदितप्रक्रियानुपयुक्ता च। न ह्यनिष्टादिकारिणो न मनुष्याः। अत एव न तृतीयापि युक्तिः समीचीना। अनिष्टादिकारिणामपि यमलोकादारोहावरोहासम्भवात् ॥

### स्मर्यतेसूत्रव्याख्यानपरीक्षा

यच्च द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनां चायोनिजत्वं स्मर्यते। द्रोणादीनां योषिद्विषया एका आहुतिर्नास्ति। धृष्टद्युम्नादीनां योषित्पुरुषविषये द्वे अप्याहुती न स्तः[1]। तथा च आहुतिसङ्ख्यानियमो नास्तीति सेत्स्यति इति **स्मर्यतेऽपि च लोके** इत्यस्य सूत्रस्य भाषणं, तदपि न। लोकपदवैयर्थ्यात्। द्रोणादीनां लोकत्वाभावाच्च। अपवादेन तत्र तथात्वेऽपि प्रकृते तदभावाच्च। प्रधानप्रमेय एव हेत्वन्तरकथनसम्भवे अवान्तरप्रमेये तदयोगाच्च। एतेन बलाकापि अन्तरेण रेतःसेकं गर्भं धत्त इति लोकरूढिरिति लोकशब्देनोच्यते इति च निरस्तम् ॥

यच्च **दर्शनाच्चे**त्यस्य सूत्रस्य विवरणं। जरायुजाण्डजस्वेदजोद्भिज्जलक्षणे चतुर्विधे भूतग्रामे स्वेदजोद्भिज्जयोः अन्तरेणैव ग्राम्यधर्मम् उत्पत्तिदर्शनाच्च नाहुतिनियम इति। तन्न। असिद्धेः। न हि स्वेदजादौ ग्राम्यधर्माभावः प्रत्यक्षसिद्धः। किन्तु स्मृत्यादिनैव। अत एव पूर्वसूत्रेणैव एतत्सिद्धमिति अस्य सूत्रस्य वैयर्थ्याच्च। योगविभागायोगाच्च। चतुर्विधे भूतग्राम इति अध्याहारस्य व्यर्थत्वाच्च। प्रकृते अपवादाभावेन वैषम्याच्च। प्रत्यक्षस्य प्रबलत्वेन नवमत्वायोगाच्च ॥

---

[1] द्वे आहुती न स्तः

## शेषतात्पर्यचन्द्रिका

तृतीयशब्दसूत्रव्याख्यानपरीक्षा

यच्च—भूतग्रामस्य चतुर्विधत्वमनुपपन्नम्, **तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जमिति** त्रिविधत्वश्रवणादित्याशङ्क्य, **तृतीयशब्दावरोधः संशोकजस्य** इति अपपाठेनैव[1] सूत्रं पठित्वा, तृतीयशब्देनैव उद्भिज्जाख्येन स्वेदजोपसङ्ग्रहः, उभयोरपि स्वेदजोद्भिज्जयोः भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वादिति व्याख्यानं—तन्न। साक्षाद्बादरायणप्रेमायनोदाहृतपाठे[2] सप्तम्यन्तश्रवणेन समस्तपदत्वेन व्याख्यानायोगात्। संशोकजशब्देन स्वेदजग्रहणायोगाच्च। शोकजशब्दस्य स्वेदे योगोपपत्तावपि तज्जे तदभावात्। लक्षणायां सैव दोषः। लाघवाय स्वेदजस्येत्येव सूत्रणापाताच्च। चतुर्विधत्वे श्रुतिविरोधपरिहारासङ्गतेश्च[3]। न हि दर्शनसूत्रे चतुर्विधत्वं श्रुतम्। तेषां खल्वेषामिति श्रुत्यनुसारेण त्रिविधे भूतग्रामे ग्राम्यधर्मं विना उत्पत्तिदर्शनादिति सूत्रयोजनासम्भवे तद्विरुद्धचतुर्विधपदमध्याहृत्य दर्शनसूत्रं व्याख्याय चातुर्विध्ये श्रुतिविरोधपरिहाराय अन्तिमसूत्रप्रवृत्तिरिति व्याख्यानस्य अपेशलत्वाच्च॥

दोषोपसंहारः

एवमेव दशानामपि सूत्राणामवश्यवक्तव्यानेकप्रमेयसाधकतया अनेकाधिकरणत्वे सम्भवति एकाधिकरणत्वमन्याय्यमित्याद्यूह्यम्॥

विशिष्टाद्वैत्यभिमताधिकरणपरीक्षा

केचित्तु दशसूत्रीं **तत्स्वाभाव्यापत्तिरित्यतः** प्राक्तनीम् एकाधिकरणं विधायापि **विद्याकर्मणोरित्यतः** प्राचीनानि पञ्च सूत्राणि अन्येषामेव

1 अपवादेनैव 2 प्रेमापक्षोदाहृत 3 तिश्च

## शेषतात्पर्यचन्द्रिका

व्याख्यानमनुसृत्य **तत्रापि च तद्व्यापरात्** इति पञ्चमं चशब्देन विना अपपाठेन पठित्वा[1] तच्च पूर्वपक्षतयैव व्याख्याय, षष्ठं सिद्धान्तसूत्रं अनिष्टादिकारिणामपि चन्द्रप्राप्तिरस्तीत्येतन्नोपपद्यते, '**तद्य इत्थं विदुर्ये चेमेऽरण्ये**' '**तद्य इमे[2] ग्राम[3] इष्टापूर्ते**' इति पूर्ववाक्ये विद्याकर्मणोः प्रकृतत्वात् अनन्तराम्नातयोः देवयानपितृयाणयोः विद्याकर्मसाध्यत्वावगमात् पुण्यकर्महीनानां कारणाभावेन चन्द्रलोकप्राप्त्ययोगात् इति व्याचख्युः । तन्न । सर्वेषां सिद्धान्तसूत्रत्वसम्भवे बहूनामपि पूर्वपक्षसूत्रत्वस्यायोगेन सम्प्रदायानभिज्ञतानिबन्धनव्याख्यानमिषेण सूत्रकृद्द्रोहाचरणापातात्[4] । विद्याग्रहणवैयर्थ्याच्च । दृष्टान्ताभिप्राये च बह्वध्याहारापातात् । शेषमन्येषां मतात् नातीव भिन्नमिति न पृथङ् निराक्रियते ॥

इति नतृतीयाधिकरणम् ॥ १५ ॥

—:o:—

[1] पठित्वा च [2] अथ य इमे [3] ग्रामे [4] सूत्रकृदद्रोहचरणा



*Courtesy K. Seetharama Rao, Dasaprasada.*

## श्रीमज्जयतीर्थाः

माध्वग्रन्थान् स्वबन्धूनिव सरसहृदाऽऽलिङ्ग्य विज्ञातभावः
संयोज्यालङ्कृताभिः स्वसहजमतिसम्भूतवाग्भिर्वधूभिः ।
कृत्वाऽन्योक्तीश्च दासीः बुधहृदयगृहं प्रौढवृत्तीश्च वृत्तीः
दत्वाऽन्योन्याभियोगं जयमुनिरसकृद्वीक्ष्य रेमे कृतार्थः ॥

नो धत्ते जडतां न भङ्गमयते नीचस्थलं नेहते
स्खालित्यं न च याति नैति कृशतां क्षोभं क्वचिन्नाश्नुति ।
मानं नोज्झति नो जहाति च पदं व्यर्थं न कोकूयते ।
कल्येयं जयतीर्थकोविदवचःकल्लोलिनी सेव्यताम् ॥

अथ तत्स्वाभाव्याधिकरणम् ॥ १६ ॥

'धूमो भूत्वाभ्रं भवति'इत्याद्यन्यभावः श्रूयते । स कथमिति । अतो ब्रवीति—

॥ ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ॥ २४ ॥

धूमादिषु प्रविश्य तद्गतौ गतिः, तत्स्थितौ स्थितिः इत्यादिरेव तद्भावापत्तिः । न ह्यन्यस्यान्यभावो युज्यते । न च तत्पदप्राप्तिः । गारुडे च—

'धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव तु ।
स्थितौ स्थितिः प्रवेशश्च लघुत्वादिस्तथैव च ॥
न ह्यन्यस्यान्यथाभावो न च तत्पदमिष्यते ।
विद्यागम्यं पदं यस्मान्न तत्प्राप्यं हि कर्मणा ॥
एकदेशस्वभावेन वागभेदापि युज्यते ।
यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपि'—इति ॥ २४ ॥

---

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनवैराग्यसिद्ध्यर्थं कर्मिणां धूमादिभावनिवारणात् अस्ति शास्त्रादिसङ्गतिः । कर्ममात्रेण महासुखे धूमादिभावे लभ्यमाने नायं तत्र विरज्येत । अतोऽसौ निवारणीयः ॥

तत्र विषयं दर्शयति **धूम इति** । कर्मिणः स्वर्गादवतीर्णा यथागतमन्यथा चागच्छन्तीत्युक्तम् । तेषामागतौ धूमादिदेवताभावः श्रूयते **धूमो भूत्वेति** । स धूमादिभावोऽत्र विषय इत्यर्थः ॥

## तत्त्वप्रकाशिका

सन्देहप्रकारं दर्शयति स इति। स धूमादिभावो धूमादिदेवतैक्यं वा कर्मिणस्तत्पदप्राप्तिर्वा प्रकारान्तरं वेत्यर्थः। शब्दस्यानेकवृत्तयः सन्देहबीजम् ॥

पूर्वपक्षः

ऐक्यं तत्पदप्राप्तिर्वेति पूर्वः पक्षः। सामानाधिकरण्यश्रुतेः। सा ह्युभयथोक्तरीत्या युज्यते। अन्यथा तद्विरोधः। न च श्रुतेरन्यार्थत्वं कल्पनीयम्। बाधकमन्तरेण मुख्यार्थत्यागायोगात्। न च कर्मिणो देवतापदप्राप्तिरसम्भाविता। धूमादिदेवताभिः सहावस्थानात्, स्नेहादिवशेन ताभिरेव स्वपदस्य दातुमपि शक्यत्वात्। अतः प्रकारद्वयेऽपि सकृदनुष्ठितयज्ञानामाकल्पसमाप्ति परमसुखसम्भवात् व्यर्थं कर्मणि तत्फले च वैराग्यमिति ॥

सिद्धान्तः

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे अत इति। अत्र धूमादिभावप्राप्तिर्नाम कर्मिणः तत्स्वभावत्वप्राप्तिरेव। न चैतावता पदप्राप्तिपर्यायत्वम्। तद्गतौ गतिरित्याद्येकदेशस्वभावत्वात् सादृश्ये[1] च सामानाधिकरण्यदर्शनात्। तत्प्रवेशेन स्थानैक्याभिप्रायं वा एतद्वाक्यम्। तथा प्रयोगदर्शनादिति भावः। कुतोऽर्थोऽयं स्यादित्यत आह न हीति। प्रागन्यस्य कर्मिणो धूमादिदेवतैक्यं तावदनुपपन्नम्। अन्यस्यान्यभावादर्शनात्। नापि तत्पदप्राप्तिर्युक्ता। तस्या नियताधिकारिभिर्विधयैव गम्यत्वात्। युगपदनेककर्मिसमवायेऽनेकेषामेकपदप्राप्त्ययोगाच्च। अतो मुख्यतः प्रतीयमानार्थासम्भवेन उक्तार्थस्यैवोपपत्तेः अयमेव श्रुत्यर्थ इति भावः ॥

एवं न्यायप्राप्तेऽर्थे स्मृतिं चाह गारुडे चेति। अभेदा अभेदवादिनी। अतो धूमाद्यैक्याद्यभावात् युक्तमेव कर्मतत्फलयोः वैराग्यमिति सिद्धम् ॥२४॥

[1] तादृशे

## शेषतात्पर्यचन्द्रिका

पुण्यपापपेटिका

## ॥ ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ॥ २४ ॥

पेटिकासङ्गतिः

एवं चरणादित्यन्तया दशाधिकरण्या पुण्यपेटिकया, अनिष्टादिकारिणामित्यारभ्य पञ्चाधिकरण्या पापपेटिकया च वैराग्यस्यावश्यानुष्ठेयत्वे[1] व्युत्पादित एव पुण्यपापसाधारण्येन कर्मफलविचारणाय प्रवृत्तायाः पञ्चाधिकरण्याः साधारणपेटिकाया उदयात् अस्याः पुण्यपापपेटिकाभ्यामानन्तर्यम् । यद्यपि साधारण्येन विचारानन्तरं विशेषविचारोऽपि दृष्टः । तथापि वक्ष्यमाणरीत्या अस्याः नतृतीयनयानन्तर्य इव योन्यधिकरणानन्तर्ये तयोः पेटिकयोः सङ्गत्यदर्शनात् न वैपरीत्यमर्हम् ॥

अधिकरणसङ्गतिः

यथा **अपि नीचगतौ किञ्चित् किमु मानुपदेहिनः** इति वाक्यं **न तमः सुखानुवृत्तम्** इत्यादिश्रुत्यनुमानस्मृतिप्रत्यक्षार्थापत्तिरूपप्रमाणबलात् अन्यार्थं भवति तथा **धूमो भूत्वे**त्यादिवाक्यमपि इत्यतिदेशाद्वा ; युक्तः पूर्वत्र श्रुतिविरोधेनार्थसङ्कोचः, स्वार्थस्यात्यन्तबाधाभावात्, इह तु सामानाधिकरण्यस्यात्यन्तबाधात् नान्यार्थकल्पनमित्याक्षेपाद्वा अनन्तरसङ्गतिः ॥

पूर्वपक्षः

तत्र धूमादिवाक्यं अभिमान्यधिकरणन्यायेन धूमादिदेवतापरमिति सिद्धमेव । तथा चात्र श्रूयमाणो धूमादिभावः धूमादिदैवतैक्यमेव । सामा-

---

[1] त्वेऽप्युत्पादित

## शेषतात्पर्यचन्द्रिका

नाधिकरण्यात् स्पष्टं तस्य प्रतीतेः। न चामुख्योऽर्थः कल्प्यः, बाधकाभावात्। **धूमो भूत्वाभ्रं भवति** इति धूमदैवतैक्यमापन्नस्य अभ्रदैवतैक्यम् उत्पत्तिशिष्टगुणावरुद्धे[1] आमिक्षायागे वाजिनमिव उपदेष्टुमशक्यमिति चेत्, तत्र भक्षणरूपमुखान्तरसद्भावेन, उत्पत्तिशिष्टसोमावरुद्धेऽपि यागे राजन्यकर्तृके **स यदि सोमं बिभयिषेत् न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्युन्मृज्य तदस्मै[2] भक्षं प्रयच्छेन्न सोमम्** इतिवाक्यश्रुतफलचमसवत्, **मत्सीन्द्रमिन्दो पवमानविष्णुम्** इत्यत्र इन्द्रत्वपवमानत्वादिविरुद्धमुखपरित्यागेन अन्तस्थस्वरूपमुखान्तरेण ऐक्यवच्च, इहापि धूमलोकगमनकाले धूमदेवतैक्यं, तत उत्तरलोकगमनकाले अभ्रादिदेवतैक्यमिति मुखभेदेनोपपत्तेः। यदि च दृष्टानुसारिणी कल्पना, अत एव चक्षुरादौ गन्धग्रहणशक्तिः घटस्य पटात्मकत्वं वा अदृष्टं न कल्प्यते, यदा चैवं किमु मानुषस्य देवतात्मकत्वमित्यभिमानः, तदा तत्पदप्राप्तिरेव श्रुत्यर्थोऽस्तु। न च मुख्यार्थत्यागाविशेषात् सिद्धान्त्यभिमतार्थ एवास्त्विति वाच्यम्। **अयमिदानीं राजा भवति** इत्यादिबहुप्रयोगदर्शनेन **विरोधः कर्मणि** इत्युक्तन्यायेन सिद्धान्तिभिरपि इन्द्रादिदेवतापदं प्राप्तेषु व्यक्त्यन्तरेष्वपि, इन्द्रादिशब्दप्रयोगाङ्गीकारेण च तस्यैव मुख्यत्वात्। न च तत्पदप्राप्तिरयुक्ता, हेत्वभावादिति वाच्यम्। यज्ञादिना सन्तुष्टतत्तद्देवतया स्वस्वपददानसम्भवात्। न च परदत्तं कार्याकारीति वाच्यम्। ईश्वरदत्तकर्तृत्वादौ तद्दर्शनात्। तथा च उभयथापि श्रुत्यर्थसम्भवात् सिद्धान्त्यभिमतः **तद्गतौ गतिः**,

[1] वरोधे [2] तमस्मै

## शेषतात्पर्यचन्द्रिका

**तत्स्थितौ स्थितिः** इत्यादिसादृश्यनिबन्धनो गौणार्थो न सम्भवति। यत्किञ्चिद्बाधगर्भस्य सङ्कोचस्याङ्गीकारेऽपि आत्यन्तिकबाधस्यायोगादिति पूर्वः पक्षः ॥

### सिद्धान्तः

सिद्धान्तस्तु—सन्तुष्टापि देवता योग्यमेव दद्यात्। ग्रहीताऽपि योग्यमेव गृह्णीयात्। अत एव चायोग्यमपि चक्रादि याचमानेभ्यः अश्वत्थामादिभ्यः अदातारः कृष्णादयः, दाशरथिपाण्डवादिभिः दीयमानमपि राजपदं निर्वहणायोग्यतामालोच्य ब्राह्मणा अप्रतिगृह्णन्तश्च श्रूयन्ते। किञ्च स्यादेवं यदि स्नेहादिना दातुमर्हं श्रूयेत। विद्याकर्मप्राप्यं हि तत्पदं श्रूयते। **नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिता** इति। प्रत्युत ज्ञानरहितानां तन्निषिध्यते। तदैक्यं तु दूरापास्तम्। यागादिविरुद्धभक्षणरूपमुखान्तरवत् इह मुखान्तरस्याभावात्। ऐक्यस्यैवोक्तरीत्या अयोगेन मुखभेदसहस्रेणापि विधातुमशक्यत्वात्। न च गौणार्थग्रहणे दोषः। यजमानादिवाक्ये तदभावात्। अन्यथा तत्रापि मुखान्तरेणार्थस्य मुख्यस्यैव सम्भवे वृत्त्यन्तरोच्छेदः स्यादिति ॥

### अद्वैतिसम्मताधिकरणपरीक्षा

अन्ये तु **साभाव्यापत्तिरुपपत्तेः** इत्यपपाठं कल्पयित्वा अधिकरणमेवं व्याचक्षते—**अथैतमेवाध्वानं पुनरावर्तन्ते**[1], **यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति** इत्यादि श्रुतौ यद्यपि **यथेतमाकाशमाकाशाद् वायुम्**इत्यतो न तादात्म्यं स्फुटमवगम्यते। तथापि **वायुर्भूत्वे**त्यादि

[1] पुनर्निवर्तन्ते

शेषतात्पर्यचन्द्रिका

स्फुटतरं तादात्म्यावगमात् यथेतमित्येतदपि तादात्म्य एवावतिष्ठते। न चान्यस्यान्यभावानुपपत्तिः। मनुष्यशरीरस्य नन्दिकेश्वरस्य महादेवप्रसादाद्दे-वदेहरूपपरिणामस्य, देवदेहस्यापि नहुषस्य तिर्यक्त्वपरिणामस्य च स्मरणा-दिति पूर्वः पक्षः। यदाहामलानन्दः—

आकाशाद्यात्मकत्वं स्यात् कर्मिणां भवतिश्रुतेः।
अन्यस्यान्यात्मता दृष्टा नन्दीशनहुषादिषु ॥
भूत्वेति कर्मिणो वायोस्तादात्म्यप्रतिपादनात्।
आकाशस्यापि तादात्म्यं कर्मित्वेऽपि प्रतीयत—इति ॥

सिद्धान्तस्तु—युक्तमेतत् यद्देवशरीरमजगरभावेन परिणमते। देव-देहेन सममजगरशरीरस्याभावात्। यदि तु देवाजगरशरीरे समसमये स्याताम्, न तदा परस्परात्मनी विक्रियेते। न हि दधिपयसी समसमये परस्परात्मनी शक्ये सम्पादयितुम्। तदेवं सूक्ष्मशरीराकाशयोः युगपद्भावापन्न-परस्परात्मत्वं भवितुमर्हति। एवं वाय्वादिष्वपि योज्यम्। तथा च **आकाशम्** इत्यादौ नाकाशादितादात्म्यापत्तिर्विवक्षिता। किन्तु समानो भावः रूपं येषां ते सभावाः। तेषां भावः साभाव्यम्, सारूप्यं सादृश्यमिति यावत्। तदा-पत्तिरेव विवक्षिता। सति चैवं सूक्ष्मत्वसादृश्येन वाय्वादौ चैकदेशसंसर्गा-दिना सादृश्येनेह श्रुतेः गौणत्वेनोपपत्तेः। अन्यस्यान्यभावायोगेनान्यथाश्रुते-रनुपपत्तेः इति सूत्राक्षरार्थः। यदाह—

सिद्धस्यासिद्धरूपेण परिणामो हि दृश्यते।
सिद्धाकाशादिरूपेण नान्यस्य परिणामिता—इति ॥

## शेषतात्पर्यचन्द्रिका

तन्न । किमाकाशादिशब्दैर्देवता विवक्षिता, उत जडमेव । नाद्यः देवतायाः निर्विकारत्वेनान्यात्मना परिणामायोगात् । नन्दीशदेहादिदृष्टान्तकथनायोगाच्च । न द्वितीयः । दैवतैक्यस्य सुखरूपत्वेऽपि जडैक्यस्य तदभावेन वैराग्यानाक्षेपकत्वात् । दृष्टान्तोक्तिरपि भारतादिशास्त्राभिनिवेशाभावनिबन्धना । न हि नन्दिकेश्वरस्य नहुषस्य वा शरीरं देवाजगरशरीरात्मना परीणतं श्रूयते । न च तयोश्शरीरं मनुष्यदेवशरीरात्मकं, किन्तु गोवृषमनुष्यशरीरमेव वरशापादिना त्यक्त्वा देवाजगरशरीरे प्राप्त इत्येव श्रूयते । अत एव नन्दिनहुषयोः पूर्वपक्षाभिमतं अन्यात्मना परिणाममङ्गीकृत्य वैषम्येण सिद्धान्तोऽप्ययुक्तः । प्रयोजनाभावाच्चेदमधिकरणं व्यर्थम् । आकाशाद्यैक्ये सति न रमणीयादियोनिप्राप्तिः, सादृश्ये तु सेति चिन्ताप्रयोजनममलानन्दोक्तमस्त्विति चेन्न । आकाशैक्येऽपि[1] शरीरावयवाकाशस्यैव योनिप्राप्तेः[2] सम्भवात् । योनिप्राप्तेः[3] सादृश्यविघातकत्वेन तत्सत्त्वे तदसम्भवाच्च । प्रत्युत आकाशैक्ये जडैक्यापन्नस्य सुखलेशाभावेन कर्मणि वैराग्यस्य सिद्ध्या, सिद्धान्ते तदसिद्ध्या च, पूर्वपक्षसिद्धान्तयोर्विनिमयस्यैव युक्तत्वाच्च । सम्प्रदायपरम्परागतपाठमवधूय पाठान्तरकल्पने व्यासद्रोहचिकीर्षातो नान्यत्कारणमवगच्छाम इति ॥

### विशिष्टाद्वैतिसम्मताधिकरणपरीक्षा

अत्र केषाञ्चिद्व्याख्यानं यथापाठमप्यन्येषां व्याख्यानानुसारीत्यसमञ्जसं वेदितव्यम् ॥

---

[1] आकाशाद्यैक्येऽपि    [2] योनिप्राप्तिसम्भवात्

## शेषतात्पर्यचन्द्रिका

स्वयूथ्यानां केषाञ्चिदेतदधिकरणरचनम्

**टीकाक्षरार्थस्तु**— अत्र **धूमो भूत्वाभ्रं भवतीत्युक्तः** पितृयाणः कर्मिणो युक्तो न वेति सन्देहे नान्यस्यान्यभावो युज्यते । नापि तत्पदप्राप्तिः । विद्यागम्यत्वात् । श्रुतोऽपि पितृयाणो न युक्त इति स कथमिति भाष्यं पूर्वपक्षप्रदर्शकमिति व्याख्याय; अत्र श्रूयमाणो नान्येन अन्यस्यैक्यम् । नापि तत्पदप्राप्तिः । किन्तु तद्गतौ गतिरित्यादिरूपतत्स्वाभाव्यापत्तिः । अतो नायुक्त इति सिद्धान्त इति केचिद् व्याचक्षते ॥

एतन्निरासार्थं स्वमतेनाधिकरणरचनमिति
टीकावतारणम्

तत्र **न च धूमादिदेवतासहावस्थानात् कर्मिणोऽपि तत्पदप्राप्तिः** इति पूर्वपक्षसूचकविवरणवाक्ये तत्पदप्राप्तिनिरासानुपपत्तिः । न हि पूर्वपक्षिणैव निरस्तः पूर्वपक्षो भवति । प्रस्थानान्तरत्वान्न विरोध इति चेत् । न । एककण्ठतयोपपत्तौ तथात्वायोगात् । इहापि भाष्ये **न च तत्पदप्राप्तिः** इति सिद्धान्ते तस्य प्रतिक्षेपेण विवरणोक्तस्यैव प्रत्यभिज्ञानाच्च । **न ह्यन्यस्यान्यथाभावो न च तत्पदमिष्यते** इति गारुडवचने स्पष्टं पूर्वपक्षद्वयनिरासेन सिद्धान्तकरणाच्च । न च पूर्वपक्षिदूषित एव पक्षोऽनूद्यत इति वाच्यम् । वैयर्थ्यात् । पूर्वपक्षे निरासेनैव सार्थक्यसम्भवे तदयोगाच्च । न च **स कथम्** इति भाष्यवैयर्थ्यम् । तस्य सन्देहप्रकारप्रदर्शकत्वेन सार्थक्यात्, साक्षात्सङ्गतिसम्भवे प्रासङ्गिक्या अयोगश्चेति मन्वानः स्वमतेनाधिकरणमारचयति **कर्मिणां धूमादिभावनिवारणादस्ति शास्त्रादिसङ्गति** रित्यादिना ॥

## शेषतात्पर्यचन्द्रिका

पूर्वपक्षटीकाक्षरार्थः

सहस्थानमेव भाष्योक्तद्वितीयपूर्वपक्षहेतुत्वेन विवृण्वत् **न च धूमादिदेवतासहावस्थानात् कर्मिणोऽपि तत्पदप्राप्तिः** इति वाक्यं, दानं साक्षान्निमित्तं, तत्र स्नेहो निमित्तं तत्र च सहावस्थानमिति परम्परासूचनेन व्याख्यास्यन्नवतारयति **न च कर्मिण इति** ॥

**व्यर्थं कर्मणीति** । तथापि परमसुखस्य नश्वरत्वानपायान्न व्यर्थं यद्यपि वैराग्यम्, तथापि विवक्षितस्य परमसुखात्मकान्मोक्षादन्यत्र वैराग्यस्योक्तरीत्या परमसुखात्मके धूमादिदेवताभावे[1] वैयर्थ्यमिति भावः ॥

सिद्धान्तटीकाभागावतारणम्

आद्यं पूर्वपक्षं भाष्येण निराकृत्य द्वितीयं, कारणाभवन्यायमेव विवृण्वत् **तन्निमित्तविद्याख्यकारणाभावात्** इति वाक्यमुपलक्षणतया व्याख्यास्यन्निराचष्टे **नापि तत्पदप्राप्तिर्युक्तेति** ॥

तन्निमित्तेति विवरणस्थपदकृत्यम्

अपरोक्षज्ञानिन एव प्रारब्धवशात् स्वर्गादागमने विद्या अस्त्येवेत्याशङ्क्य **तन्निमित्तेति** विद्याविशेषणं विवरणे ॥

एकेदेशेतिकारिकायाः सङ्क्षेपभाष्यसूचिता योजना

एवम्,

**एकदेशस्वभावेन वागभेदापि युज्यते ।**
**यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपि ॥**

---

[1] धूमादिभावे

## शेषतात्पर्यचन्द्रिका

स्वयूथ्यानां केषाञ्चिदेतदधिकरणरचनम्

**टीकाक्षरार्थस्तु**—अत्र **धूमो भूत्वाभ्रं भवती**त्युक्तः पितृयाणः कर्मिणो युक्तो न वेति सन्देहे नान्यस्यान्यभावो युज्यते । नापि तत्पदप्राप्तिः । विद्यागम्यत्वात् । श्रुतोऽपि पितृयाणो न युक्त इति स कथमिति भाष्यं पूर्वपक्षप्रदर्शकमिति व्याख्याय; अत्र श्रूयमाणो नान्येन अन्यस्यैक्यम् । नापि तत्पदप्राप्तिः । किन्तु तद्गतौ गतिरित्यादिरूपतत्स्वाभाव्यापत्तिः । अतो नायुक्त इति सिद्धान्त इति केचिद् व्याचक्षते ॥

एतन्निरासार्थं स्वमतेनाधिकरणरचनमिति
टीकावतारणम्

तत्र **न च धूमादिदेवतासहावस्थानात् कर्मिणोऽपि तत्पदप्राप्तिः** इति पूर्वपक्षसूचकविवरणवाक्ये तत्पदप्राप्तिनिरासानुपपत्तिः । न हि पूर्वपक्षिणैव निरस्तः पूर्वपक्षो भवति । प्रस्थानान्तरत्वान्न विरोध इति चेत् । न । एककण्ठतयोपपत्तौ तथात्वायोगात् । इहापि भाष्ये **न च तत्पदप्राप्तिः** इति सिद्धान्ते तस्य प्रतिक्षेपेण विवरणोक्तस्यैव प्रत्यभिज्ञानाच्च । **न ह्यन्यस्यान्यथाभावो न च तत्पदमिष्यते** इति गारुडवचने स्पष्टं पूर्वपक्षद्वयनिरासेन सिद्धान्तकरणाच्च । न च पूर्वपक्षिदूषित एव पक्षोऽनूद्यत इति वाच्यम् । वैयर्थ्यात् । पूर्वपक्षे निरासेनैव सार्थक्यसम्भवे तदयोगाच्च । न च **स कथम्** इति भाष्यवैयर्थ्यम् । तस्य सन्देहप्रकारप्रदर्शकत्वेन सार्थक्यात्, साक्षात्सङ्गतिसम्भवे प्रासङ्गिक्या अयोगश्चेति मन्वानः स्वमतेनाधिकरणमारचयति **कर्मिणां धूमादिभावनिवारणादस्ति शास्त्रादिसङ्गति**रित्यादिना ॥

## शेषतात्पर्यचन्द्रिका

पूर्वपक्षटीकाक्षरार्थः

सहस्थानमेव भाष्योक्तद्वितीयपूर्वपक्षहेतुत्वेन विवृण्वत् **न च धूमादिदेवतासहावस्थानात् कर्मिणोऽपि तत्पदप्राप्तिः** इति वाक्यं, दानं साक्षान्निमित्तं, तत्र स्नेहो निमित्तं तत्र च सहावस्थानमिति परम्परासूचनेन व्याख्यास्यन्नवतारयति **न च कर्मिण इति** ।।

**व्यर्थं कर्मणीति** । तथापि परमसुखस्य नश्वरत्वानपायान्न व्यर्थं यद्यपि वैराग्यम्, तथापि विवक्षितस्य परमसुखात्मकान्मोक्षादन्यत्र वैराग्यस्योक्तरीत्या परमसुखात्मके धूमादिदेवताभावे[1] वैयर्थ्यमिति भावः ।।

सिद्धान्तटीकाभागावतारणम्

आद्यं पूर्वपक्षं भाष्येण निराकृत्य द्वितीयं, कारणाभवन्यायमेव विवृण्वत् **तन्निमित्तविद्याख्यकारणाभावात्** इति वाक्यमुपलक्षणतया व्याख्यास्यन्निराचष्टे **नापि तत्पदप्राप्तिर्युक्तेति** ।।

तन्निमित्तेति विवरणस्थपदकृत्यम्

अपरोक्षज्ञानिन एव प्रारब्धवशात् स्वर्गादागमने विद्या अस्त्येवेत्याशङ्क्य **तन्निमित्तेति** विद्याविशेषणं विवरणे ।।

एकेदेशेतिकारिकायाः सङ्क्षेपभाष्यसूचिता योजना

एवम्,

**एकदेशस्वभावेन वागभेदापि युज्यते ।**
**यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपि ।।**

---

1 धूमादिभावे

## शेषतात्पर्यचन्द्रिका

इति गारुडशेषस्य[1] च एकदेशस्वभावेन यत्किञ्चित्साहश्येन तत्प्रवेशनिमित्तकस्थानैक्येन च 'तत्त्वमसि' 'सर्वं खल्विदं ब्रह्म' इत्याद्यभेदवाक् यथा गौणाभेदविषयिणी तथा कर्मिणो धूमादिदेवतया तद्गतौ गतिरित्याद्युक्तसाहश्येन स्थानैक्येन च **धूमो भूत्वा** इत्याद्यभेदवागपि युज्यत इति, तथा एकदेशस्वभावेन त्वं[2] **सर्वम्** इत्यादिपदार्थैकदेशभूतान्तर्याम्यभेदे **'तत्त्वमसि'** 'सर्वं खल्विदं ब्रह्म' इत्यादिवाक् मुख्यार्थैव यथा युज्यते, तथा **धूमो भूत्वा** इत्यादिरपीति **सर्वरूपेष्वभेदवान्** इत्यादि सङ्क्षेपभाष्यसूचिता योजना द्रष्टव्या ॥

सूत्राक्षरार्थः

सूत्रार्थस्तु—**धूमो भूत्वेत्यादौ** श्रुतः धूमादिभावः तत्स्वाभाव्यापत्तिरेव, तद्गतौ गतिः तत्स्थितौ स्थितिः इत्यादिरूपसाहश्यापत्तिरेव। न तु तदैक्यापत्तिः। यजमानप्रस्तरयोः साहश्येऽपि सामानाधिकरण्यदर्शनेन तद्वदेवेह सामानाधिकरण्योपपत्तेः । तदैक्याद्यापत्तौ तु अन्यस्यान्यभावादर्शनेन अनुपपत्तेरिति ॥

यद्वा न कर्मिणां[3] धूमादिदैवतैक्यादि सम्भवति। अन्यस्यान्यभावानुपपत्तेरिति बहिरेवोक्ते कथं तर्हि इयं श्रुतिः प्रतिपाद्यहीना प्रमाणम् इत्यतः तत्स्वाभाव्यापत्तिः तत्सहशस्वभावापत्तिः गजमुखतापत्तिरितिवत्, तद्गतभगवद्रूपाणां अन्यगतभगवद्रूपस्वाभाव्यापत्तिर्वा प्रतिपाद्यास्तीति तदर्थतयैव श्रुतेरुपपत्तेरिति ॥

**इति तत्स्वाभाव्याधिकरणम् ॥ १६ ॥**

---

[1] गारुडस्य [2] तत्त्वम् [3] धर्मिणां

॥ अथ नातिचिरेणाधिकरणम् ॥ १७ ॥

बहुस्थानगमनात् कल्पान्तमप्येवं स्यादिति । अत आह —

॥ ॐ नातिचिरेण विशेषात् ॐ ॥ २५ ॥

'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनि-मापद्यन्ते' इति विशेषान्नातिचिरेण ।

'स्वर्गाल्लोकादवाक्प्राप्तो वत्सरात्पूर्वमेव तु ।
मातुः शरीरमाप्नोति पर्यटन् यत्र तत्र च ॥'

इति नारदीये ॥ २५ ॥

---

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्रेश्वरप्राप्तिसाधनवैराग्याय स्वर्गादवरूढस्य कर्मिणोऽचिरेण गर्भवासादिप्राप्तिसमर्थनादस्ति शास्त्रादिसङ्गतिः । यदि चिरेण गर्भप्राप्तिः तर्हि बहुकालं मध्येमार्गं अतिसुखस्य लाभात्, न कर्मणि विरज्येत । अतः सा प्रतिषेद्धव्या । प्रकृताः कर्मिणो विषयः । स्वर्गान्निर्गत्य किं चिरेण गर्भवासं प्राप्नुवन्ति, उत अचिरेणेति सन्देहः । द्विविधपान्थदर्शनं सन्देहबीजम् ॥

पूर्वपक्षः

पूर्वपक्षयति **बहुस्थानेति** । कर्मी स्वर्गान्निर्गतश्चिरेणैव देहं प्राप्नोति । **यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति** इत्यादौ बहुस्थानप्राप्तिश्रवणात् । बहुस्थान-

## तत्त्वप्रकाशिका

गमनं च नाचिरेण सम्भवति । तत्र तत्र तत्तत्स्वाभाव्येन अतिसुखे सम्भवति तद्विहायागमने प्रयोजनाभावात् । एवं च सकृदनुष्ठितयज्ञस्य स्वर्गभोगावसाने मध्येमार्गं कल्पान्तमपि तत्तद्देवतास्वाभाव्यं स्यात् । कल्पावसाने देवानां पदपर्यवसानात् । अतः किं कर्मणि तत्फले च वैराग्येणेति भावः ॥

सिद्धान्तः

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **अत इति**। कर्मिणो न चिरेणागमनं किन्त्वचिरेणैव । **तद्य इह रमणीयचरणा** इति विशेषश्रुतेः । न च बहुस्थानगमनविरोधः । अतिचिरेणागमनस्यैव निषेधादिति भावः । तत्र कर्मिषु ये रमणीयचरणाः त इह भूमौ रमणीयां ब्राह्मणादियोनिमापद्यन्ते, आपद्यन्त इति यत्तच्चाभ्याशः कालसामीप्येनेत्यर्थः । कल्पान्तकालस्याप्यापेक्षिकसामीप्यात् नेयं श्रुतिर्बाधिकेत्यत आह **स्वर्गादिति**। न चेष्टत्वविरोधः । इष्टत्वेऽपि कॢप्तकालाधिककालावस्थाने कारणाभावात् । अन्यथा दुःखाभावप्रसङ्गात्सर्वेषाम् । अतः कर्मिणः अचिरेणैव गर्भवासादिदुःखप्राप्तिसद्भावाद्भवितव्यं कर्मादौ विरक्तनेति सिद्धम् ॥ २५ ॥

—:o:—

## शेषतात्पर्यचन्द्रिका

पुण्यपापपेटिका

## ॥ ॐ नातिचिरेण विशेषात् ॐ ॥ २५ ॥

अधिकरणानारम्भणीयत्वशङ्का

नन्वेतदनारम्भणीयम् । प्रयोजनाभावात् । बहुकालं मध्येमार्गं गतिसुखस्य लाभान्न कर्मणि विरज्येतेत्याक्षेपप्रतिक्षेपेण वैराग्यसिद्धिरिति चेन्न । पूर्वाधिकरणे धूमादिभावस्य धूमादिदैवतैक्यापत्तिरूपत्वे परमसुखत्वं स्यादिति तत्साद्दश्यापत्तिरूपत्वसमर्थनेन परमसुखरूपत्वाभावस्य निर्णीतत्वात् । अस्तु वा परमसुखरूपत्वं तत्स्वाभाव्यापत्तेः । तथापि बहुकालं तत्प्राप्तौ कारणाभावात् । बहुषु स्थानेष्वपि शीघ्रगमनसम्भवात् । न च शीघ्रगमने कारणाभाव इति वाच्यम् । कर्मण एव सत्त्वात् । सुखलिप्सया हि स्थलात् स्थलान्तरगमनम् । न हि स्थलान्तरगमने इतोऽधिकसुखप्राप्तिरस्तीत्यालोच्य स्वयमेव तत्र बहुकालं तिष्ठतीति चेत् न। विद्याकर्मनये फले स्वातन्त्र्याभावस्य सिद्धत्वात् । तत्सिद्धस्यैव इह सिद्धान्तेऽपि हेतूकरणाच्च ॥

परिहारः

मैवम् । यद्यपि परमसुखरूपं मोक्षसाम्यं परिहृतम् । तथापि नातिसुखत्वम् । तथा सति कर्मणः सुखसाधनत्वमेव न स्यात् । अत एवात्र टीकायाम् **अतिसुखस्य लाभादित्युक्तम्** । परमसुखत्वमुखेन पूर्वपक्षासम्भवेऽपि अतिसुखत्वमुखेन पूर्वपक्षसम्भवात् । बहुकालमतिसुखाभावसमर्थनेन वैराग्यसम्भवात् सिद्धान्ते प्रयोजनमस्ति । यच्च फले स्वातन्त्र्यं निषिद्धमित्युक्तं, तत्सत्यम् । साधनेऽस्ति स्वातन्त्र्यम् । अत एव **तद्विहायागमने प्रयोजना-**

## शेषतात्पर्यचन्द्रिका

**भावदिति** निमित्तसप्तमी टीकायाम् । ततश्च बहुस्थानगमनं सुखसाधनम् । तच्च स्वाधीनमेवेति तत्र विलम्बते कर्मीत्युक्तौ बाधकाभावात् । देवपितृयाणयोः तत्स्वाभाव्यापत्तिरूपत्वेन सुखरूपत्वात्फलत्वं, बहुस्थानगमनं तु तत्साधनमैच्छिकम् । यत्तु टीकायां **तत्स्वाभाव्येन अतिसुखे[1] सम्भवति** इति तृतीयाश्रवणं, तत्तु इत्थम्भावे ज्ञातव्यम् । अत एव **मध्येमार्गं कल्पान्तमपि तत्तद्देवतास्वाभाव्यं स्यादिति** स्वर्गसाम्येनोपसंहारः । अन्यथा देवतास्वाभाव्येन अतिसुखं स्यादित्युपसंह्रियेत ॥

यत्तु बहुस्थानगमनस्येष्टत्वाङ्गीकारेण समाधानं **इष्टत्वेऽपि क्रमकाले**त्यादि तत्तु न निरुपाधिकेष्टत्वाभिप्रायम् । किन्तु इष्टसाधनत्वाभिप्रायम् । दृश्यते हि इष्टसाधनेऽपीष्टत्वव्यवहारः ॥

सङ्गतिः

अत एवात्र पूर्वोक्ततत्स्वाभाव्यापत्तिमुपजीव्य वा, अस्तु तत्स्वाभाव्यापत्तिरेव श्रुत्यर्थः, तथापि तस्याः अतिसुखत्वमुखेन पुरुषार्थत्वात्, बहुकालीनत्वाच्च, न तत्र वैराग्यं सम्पाद्यमिति शङ्कनाद्वा अनन्तरसङ्गतिः । पुण्यफले बहुस्थानगमने विचाराच्च पुण्यपापसाधारणपेटिकायाम् अन्तर्भावलक्षणा च ॥

अत्र मतद्वयोपगतमधिकरणम्

**उभये तु**—आकाशादिप्रतिपत्तौ प्राग् व्रीह्यादिप्रतिपत्तेर्भवति विशयः, किं दीर्घकालं पूर्वपूर्वसादृश्येनावस्थाय गच्छन्ति[2] उताल्पमल्पमिति । तत्र

[1] महासुखे [2] उत्तरोत्तरसादृश्यं गच्छन्ति

## शेषतात्पर्यचन्द्रिका

**नियमकारणशास्त्राभावात्** अनियम इति पूर्वपक्षे **अतो वै खलु दुर्निष्प्रपतरम्** इति श्रुतिः, अव्यवहितप्रकृतव्रीह्यादिभावात् कर्मिणां दुर्निष्प्रपतरशब्देन विलम्बलक्षकेण निःसरणं विलम्बितमाह । ततोऽर्थादितरेभ्य आकाशादिभ्योऽचिरत्वमुक्तमिति सिद्धान्त इत्याहुः ॥

तन्निरासः

तन्न । मद्रीत्या, अनुशयिनामाकाशाद्यवस्थानं चिरभावि, अनुशय्य[1]-वस्थानत्वात् व्रीह्याद्यवस्थानवदित्यनुमानात्कल्पतरूक्ताच्च नियमसम्भवे अनियम-पूर्वपक्षायोगात् । **दुर्निष्प्रपतरमिति** दुःखेन निस्सरणं ब्रूते न तु विलम्बेनेति मन्यते पूर्वपक्षीति वाचस्पत्युक्तं शास्त्रस्य नियमकारणत्वदूषणमप्ययुक्तम् । कल्पतरूक्तानुमानादेव तन्नियमोपपत्तेः । शास्त्राभावमात्रेणानियमासिद्धेश्च । तर्हि नियमेनैव पूर्वपक्षोऽस्त्विति चेन्न । भाष्यविरोधेनानुमानस्याभासत्वात् । दृष्टान्तासिद्धेश्च । गिरितटदुर्गादिधृतान्नेषु रेतःसि[2]भिरनद्यमानेषु अनुशयिनां यावद्व्रीह्यादिभावित्वेन तद्गतरूपादिवत् चिरावस्थानसिद्धिरिति चेत् तर्हि तत एव व्रीह्याद्यवस्थानस्य चिरभावित्वेऽप्याकाशाद्यवस्थानस्य तदभावे बाधकाभावेन हेतोरप्रयोजकत्वमिति पूर्वपक्षो न युक्तः । दुर्निष्प्रपतरशब्देन विलम्बप्रतीतेः सिद्धान्तोऽप्ययुक्तः । लक्षणायां तु सैव दोषः । विना स्थूलशरीरं न सूक्ष्मशरीरं दुःखभागीति दुर्निष्प्रपतरं विलम्बं लक्षयतीति वाचस्पत्युक्तं त्वयुक्तम् । सूक्ष्मशरीरस्य दुःखभाक्त्वाभावे तुल्यन्यायतया सुखभाक्त्वस्या-

---

1 शय्या  2 सृभि

## शेषतात्पर्यचन्द्रिका

प्यभावापत्तेः । खण्डनपेषणादिविषयत्वोपलक्षकतयाप्युपपत्तौ विलम्बलक्षकत्व-निश्चयानुपपत्तेश्च । अनुशयिनां आकाशादिसादृश्यप्राप्तौ बहुकालमेवं स्यादिति प्राप्तस्य पूर्वपक्षस्य निरवकाशश्रुत्युपन्यासमन्तरा निरासायोगाच्च ॥

कैश्चिदुक्तसङ्गतिनिरासार्थं टीकायां स्वमतेनाधिकरणरचनम्

टीकाक्षरार्थस्तु—केचित्तु 'प्रसङ्गात्, परावृत्तिः किं कल्पपर्यन्तम् उत नातिचिरेण इति चिन्त्यत इति सङ्गति'रित्याहुः । तत्र **वैराग्यार्थे गत्या-दिनिरूपणा प्रथमपादे**[1] इति भाष्यस्वारस्याय साक्षात्सङ्गतेर्वक्तव्यतया प्रसङ्गसङ्गत्ययोग इति मन्वानः स्वमतेनाधिकरणं रचयति **अत्रेश्वरप्राप्तीति** ॥

ईश्वरपदस्वारस्यम्

यद्यपि बहुस्थानगमनस्येष्टसाधनत्वेन तत्रेश्वरदत्तं स्वातन्त्र्यमस्ति यागादाविवेति वक्तुमुचितम्, तथापि स्वक्लृप्तकालानुसारेण बहुस्थानेषु गमयतीति चिरकालावस्थाने स्वातन्त्र्यं न ददाति । तथापि पुण्यपापसम्बद्धं च जीवं करोति ईश्वरत्वादिति युक्तिं सूचयति ईश्वरपदप्रयोगेण ॥

टीकायाः पूर्वपक्षन्यायविवरणयोजकत्वम्

अत्र सहावस्थानमेव सम्बन्धिसाध्यप्रदर्शनेन विवृण्वन् **न च तैस्तैः**[2] **सहावस्थानादतिचिरत्वम्** इति वाक्यं भाष्योक्तसम्भावकयुक्तिमुक्त्वानन्तरं योजयति **तत्र तत्रेति** । अतिशब्दस्वारस्यव्यञ्जनमुखेन पूर्वपक्ष्युक्तबहुस्थान-गमनविरोधपरिहारं भाष्योक्तं व्यञ्जयन् सौत्रपदानि आकाङ्क्षाक्रमेण व्याचष्टे **कर्मिण इति** ॥

---

[1] प्रथमे पादे [2] न च तैः

टीकायाः सिद्धान्तन्यायविवरणयोजकत्वम्

अत्र **कारणाभव** इत्युक्तमेवन्यायं सम्बन्धिप्रदर्शनेन विवृण्वत्[1] **'वत्सरात्पूर्वमेव तु'** इति क्लृप्तकालादधिकावस्थाने **कारणाभावात्** इति वाक्यमवतारयति **न चेष्टत्वेति । अन्यथेति ।** साधने ईशदत्तस्वातन्त्र्येण स्थलान्तरगमनाभावे दुःखप्रापकस्थलस्य स्वेच्छयैव वर्जनात् सर्वेषां दुःखाभावप्राप्तिस्स्यादित्यर्थः ॥

अत्र नारदीये **मातुः शरीरमाप्नोतीति** श्रवणात् **गर्भवासादि** इत्याद्यन्तयोरुक्तिः ॥

सङ्क्षेपभाष्यस्य एतदधिकरणतात्पर्यनिरूपकत्वम्

अत्र स्वर्गाद्भ्रष्टकर्मिणाम् अचिरेण गर्भवासादिकं प्रति प्रेरयतीति योजनायां **सर्वावस्थाप्रेरकश्च** इति सङ्क्षेपभाष्यमेतदधिकरणस्यापि तात्पर्यं निरूपयति ॥

**॥ इति नातिचिरेणाधिकरणम् ॥ १७ ॥**

—:o:—

1 भाव

अथ अन्याधिकरणम् ॥ १८ ॥

'त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्ते' इति श्रवणादनर्थफलत्वं यज्ञादेरिति, अतो वक्ति—

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनवैराग्याय कर्मिणो व्रीह्यादिभावनिरासात् अस्ति शास्त्रादिसङ्गतिः । सुखसाधनतया वेदोपदिष्टकर्मिणां व्रीह्यादिभावेन दुःखित्वे वेदविहितवैराग्यादावपि तच्छङ्का स्यात् । अतस्तन्निराकरणीयम् । कर्मिणो विषयः । किमागमने दुःखवन्तो न वेति सन्देहः । लौकिकदृष्टिः[1] पुरुषार्थत्वं च सन्देहबीजम् ॥

पूर्वपक्षः

पूर्वपक्षयति **त इति** । अस्त्येव कर्मिणामागमने दुःखम् । **त इह व्रीहियवाः** इति श्रुतेस्तेषां व्रीह्यादिभावदर्शनात् । तद्भावे छेदादिना दुःखनियमात् । न चेयं श्रुतिः धूमादिभावश्रुतिवद्व्याख्येया । तद्वदिह बाधकाभावात् । न हि बाधकं विनाऽमुख्यार्थकल्पना युक्ता । अनुपयुक्ता च, दुःखप्राप्त्यनिवारकत्वात् । व्रीह्यादिजीवैः सहावस्थानेऽपि दुःखनियमात् । न हि दुःखिना सहावस्थानेऽपि दुःखाप्राप्तौ ईश्वरवत्स्वातन्त्र्यमस्ति । तच्च दुःखं यज्ञादिकर्मफलमेव । आगमनादेः यज्ञादिकर्मफलत्वस्य प्रतिपादितत्वात् । अतः सुखसाधनतया वेदोदितस्यापि कर्मणो दुःखसाधनत्वे मोक्षहेतुत्वेनोपदिष्टवैराग्यादावपि विश्वासाभावात् अननुष्ठेयत्वं तस्येति भावः। इतिशब्दोऽन्योपलक्षणार्थः॥

सिद्धान्तः

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **अत इति** । नागतौ कर्मिणां व्रीह्यादि-

[1] लोकदृष्टिः

## ॥ ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ॥ २६ ॥

अन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशः। न तु भोगोऽस्य। 'धूमो भूत्वाभ्रं भवति' इत्यादिपूर्वोक्तवत्। 'सोऽवाग्गतः स्थावरान् प्रविशत्यभोगेनैव[1] व्रजन् स्थूलं शरीरमेति, स्थूलाच्छरीराद्भोगाननुभुङ्क्ते' इत्यभिलापात् कौषारवश्रुतौ।

'स्वर्गादवाग्गतो देही व्रीह्यादीतरदेहगः।
अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालतः॥'

इति वाराहे॥ २६॥

### तत्त्वप्रकाशिका

भावेन दुःखं मन्तव्यम्। तत्रैव मानाभावात्। न चोक्तश्रुतिर्मानम्। यतोऽस्यां श्रुतौ कर्मिणां व्रीह्यादिशरीरप्रवेश एवोच्यते। न तु तच्छरीराभिमानित्वम्। न च तस्य तच्छरीराभिमानाभावे वृद्ध्याद्ययोगः। तदन्येन अधिष्ठितत्वात्। यतश्चास्य न व्रीह्यादिभावः, अतो नैव छेदादिजातदुःखभोग इति भावः॥

व्रीह्यादिजीवैः सहावस्थानेऽपि दुःखं स्यादित्यत आह **न त्विति**। सहावस्थानेऽपि दुःखकारणपापफलानुभवस्य अनवसरप्राप्तत्वान्नदुःखभोगोऽस्येति भावः। यदि कर्मिणो व्रीह्यादिदेहप्रवेश एव, न तु तद्भावः तर्हि कथं सामानाधिकरण्यमित्यत आह **धूम इति**॥

कर्मिणो व्रीह्यादिदेहप्रवेश एव, न तु तद्भावः, प्रवेशोऽपि न भोग इत्येतत्कुतः, येन श्रुतेरर्थान्तरकल्पना इत्यत आह **स इति**। **अभोगेन व्रजन्नि**त्यस्य सहावस्थानेऽपि दुःखाननुभवेन वर्तमान इत्यर्थः॥ २६॥

[1] प्रविश्याभोगेनैव

॥ ॐ अशुद्धमिति चेन्न शब्दात् ॐ ॥ २७ ॥

हिंसारूपत्वात् पापस्यापि सम्भवात् दुःखं च भवत्विति चेन्न। शब्दविहितत्वात् ।

'हिंसा त्ववैदिका या तु तयाऽनर्थो ध्रुवं भवेत् ।
वेदोक्तया हिंसया तु नैवानर्थः कथञ्चन ॥'

इति वाराहे ॥ २७ ॥

---

तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्य आक्षेपांशं तावद्व्याचष्टे **अशुद्धमिति** । यदुक्तं व्रीह्यादिभावेन तत्प्रवेशेन वा कर्मिणो दुःखं न मन्तव्यम् कारणाभावादिति, न तद्युक्तम्। यज्ञानां हिंसायुक्तत्वेन ततःपापस्य सम्भवात्, दुःखकारणाभावस्यासम्प्रतिपत्तेः। दृष्टं हि हिंसात्वेन ब्रह्महिंसायाः पापहेतुत्वम्। अतो दुःखहेतुभावादन्यतरप्रकारेण अस्ति कर्मिणो दुःखमिति भावः ॥

परिहारांशं व्याचष्टे **नेति**। भवेदनर्थफलत्वं च यज्ञादेःयदि पापहेतुत्वं भवेत् । नैतदस्ति । न हि ब्रह्महिंसायाः पापहेतुत्वे हिंसात्वं प्रयोजकम् । येन यागीयहिंसायास्तत्स्यात्। किन्नाम, निषिद्धत्वमेव । न च तद्यागीयहिंसायामस्ति । प्रत्युत शब्दविहितत्वात्, **वायव्यं श्वेतमालभेत** इत्यादाविति भावः । सोपाधिकत्वेन दूषितानुमानस्य स्मृतिविरोधं च दर्शयति **हिंसेति** । अतो यज्ञादेः सुखसाधनतया उपदिष्टस्य दुःखकारणत्वाभावात् युक्तं वैराग्याद्यनुष्ठानं मुमुक्षूणामिति सिद्धम् ॥ २७ ॥

## शेषतात्पर्यचन्द्रिका

पुण्यपापपेटिका

## ॥ ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ॥ २६ ॥

तत्स्वाभाव्यनयेन सङ्गतिः

अत्र **धूमो भूत्वाभ्रं भवति** इत्यादिसामानाधिकरण्यं तत्र प्रवेशादिना यथोपपन्नं, तथा **तद्य इह व्रीहियवा** इत्यादिसामानाधिकरण्यं तत्तच्छरीरप्रवेशमात्रेण उपपन्नमित्यतिदेशनाद्वा, **धूमो भूत्वा** इत्यादौ मुख्यार्थग्रहणे विद्यागम्यदेवतापदप्राप्त्यादेरयोग्यतारूपबाधकवत्, इह मुख्यार्थग्रहणबाधकस्याभावादिति वा, तत्र सादृश्यापत्त्या सामानाधिकरण्यसम्भवेन अमुख्यार्थग्रहणे बाधकाभावेऽपि इहामुख्यार्थग्रहणे **स्थावरान् प्रविशति**[1] इति स्पष्टं श्रवणेन व्रीह्यादीनां जडत्वावगमात् तत्सादृश्यानुपपत्त्या सामानाधिकरण्यासम्भवरूपबाधकसद्भाव इति वैषम्येणाशङ्कनाद्वा तत्स्वाभाव्यापत्तिनयेन सङ्गतिः ॥

अव्यवहितपूर्वाधिकरणसङ्गतिः

अभ्याश इति विशेषणात् यथा नातिचिरेण आगमनम्, एवं **स्थावरान् प्रविशत्यभोगेन** इति विशेषणात् इह व्रीह्यादिशरीरप्रवेशमात्रमित्यतिदेशनाद्वा, बहुस्थानगमनस्य सावकाशत्वात् युक्तमनतिचिरागमनाबाधकत्वम्। **व्रीहियवा** इत्यादिसामानाधिकरण्यस्य तु **ब्राह्मणा जायन्ते, शूद्रा जायन्ते** इत्यादौ तत्तच्छरीरकत्व एव सामानाधिकरण्यदर्शनेन व्रीह्यादि-

---

1 प्रविश्य

## शेषतात्पर्यचन्द्रिका

शरीरकत्वप्रत्यायकत्वात्, तत्प्रवेशमात्रार्थकत्वे बाधकत्वमस्त्येवेति वैषम्येण शङ्कनाद्वाऽव्यवहितसङ्गतिः । अत्रातिदेशिकसङ्गतिद्वयं सौत्र**पूर्ववत्**पदेन सूचितम् । अन्यास्तु टीकादिनेत्यवधेयम् ॥

टीकोक्ता पादसङ्गति.

पादसङ्गतिः, यदि व्रीह्यादिभावः कर्मिणां तर्हि तेन दुःखित्वप्राप्त्या यज्ञादेस्तत्साधनस्य अनिष्टसाधनत्वापत्त्या तस्येष्टसाधनत्वावेदकागमाप्रामाण्यप्रसङ्गेन तत्सामान्यात् वैराग्यादिकर्तव्यताबोधकागमस्यापि तत्स्यादिति टीकायामेवोक्ता ॥

तन्निर्वहणम्

नन्वेवं सङ्गत्यभिधानमयुक्तम्, **यथेतमनेवं च** इत्यादौ **गतागतक्लेशाभावे न तत्रायं विरज्येत** इत्यादिना सदुःखत्वसमर्थनस्यैव पादसङ्गत्युपयोगित्वेन अभिधानात् । अन्यथा तत्रापि क्लेशनिराकरणेनैव सङ्गतिर्वक्तव्या स्यात् । यदि व्रीह्यादिभावस्य सदुःखत्वं तत्साधनयज्ञादीष्टसाधनताबोधकागमाप्रामाण्यापादकं, तर्हि गतागतस्य सदुःखत्वमपि कुतो न तदापादकमिति चेत्—

उच्यते । इष्टाधिकदुःखाजनकत्वगर्भमिष्टसाधनत्वमिह वेदबोध्यं विवक्षितम् । न तु दुःखाजनकत्वमात्रगर्भम् । ततश्च गतागतक्लेशस्य यज्ञादिजन्यसुखापेक्षया अनधिकत्वेन तत्साधनत्वेऽपि यज्ञादेः न यज्ञादीष्टसाधनताबोधकागमाप्रामाण्यमापद्यते । व्रीह्यादिभावस्य तु यज्ञादिजन्यस्वर्गादि-

## शेषतात्पर्यचन्द्रिका

सुखापेक्षया तत्प्रयुक्तखण्डनपेषणादिना अवर्जनीयदुःखस्योत्कटत्वेन अधिकदुःखजनकत्वात् तत्साधनस्य यज्ञादेरिष्टाधिकदुःखाजनकत्वाभावेन तदिष्टसाधनताबोधकागमाप्रामाण्यमापद्यत एवेति युक्तमेव सङ्गत्यभिधानम् ॥

नन्वेवमपि ईषद्दुःखानुबन्धित्वे कस्यापि प्रवृत्तिर्न स्यादिति यज्ञादिबोधकागमस्य अननुष्ठानरूपाप्रामाण्यं स्यादिति चेन्न । अधिकसुखलिप्सया किञ्चिद्दुःखमङ्गीकृत्यापि भोजनादाविव प्रवृत्तिमतां बहूनामुपलम्भात् । तद्वदेव विरक्तस्य निवृत्तिर्न स्यादिति चेत्, विचित्रबुद्धयो हि पुरुषाः । केचित्खलु दुःखलेशवर्जितं विचित्रानन्दरूपं मोक्षमाकलयन्तः स्वर्गादिकञ्च तद्विपरीतं, चिरकालसाध्यं दुःखं संपाद्यमपि महता प्रयत्नेन साधयाम इत्यास्थिताः, दुःखानुबन्धित्वेन स्वर्गादावुपेक्षका दृश्यन्ते । केचिच्च तावद्विलम्बमसहमानास्तत्रैव प्रवर्तन्ते । अत उपपन्ने प्रवृत्तिनिवृत्ती इति ॥

संशयः

अत्र कर्मिणां व्रीह्यादिशरीरं भवत्युत न । तदर्थं तत्र प्रमाणमस्ति न वा । तदर्थं **व्रीहियवा** इति सामानाधिकरण्यं पूर्ववन्नोपपद्यते, उतोपपद्यत इति चिन्ता ॥

पूर्वपक्षः

तत्र यज्ञादिकर्मिणां व्रीह्यादिशरीरं भवति । **तद्य इह** इति प्रमाणात् । तत्र 'व्रीहियवा जायन्ते' इति सामानाधिकरण्यस्य 'ब्राह्मणा जायन्ते', 'शूद्रा जायन्ते' इतिवत्तच्छरीरकत्व एव उपपत्तेः । न च तत्र प्रवेशोऽर्थः ।

## शेषतात्पर्यचन्द्रिका

अपदार्थत्वात्। धूमो भवतीत्यादाविव बाधकाभावाच्च। दुःखित्वप्राप्तिरस्तीति चेन्न। तस्या एवापाद्यमानत्वात्। अन्याधिष्ठिते प्रवेशमात्रस्वीकारेऽपि तस्या अपरिहार्यत्वाच्च। न हि सत्यां सामग्र्यां कार्यं नेति युक्तम्। स्वर्गादेरप्यभावापातात्। न हि यज्ञादिकारिणि दुःखजनकं पापं कर्म नास्तीति वक्तुं शक्यम्। यज्ञकर्मण एव हिंसाघटितमूर्तित्वेन दुःखसाधनत्वाच्च। पुण्यकर्मणः स्वफलाधिकदुःखजनकत्वं न युक्तमिति चेन्न। अंशभेदेन स्विष्टकृदादेः दृष्टादृष्टार्थत्ववत् पुण्यापुण्यत्वस्याप्युपपत्तेः। तथा चैवं दुःखसाधनमपि यज्ञादि बोधयत् वेदवाक्यम् अप्रमाणं स्यात्। न च सदुःखगतागतसाधकयज्ञादिबोधकवत् प्रमाणं स्यादिति वाच्यम्। गतागते दुःखस्याल्पत्वात्। अल्पस्य च 'अनुदरा कन्या' इत्यादाविव अविवक्षणात्। इह व्रीह्यादिशरीरत्वादिनिमित्तकं दुःखं नाल्पम्। छेदनादिना भवतो दुःखस्याधिकत्वात्। अन्यथा स्थावरादिजन्मसाधनस्य पापफलस्य विरोधः[1]। तत्सामान्याद्वैराग्यबोधकमप्यप्रमाणमिति पूर्वः पक्षः॥

सिद्धान्तः

सिद्धान्तस्तु—नात्र व्रीह्यादिशरीरं कर्मिणोऽभिप्रेतम्, किन्त्वन्याधिष्ठिते व्रीह्यादौ प्रवेशमात्रम्। धूमादाविव मुख्यार्थग्रहणे **स्थावरान् प्रविशत्यभोगेन** इति बाधकात्, 'ब्राह्मणा जायन्ते' इत्यादिप्रयोगेण तच्छरीरकत्वे मुख्यमपि सामानाधिकरण्यं प्रवेशमात्रे वर्तत इति वक्तुमुचितत्वात्।

---

[1] अन्यथा स्थावरादिजन्यजातस्य पापफलत्वविरोधः

## शेषतात्पर्यचन्द्रिका

धूमादिदेवताशरीरे प्रविष्टस्य सुखवत् व्रीह्याद्यभिमानिजीवशरीरे प्रविष्टस्य दुःखमपि स्यादिति चेत् । किं तदीययावद्दुःखमापाद्यम्, उत किञ्चित्? नाद्यः । धूमादिदेवताशरीरे प्रविष्टस्य देवतासन्निधानात्तदानीं स्वकीयारब्धपुण्यपरिपाकेन तत्सदृशस्य किञ्चित्सुखस्यानुभवेऽपि तदीययावत्सुखानुभवाभावेन दृष्टान्ताभावात् । नान्त्यः । तस्य वैराग्योपयुक्तत्वेन अप्रतिक्षेप्यत्वात् । न च तावता वेदाप्रामाण्यम् । भोजनकर्तव्यताबोधकस्याप्तवचनस्यापि तत्प्रसङ्गादिति ॥

केषाञ्चन मते सङ्गतिप्रदर्शनपूर्वकमेतदधिकरणसूत्रव्याख्यानम्

टीकाक्षरार्थस्तु—केचित्, एव प्रसङ्गात् स्वर्गादनेकदेशगमनेनाप्यागमनं संवत्सरानधिकलक्षणानतिचिरेण व्याख्यातम् । तत्प्रसङ्गात् अनतिचिरेणागमने त **इह व्रीहियवा ओषधिवनस्पतय** इति व्रीह्यादिभावः किं व्रीह्यादि शरीरत्वम् उत तत्प्रवेशमात्रमिति चिन्त्यत इति सङ्गतिः । विहितयज्ञादिकर्मणः फलेन यावद्विनाशं सुखजनकत्वावगमात्, व्रीह्यादिस्थावरशरीरकत्वं दुःखजनकं नाङ्गीकार्यमिति प्रथमेनोक्ते, विहितस्यैव यज्ञादेः **न हिंस्यात् सर्वा भूतानि** इति निषिद्धहिंसाघटितशरीरतया अंशतः पापघटिततया दुःखहेतुस्थावरव्रीह्यादिशरीरत्वं सम्भवतीति द्वितीयस्यांशेन चोदिते, **अग्नीषोमीयं पशुमालभेत** इति शब्दात् अङ्गतया हिंसाया विहिततया विशेषवचनेन सामान्यनिषेधस्य क्रतुबाह्यहिंसानिषेधविषयतया पापाघटितमूर्तिकत्वाद्यज्ञादेः न तेन ब्राह्मणादिपुण्यशरीरं विना स्थावरत्वम् इत्यधिकरणं व्याख्याय—

## शेषतात्पर्यचन्द्रिका

तेषामेव प्रसङ्गात् श्येनाग्नीषोमीययोः वैषम्योपक्षेपनिरासौ

ननु तर्हि **श्येनेनाभिचरन् यजेत** इत्यादिनापि सामान्यनिषेधसङ्कोचः किं न स्यादित्याशङ्क्य, काम्याभिचारस्य निषिद्धत्वात् निषिद्धेऽभिचारे रागात्प्रवृत्तमतिक्रान्तनिषेधमधिकृत्य 'यदि हिंस्यात्तर्हि श्येनेन हिंस्यादि'त्येव हि तत्र विधिक्रमः, न त्वग्नीषोमीयेन हिंस्यादेवेतिवत् श्येनेन हिंस्यादेवेति। तत्र यागफलस्वर्गादौ निषेधाभावात्। इह चाभिचाररूपे फले निषेधसद्भावात्। अत एव **चोदनालक्षणोऽर्थो धर्म** इति अनर्थत्वात् श्येनादिर्न धर्म इति मतान्तरमुक्त्वा—

तत्रेदं वैषम्यमयुक्तम्—श्येनादेर्विहितत्वाविशेषात् ज्योतिष्टोमादिवदनर्थत्वाभावात्। न ह्यभिचारो वधोद्योगमात्रं येन तस्य लौकिकोपायैरपि सम्भवाद्रागतः प्रवृत्तिः स्यादिति श्येनेन हिंस्यादेवेति न विधिक्रमः ज्योतिष्टोमादौ तु तद्वैपरीत्येनेति वैषम्यं स्यात्। किं तु **यथा वै श्येनो निपत्य** इत्यादिश्रुतिबोधितवधविशेषोद्योगः। तत्र च न रागतः प्रवृत्तिः, अलौकिकत्वात्। किन्तु ज्योतिष्टोमादाविव वैधी[1] प्रवृत्तिरेवेति तद्व्यतिरिक्तविषयोऽपि **न हिंस्यादिति** निषेधः। अन्यथा स्वर्गादिरपि हिंसाघटितयागजन्य एवेति तत्रापि रागान्निषेधमतिक्रम्य प्रवृत्तमधिकृत्य अग्नीषोमीयहिंसाविधिरिति तत्रापि हिंस्यादेवेति विधिक्रमाभावेन हिंसानिषेधपरत्वाभावात् विरोधाभावेन एतदतिरिक्तविषयतयापि सामान्यनिषेधसङ्कोचो न स्यात्। तस्मात् श्येनादिजन्या-

---

[1] वैध

## शेषतात्पर्यचन्द्रिका

भिचारे हिंसाघटितयागजन्यस्वर्गेऽपि वैधी प्रवृत्तिरविशिष्टेति तद्व्यतिरिक्तविषयः सामान्यनिषेध इति अग्नीषोमीयहिंसाया इव श्येनादेरपि धर्मत्वम्। अन्यथा धर्ममिमांसायां श्येनादिविधितदङ्गविचारो न स्यात्। **पूर्वजान् भ्रातृव्यानधरान् पातयामि** इत्यादिप्रार्थनस्य धर्मत्वं च न स्यात्। अङ्गेषु फलश्रुतिरर्थवाद इति चेन्न। **रोचनार्था फलश्रुतिः** इति स्मृतेः प्राधान्येनापि[1] फलश्रुतेरर्थवादत्वात्। न ह्यर्थवादत्वमसद्वादत्वम्, अप्रामाण्यापत्तेः। किन्तु कामिनः फलजनकत्वेन यथास्थितार्थवादत्वं, तेन निष्कामस्य प्राशस्त्यं नयतीत्यलं प्रासङ्गिकेन इति दूषयन्ति॥

प्रदर्शितसङ्गतिनिरासः

तत्र अस्मद्रीत्या साक्षात्सङ्गतिसम्भवे प्रासङ्गिक्या अयोगः। भाष्ये प्रायपदप्रयोगापातश्च॥

विहितत्वसाम्येऽपि श्येनाग्नीषोमीययोः अहिंसावाक्याविरोधविरोधाभ्यां वैषम्यम्

किं च **लिङाद्यर्थस्त्विष्टसाधनत्वमेव** इति मूलवाक्यानुसारेण इष्टसाधनत्वमात्रस्य विध्यर्थत्वसिद्धान्ते नहिंसाश्येनवाक्ययोर्विरोधाभावेन तदतिरिक्तविषयतयापि सङ्कोचो न युक्तः। तस्यागतिकत्वात्। श्येनवाक्ये हि इष्टसाधनं श्येन इत्यवगम्यते। न त्वनिष्टासाधनमिति। अनिष्टासाधनत्वविशिष्टेष्टसाधनत्वस्य विध्यर्थत्वानाश्रयणात्। **न हिंस्यात्** इति वाक्येन श्येनवाक्यबोधितानिष्टसाधनत्वं बोध्यते। न चेदमुभयं श्येने दुर्घटम्। शत्रुवधादीष्टसाधनत्वस्य नरकाद्यनिष्टसाधनत्वस्य मधुविषसम्पृक्तान्नभोजन इवोपपत्तेः॥

---

[1] प्रधानेनापि

## शेषतात्पर्यचन्द्रिका

अग्नीषोमीयवाक्ये तु यद्यपि लिङा इष्टसाधनत्वं बोध्यते । तथापि न तन्मात्रे पर्यवसानम् । अग्नीषोमीयकर्तुः निन्दाश्रवणाभावात् । प्रायश्चित्त-विधानाभावाच्च । किन्तु अनिष्टासाधनत्वविशिष्टेष्टसाधनत्वे । तेन साक्षाल्लिङ्-वाच्ये प्रमेये विरोधाभावेऽपि पर्यवसितप्रमेये अनिष्टासाधनत्वांशे विरोधेन तदतिरिक्तविषयतया निषेधवाक्यसङ्कोचो युक्तः । न हि सङ्कोचोऽभ्युपगत इत्येतावता प्रमेयान्तरेऽपि विना विरोधं सङ्कोचोऽङ्गीकार्यः, अति प्रसङ्गात् ॥

न चात्रापि अनिष्टासाधनत्वविशिष्टमेव लिङर्थपर्यवसितं प्रमेयमस्त्विति वाच्यम्,

**'विष्ठा वार्धुषिकस्यान्नमभिचाररतस्य च'**

**'............दशकृच्छ्रैस्तु शुध्यति'**[1]

इत्यादिना निन्दार्थवादप्रायश्चित्तोपदेशेन अनिष्टसाधनत्वावगमेन तदभाव-विशिष्टे पर्यवसानायोगात् ॥

न चेहापि—

**'प्लवा ह्येते अदृढा यज्ञरूपाः'**

**'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः'**

इत्यादिना निन्दनात् न विशिष्टपर्यवसानमिति वाच्यम्, कामनाया एव तत्र निन्दनात् । अत एव—

**'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन'**

**'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा करोति यः ।**

**'लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥'**

---

[1] त्रिभिः कृच्छ्रैर्व्यपोहति ।

## शेषतात्पर्यचन्द्रिका

इति स्मरणं युज्यते । प्रायश्चित्तोपदेशाभावाच्च । **चोदनालक्षणोऽर्थो धर्मः** इति सूत्रे अनर्थत्वोक्तिविरोधाच्च । पूर्वतन्त्रे श्येनविधितदङ्गविधिविचारस्तु[1] इष्टसाधनत्वस्यापि सत्वान्न विरुद्धः ॥

वैषम्यानुपगमेन सूत्रव्याख्यानमसाम्प्रदायिकमिति भावेन स्वमतेनाधिकरणरचनं टीकायाम्

तदेवं श्येनादेरिष्टानिष्टसाधनत्वम्, अग्नीषोमीयादेश्च इष्टैकसाधनत्वमिति वैषम्यं स्पष्टमेवेति श्येनाग्नीषोमीयवैषम्यानभ्युपगमेन अधिकरणव्याख्यानमसाम्प्रदायिकमित्यादिदूषणं शिष्यैरेवोह्यतामिति मन्वानः स्वमतेनाधिकरणमारचयति **अत्र भगवत्प्राप्तीति** । दुःखित्वे कर्मोत्पाद्येष्टाधिकदुःखित्वे ॥

टीकायाः पूर्वपक्षन्यायविवरणावतारकत्वम्

यथाभाष्यं पूर्वपक्षं व्याख्याय तत्स्वाभाव्यापत्तिनयेन गतार्थतां परिहरन् अधिकाशङ्काप्रदर्शनाय **सहस्थान**मित्युक्तन्यायमेव सम्बन्धिसाध्यप्रदर्शनेन विवृण्वत् **न च व्रीह्यादिजीवैः सहावस्थानात् दुःखप्राप्तिः** इति वाक्यमवतारयति **न चेयं श्रुतिरिति** ॥

टीकायाः सिद्धान्तभाष्यविवरणयोजकत्वम्

अधिकाशङ्कानिवर्तकत्वेन भाष्यमवतारयति **व्रीह्यादिजीवैरिति** । तत्र हेतुसमर्पकत्वेन **कारणाभव** इति न्यायं विवृण्वत् **शब्दविहितत्वेन पापाख्यकारणाभावात्** इति वाक्यं व्याचष्टे **सहावस्थानेऽपीति**। **अत्र शब्दविहितत्वेन अग्नीषोमीयस्य पापसाधनत्वाभावेन तज्जन्यपापस्यानाशङ्कनीय-**

[1] श्येनविधिविचारस्तु

शेषतात्पर्यचन्द्रिका

त्वेन निषिद्धाचरणजन्यपापस्य सद्भावेऽपि यज्ञकर्मजन्यपुण्यानुभवकाले पापफलदुःखानुभवस्य अनवसरप्राप्तत्वेन कारणाभावादिति विवरणवाक्ययोजना द्रष्टव्या ॥

सूत्राक्षरार्थः

**अन्याधिष्ठिते** अन्यजीवाभिमन्यमाने व्रीह्यादौ प्रवेशमात्रं **कर्मिणः**, न तु भोगः । न चात्र बाधकमस्ति । सामानाधिकरण्यं तु **पूर्ववदुपपन्नम्** । यद्वा अभोगेनेति विशेषणात् नातिचिरवदुपपन्नम् । न चामुख्यग्रहणे बाधकाभावः । कौषारवश्रुतौ **स्थावरान् प्रविशत्यभोगेन** इति बाधकस्य **अभिलापात्** इति सूत्रार्थोऽप्यनुसन्धेयः ॥

'अभुञ्जन्' इति भाष्यपदस्यासाधुत्वशङ्का

नन्वत्र भाष्ये **अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालतः** इति कथम् । **भुजोऽनवने** इति आत्मनेपदविधानात् । न च **निर्भुजति पाणिम्** इत्यादिवदुपपत्तिः । **भुजोऽनवने** इति सूत्रे **भुज पालनाभ्यवहारयोः** इति व्याख्यातस्य रौधादिकस्य द्व्यर्थस्य ग्रहणेऽपि **भुज कौटिल्ये** इति व्याख्यातस्यैकार्थस्य तौदादिकस्य चाग्रहणात् । अस्य च अभ्यवहारार्थत्वेन कौटिल्यार्थनियततौदादिकत्वायोगात् । **बुभुजे स महीपालः पृथिवीमेव केवलाम्** इत्यात्मनेपददर्शनेन अयं विधिरनित्य इति चेन्न । भोगस्यैवेह विवक्षितत्वेनावनस्याविवक्षणात् । भोगेऽप्यर्थे अस्यात्मनेपदमेव । **वृद्धो जनो दुःखशतानि भुङ्क्ते** इति प्रयोगात् । चर्व्यत्वाद्यात्मकाभ्यवहारस्य

### शेषतात्पर्यचन्द्रिका

दुःखशतेष्वयोगात्। एतदर्थमेव लघुत्वाय **भुजोऽदने** इति भणितव्येऽपि पाणिनिः **भुजोऽनवने** इत्यभाणीत्। धातूनामनेकार्थत्वस्य **'अश्मानमितः कुरु' 'पृष्ठे हस्तौ कुरु'** इत्याद्युदाहरणपूर्वं भूवादिसूत्रे भाष्यकृतैव व्यवस्थापितत्वात् युक्तमस्य भोगार्थत्वम् ॥

साधुत्वसमर्थनम्

अत्रोच्यते। न तावदत्र अभ्यवहारो विवक्षितुं शक्यते। व्रीह्यादिशरीरगतस्य सूक्ष्मशरीरत्वेन तदयोगात्। यद्यपि भोगो विवक्षितुं शक्यते। मानसस्य तस्य सूक्ष्मशरीरेणाप्युपपत्तेः। तथापि तस्य पालनात्मत्वमप्यस्ति। 'क्षेत्रं पालयति' 'पत्नीं पालयति'—अनुभुङ्क्ते इति व्याख्यानात् ॥

**'अस्मिन्नस्य च तद्योगं शास्ति' 'तेजोऽतस्तथा ह्याह' 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' 'मिथ्याशब्दोऽनिर्वचनीयं वदति'** इत्यादौ शब्दस्य करणत्वेऽपि कर्तृत्वमप्यस्तीति तद्विवक्षया कर्त्रर्थलकार इव सुखदुःखानुभवस्य पालनात्मत्वविवक्षया आत्मनेपदाभावः। ततो लटः शत्रादेशे साधुरेवायं प्रयोगः ॥

इति अन्याधिकरणम् ॥ १८ ॥

—:o:—

अथ रेतोऽधिकरणम् ॥ १९ ॥

स्वर्गादवाग्गतश्चापि मातुरेवोदरं व्रजेत्' इति वचनात् 'य एव गृही भवति यो वा रेतः सिञ्चति तमेवानुविशति' इति श्रुतिः कथमिति । अत आह—

॥ ॐ रेतःसिग्योगोऽथ ॐ ॥ २८ ॥

'ततो रेतःसिचमेवानु[1]विशत्यथ मातरमथ प्रसूयते, स कर्म कुरुते' इति कौण्ठरव्यश्रुतेः पितरमेव प्रथमतो विशति । मातृप्राप्तेः पश्चादपि भाव्यत्वात् ॥ २८ ॥

---

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनवैराग्याय स्वर्गादवतीर्णस्य पितृप्रवेशसमर्थनात् अस्ति शास्त्रादिसङ्गतिः । यदि न कर्मिणः पितृप्राप्तिः तदा नातिविरक्तिः स्यात् । अतः सा साधनीया । कर्मी व्रीह्यादिशरीरं प्रविशतीत्युक्तम् । तस्यैव पितृप्रवेशः श्रुत्या उच्यते **य एव गृही भवति** इति । स कर्मी अत्र विषयः । किं पितर प्रविशति न वा इति सन्देहः । श्रुतिः प्रयोजनादर्शनं च सन्देहबीजम् ॥

पूर्वपक्षः

पूर्वपक्षयति **स्वर्गादिति** । न जीवस्य पितृप्रवेशोऽस्ति । **स्वर्गादवाग्गतश्च** इति वचनात् । न चास्य वचनस्य पितृप्रवेशश्रुतिविरोधः । युक्ति-

---

[1] नुप्रविशत्यथ

## तत्त्वप्रकाशिका

साहित्येन बलवत्त्वात्। न हि पितृशरीरगमने किञ्चित्प्रयोजनं पश्यामः। अतः श्रुतिरेव वचनविरुद्धा न प्रतीतार्थे प्रमाणम्। न च निरर्थता युक्ता। प्रामाण्यस्य सिद्धत्वात्। अतः प्रतीतार्थायोगात् अर्थान्तरस्यावश्यम्भावात्, सा कथं किमर्थेति वक्तव्यम्। एवञ्च महायासाभावेन नातिवैराग्यं कर्मादावपेक्षितमिति भावः॥

सिद्धान्तः

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **अत** इति। अस्त्येव पितृप्रवेशः प्रथमं जीवस्य, **ततो रेतःसिच्यमेव** इति श्रुतेः। न च पितृप्रवेशस्य व्यर्थत्वात् श्रुतेर्दौर्बल्यम्। किमुत्पत्तौ पितुरेवानुपयोगात् तत्प्रवेशस्य वैयर्थ्यमुच्यते उत प्रवेशमात्रस्य। नाद्यः। शरीरपरिणामाय रेतसोऽपेक्षितत्वेन रेतस्सेचकस्योपयोगित्वात्। न द्वितीयः। तत्प्रवेशस्य ईश्वरकल्पितत्वात्। **ईशक्लृप्त्यैव पितरं प्रविश्यायाति मातरम्** इत्यादेरिति भावः॥

एवं चेत् **मातुरेवोदरं व्रजेत्** इति वचनम् अप्रमाणं प्राप्तमित्यत आह **मातृप्राप्तेरिति**। मातृप्राप्तेः प्रथममेवाभावेऽपि रेतःसिग्योगानन्तरमपि विद्यमानत्वात् न वचनस्याप्रामाण्यम्। एवकारस्तु अयोगव्यावर्तक इति भावः। अतः पितृप्राप्तेः विद्यमानत्वात् भवितव्यं कर्मादावतिवैराग्येणेति सिद्धम्॥ २८॥

## शेषतात्पर्यचन्द्रिका

पुण्यपापपेटिका

### ॥ ॐ रेतःसिग्योगोऽथ ॐ ॥ २८ ॥

सङ्गतिः

अत्र **अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालतः** इति पूर्वोदाहृतवाराहोक्तक्रम एव चिन्त्यत इति वा, इह **व्रीहियवा** इत्यस्य प्रतीतार्थायोगेऽर्थान्तरस्येव **य एव गृही भवति** इत्यत्राप्यर्थान्तरस्यैव स्वीकारो युक्त इत्याक्षेपाद्वा, **त इह व्रीहियवा** इति समनन्तराम्नातश्रुतिसमानार्थशाखान्तरस्थश्रुतिविचाराद्वा अनन्तरसङ्गतिः । अत्राद्या सौत्राथशब्दस्य व्याख्यानाय[1] क्रमपरकौण्ठरव्यश्रुतिपाठात् भाष्य एव सूचिता । द्वितीया तु '**य एव गृही भवति**' इति **श्रुतिः न प्रमाणम्** इति वक्तव्ये **श्रुतिः कथम्** इति भाष्येण तट्टीकया[2] च सूचिता । तृतीया तु **कर्मी व्रीह्यादिशरीरं प्रविशतीत्युक्तम्** इति टीकामात्रेण सूचिता ॥

पूर्वपक्षः

कर्मी न पितरं प्रविशति, प्रमाणाभावात् । न च **क्रमेणैव देहमाप्नोतीति** वचनमस्तीति वाच्यम् । मातृप्राप्त्यनन्तरमपि देहप्राप्त्युपपत्तेः । न च **य एव गृही भवति** इति स्पष्टश्रुतिरस्तीति वाच्यम् । **मातुरेवोदरं व्रजेत्** इति वचनविरोधेन अन्यार्थत्वात् । स्मृतित्वेन अस्य दौर्बल्यमिति चेन्न । प्रयोजनाभावयुक्तिसहितत्वात् । ननु तथापि साम्यमेवेति चेन्न । लाघवतर्कस्याधिकत्वात् । एवकारेण वचनस्य निरवकाशत्वावगमाच्चेति पूर्वः पक्षः ॥

1 शब्दव्याख्यानाय 2 टीकया

## शेषतात्पर्यचन्द्रिका

सिद्धान्तः

सिद्धान्तस्तु—कर्मिणः पितृप्रवेशोऽस्त्येव । क्रमपरकौण्ठरव्यश्रुतेरेव । न च **मातुरेवोदरं व्रजेत्** इति सावधारणनिरवकाशवचनबाधः । **'ततो रेतःसिचमेवानुविशति'** [1] **'तमेवानुविशति'** इति च श्रुतिद्वयेऽपि एवकारश्रवणात् । स्मृतेः श्रुत्यपेक्षया दुर्बलत्वाच्च । युक्तिसाहित्यं लाघवतर्कश्चास्तीति चेन्न । क्रमप्रतिपादकनिरवकाशश्रुतिविरोधेन आभासत्वात् । अयोगव्यवच्छेदेन एवकारोपपत्त्या वचनस्य सावकाशत्वाच्चेति ॥

प्रयोजनादर्शनयुक्तेः श्रुत्या समकक्ष्यत्वम्

**टीकाक्षरार्थस्तु—श्रुतिः प्रयोजनादर्शनं चेति** । न च प्रयोजनादर्शनयुक्तेः श्रुतितो दौर्बल्यमिति कथं संशयबीजत्वमिति वाच्यम् । **मातुरेवोदरं व्रजेत्** इति स्मृतिसाहाय्येन समकक्ष्यत्वादिति भावः ॥

टीकायां पूर्वपक्षभाष्यविवरणयोर्व्याख्यानम्

अत्र **वैयर्थ्यं चान्यथागतिः** इति सङ्ग्रहोक्तवैयर्थ्यन्यायं विषयप्रदर्शनपूर्वकं विवृण्वन् **न च वैयर्थ्यं पितृशरीरगमने** [2] इति वाक्यं व्याख्यातुं भाष्यसूचितपूर्वपक्षमाह **न जीवस्येति** । विवरणमवतारयति **न चास्य वचनस्येति** । तद्भावमाह **युक्तिसाहित्येनेति** । यद्यप्येवमपि साम्यमेव । तथापि लाघवतर्कसहकारनिरवकाशत्वाभ्यां वचनस्य प्राबल्यम् । अत एव सिद्धान्तभाष्ये **मातृप्राप्तेः पश्चादपि भाव्यत्वात्** इति सावकाशत्ववर्णनमिति ध्येयम् ॥

---

[1] नुप्रविशति   [2] रागमने

## शेषतात्पर्यचन्द्रिका

टीकायाः सिद्धान्तविवरणयोजकत्वम्

अत्र **क्लृप्तिरन्यागतिश्चैव** इति श्लोकोक्तक्लृप्तिन्यायं कर्तृनिर्देशेन प्रमाणं विवृण्वत् **'ईशक्लृप्त्यैव पितरं प्रविश्यायाति मातरम्'** इति **ईशक्लृप्तत्ववचनात्** इति वाक्यं योजयितुं विकल्पयति **किमुत्पत्ताविति । उत प्रवेशमात्रस्येति ।** अस्मिन् पक्षे अन्नादिना मातुरुदरं प्रविष्टस्य तत्र रेतःसेकेन शरीरपरिणामोपपत्तिरिति भावः ॥

**इति रेतोऽधिकरणम् ॥ १९ ॥**

--:o:--

॥ अथ योन्यधिकरणम् ॥ २० ॥

'देहं गर्भस्थितं क्वापि प्रविशेत् स्वर्गतो गत' इति वचनात् पश्चादेव प्रविशतीति । अत आह—

॥ ॐ योनेः शरीरम् ॐ ॥ २९ ॥

पितृशरीरात् मातृयोनिमनुप्रविश्य तत एव शरीरं प्राप्नोति । 'दिवः स्थास्नून् गच्छति स्थास्नुभ्यः पितरं पितुर्मातरं मातुः शरीरं शरीरेण जायत इति सम्मितम् । अथासम्मितं स्थास्नुभ्यो जायते पितुर्मातुरन्तरे वा गर्भे वा बहिर्वे'ति पौष्यायणश्रुतेः ॥

'स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम् ।
पुरुषात्स्त्रियमापन्नस्ततो देहं यथाक्रमम् ॥
देहेन जायते जन्तुरिति सामान्यतो जनिः ।
विशेषजननश्चापि प्रोच्यमानं निबोध मे ॥
स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा ।
गर्भे वा बहिरेवाथ क्वचित्स्थानान्तरेषु च'—

इति ब्राह्मे ॥ २९ ॥

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्र-
भाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
तृतीयाध्यायस्य प्रथमः पादः ॥

॥ ॐ ॥

## तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनवैराग्याय जीवस्य पितृद्वारा योनिं प्रविश्य शरीरप्राप्तेः समर्थनात् अस्ति शास्त्रादिसङ्गतिः। यदि सिद्धदेहप्रवेशाद्येव भवेत् न तर्ह्यतिविरज्येत। अतस्तत्प्रतिषेद्धव्यम्। जीव एव विषयः। किं पितृद्वारा मातृयोनिमनुप्रविश्याथ शरीरं प्राप्नोति उत नेति सन्देहः। पक्षद्वयेऽप्यनुपपत्त्यदर्शनं सन्देहबीजम्॥

पूर्वपक्षः

पूर्वपक्षयति **देहमिति**। पितृशरीरान्मातृयोनिमनुप्रविश्य शरीरप्राप्तिरिति नियमो नास्ति। योनिप्रवेशस्तावन्न विद्यते। **देहं गर्भस्थितमिति** वचनात्। न ह्यत्र योनिप्रवेश उच्यते। न च विशेषप्रमाणमस्ति येन कल्पयामः। व्यर्थश्च योनिप्रवेशः। पितुः सकाशादेव तस्मिन् बहिरेव वोत्पत्तिसम्भवात्। मातृप्राप्तेरपेक्षितत्वे वा पितुः सकाशात् संस्पर्शद्वारेण मातृप्राप्त्युपपत्तेः। पितृप्रवेशोऽप्ययुक्तः। उक्तवचनादेव। न चेशक्लृप्तिवचनविरोधः। वैपरीत्यस्यापि वक्तुं शक्यत्वात्। न च पितृप्राप्तिमन्तरेण मातृप्रवेशानुपपत्तिः। अन्यतोऽन्नादेरेव मातृप्रवेशोपपत्तेः। मातृस्थरेतसैव शरीरपरिणामोपपत्तेः पितुरेवानुपयोगः। शरीरप्राप्तिरप्यनुपपन्ना। पूर्वसिद्धतत्प्रवेशस्योक्तत्वात्। स च मातुरुदरस्थगर्भस्थिते वा बहिर्निर्गते वा उपपद्यते। क्वापीत्युक्तत्वात्। अतोऽत्यायासाभावात् नातिवैराग्येण कृत्यमिति भावः॥

## तत्त्वप्रकाशिका

सिद्धान्तः

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **अत इति** । अस्त्येव जीवस्य पितृशरीरप्रवेशः । ततो योनिद्वारैव मातृशरीरप्रवेशः । तत्रैव प्रागसिद्धशरीरप्राप्तिरित्यर्थः । नैतद्युक्तम्, अप्रामाणिकत्वादित्यत आह **दिव इति** । सम्मितं विशेषकारणमन्तरेण साधारणं जन्म । असाधारणजन्मविषयं प्रागुक्तमिति भावः । स्थास्नुषु शुकादयः । पुरुषे मान्धातृमुखाः । प्रमदायामास्तिकप्रभृतयो जरत्कार्वाद्यनुग्रहात् । गर्भे पूर्वसिद्धमेव शरीरं केचित् । बहिः द्रुपदादयःपितृसापेक्षाः । स्थानान्तरे धृष्टद्युम्नादयः पित्रादिनिरपेक्षाः । एतदेव **अन्तर** इति श्रुत्युक्तम् । मातापित्रोर्मध्येऽन्योऽन्यदर्शनमात्रेण वा । अतः सामान्यजन्मनि पित्रादिप्रवेशस्य नियमेन, अपवर्गादितरत्र सर्वत्रापि महादुःखाविनाभावात् तत्र विरक्तेन भगवान् भजनीय इति सिद्धम् ॥ २९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्रभाष्यस्य
टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्राकाशिकायां
तृतीयाध्यायस्य प्रथमः पादः ॥

## शेषतात्पर्यचन्द्रिका

पुण्यपापपेटिका

## ॥ ॐ योनेः शरीरम् ॐ ॥ २९ ॥

एतदधिकरणस्यारम्भणीयत्वम्

नन्वेतदारम्भो व्यर्थः । पितृप्रवेशस्य पूर्वनयसिद्धत्वात् । **ततो रेतःसिचमेवानुविशति, अथ मातरमथ प्रसूयते स कर्म कुरुते** इति पूर्वाधिकरणोदाहृत कौण्ठरव्यश्रुत्या मातृशरीरप्रवेशस्यापि सिद्धत्वात् । स्थूलशरीरप्राप्तिं विना प्रसूतिकर्तृत्वकर्मकर्तृत्वयोरयोगेन **अथ प्रसूयते स कर्म कुरुते** इत्युक्त्यैव शरीरप्राप्तेरपि तत्सिद्धेः । मातृप्रवेशोक्त्यैव योनिप्रवेशस्यापि तत्सिद्धेः । अत एव विशिष्टसमर्थनार्थमित्यपि निरस्तम् ॥

अत्रोच्यते । तत्र तावत् पितृप्रवेशसमर्थनाय आरम्भणीयमेवेदम् । तदंशे अभ्यधिकाशङ्कासद्भावात् । मातृप्रवेशोऽपि समर्थनीयः । पूर्वाधिकरणोदाहृतश्रुत्या प्रतिपादनेऽपि पूर्वपक्षसिद्धान्ताभ्यां स्थिरीकरणाभावात् । शरीरप्राप्तिरपि समर्थनीयैव । श्रुत्या अर्थतः प्राप्तत्वेऽपि साक्षादप्राप्तत्वात् ॥

सङ्गतिः

अत एव पूर्वश्रुत्या प्रतिपादितस्य रेतःसिग्योगादिशरीरप्राप्तिपर्यन्तस्य इह आक्षिप्य समाधानादनन्तरसङ्गतिः ॥

पूर्वपक्षः

अत्र—कर्मी जीवः न तावत् पितरं प्रविशति । **देहं गर्भस्थितं क्वापि प्रविशेत् स्वर्गतो गतः** इति वचनविरोधात् । तत्र मातृगर्भस्थ-

## शेषतात्पर्यचन्द्रिका

शरीर एव प्रवेशप्रतीतेः । न च **मातृप्राप्तेः पश्चादपि भाव्यत्वात्** इति तत् परिहृतमिति वाच्यम् । अत्र, **मातुरेवोदरं व्रजेत्** इत्यत्र च प्रतीतस्य मातृशरीरप्रवेशस्य निष्कारणं व्यवधानाश्रयणायोगात् । न च ईशकुक्षिवचनेन बाधः । तस्य च निरवकाशेन **देहं गर्भस्थितम्** इति वचनेनैव वैपरीत्यसम्भवात् । मातृभोग्यान्नादेरेव पित्रन्यतः[1] मातृप्रवेशोपपत्तेश्च । मातर्येव शरीरोपादानस्य शोणितस्य सम्भवाच्च । नापि मातरं प्रविशति । **देहं गर्भस्थितं क्वापि** इति मातुरुदराद्बहिः यत्र क्वापि स्थितं देहं प्रविशतीति प्रतीतेः । लाघवतर्कसहकृतैतद्वचनविरोधात् कौण्ठरव्यश्रुतिरपि यथाकथञ्चिद्योज्या । अथाप्यस्तु पितृप्रवेशो मातृप्रवेशश्च । तथापि योनिं न प्रविशति प्रमाणाभावात् । **देहं गर्भस्थितम्** इति वचने योनिप्रवेशानुक्तेः । पितुः सकाशदेव दर्शनस्पर्शनादिना मातृप्रवेशोपपत्तेः । अस्तु वा योनिप्रवेशः । तथापि न तत्र प्रागसिद्धशरीरप्राप्तिः । पूर्वमेव मातृशरीरे शोणितादिना परिणते सिद्धे देहे प्रवेशस्य **गर्भस्थितम्** इत्यनेन स्पष्टं प्रतीतेः । अतः पितृशरीरान्मातृयोनिं प्रविश्य तत्रैव क्रमेण शुक्लशोणिताभ्यां परिणतं शरीरं प्राप्नोतीत्यभिप्रेतस्य प्रमेयस्यासिद्धिरिति—पूर्वः पक्षः ॥

### सिद्धान्तः

अत्रोच्यते—पितृप्रवेशस्तावदङ्गीकार्यः । **य एव गृही** इत्यादिप्रमाणात् । न च **देहं गर्भस्थितम्** इति वचनविरोधः । तस्यासाधारणजन्मविषयत्वात् । एतेनैव मातृयोनिप्रवेशः, तत्रैव प्रागसिद्धदेहपरिणामश्च

---

[1] पितृस्वतः

## शेषतात्पर्यचन्द्रिका

सिद्धः। **दिवः स्थास्नून्** इति श्रुतेः, **स्थावराणि दिवः** इति ब्राह्मवचनाच्च। **देहं गर्भस्थितम्** इति वचनस्य, कौण्ठरव्यश्रुतेश्च साधारणासाधारणजन्मविषयत्वेन पौष्यायणश्रुत्यादिनैव व्यवस्थितत्वाच्चेति ॥

### अत्र मतद्वयोपगताधिकरणार्थपरीक्षा

उभये तु—**अन्याधिष्ठिते** इत्यादिचतुःसूत्री एकमधिकरणम्। किमनुशयिनः स्थावरत्वापत्त्या भोक्तारः, उत संश्लेषभाज इति संशये व्रीह्यादिभाव एव कर्मिणाम्। **त इह व्रीहियवास्तिला माषा इति जायन्ते** इति श्रवणात्। मनुष्या जायन्ते इत्यादौ जनेः शरीरग्रहणे प्रसिद्धत्वादिति प्राप्ते, अन्यैर्जीवैरधिष्ठितेषु व्रीह्यादिष्वनुशयिनः वायुधूमादिष्विव संसर्गमात्रम्। **कपूयचरणाः कपूयां योनिमापद्यन्ते** इत्यादिवत् कर्मकीर्तनपूर्वकं व्रीह्यादिभावाश्रवणात्। व्रीह्यादिजन्म न मुख्यम्, अस्मिन् प्रकरणे कर्मजन्यत्वमन्तरेण कीर्तितत्वे सति अन्यस्यान्यभावरूपत्वात् आकाशादिभाववत्, इत्यनुमानादिति सिद्धान्त—इत्याहुः ॥

तन्न, विपक्षे बाधकतर्काभावेन अप्रयोजकत्वात्। अन्यथा **व्याघ्रो वा सिंहो वा वराहो वा** इत्यादावपि तद्भावो न मुख्यःस्यात्। यदि च ब्रह्मज्ञानप्रकरणात् ज्ञानशून्यानामेव व्याघ्रादिभावोऽवगम्यते, अतः तत्र साधनमसिद्धम्, तदा प्रकृतेऽप्यवरोहस्य कर्मफलत्वेन तेषामेव व्रीह्यादिभावोऽवगम्यत इति कर्मपूर्वजन्माश्रवणासिद्धेः ॥

## शेषतात्पर्यचन्द्रिका

प्रथमसूत्रार्थपरीक्षा

फलदानप्रवृत्तस्य स्वर्गोपभोग्यफलस्य इष्टादेः कर्मणः स्वर्गभोगादेव समाप्तत्वात्, अनारब्धस्य **रमणीयचरणाः कपूयचरणाः** इति वक्ष्यमाणत्वात्, मध्ये कर्मान्तराभावाच्च इति कैश्चिदुक्तमयुक्तम् ॥

आगमने व्रीह्यादिप्रवेशादेराकस्मिकताऽऽपातात् ॥

यच्च प्रथमसूत्रांशस्य वर्णकान्तरम्— किं च रेतःसिग्भावाभिलापान्न व्रीह्यादिशरीरत्वम्। न हि सम्भवति व्रीह्यादिशरीरस्य तेषु लूयमानेषु खण्डयमानेषु पच्यमानेषु भक्ष्यमाणेषु वा ततोऽनिर्गमनमिति—

तन्न, व्रीह्यादिभ्यो निर्गतस्य जन्मान्तरमिव रेतःसिग्भावो भवितुं योग्य इति तद्भावाभिलापेन व्रीह्यादिशरीरत्वनिराकरणायोगाच्च ॥

रेतःसिग्योगसूत्रव्याख्यानपरीक्षा

यच्च तृतीयस्य व्याख्यानम्—**यो यो ह्यन्नमत्ति यो वा रेतःसिञ्चति, तद्भूय एव भवति** इति कर्मिणां यस्मात् रेतःसिग्भाव आम्नातः, चिरजातप्राप्तयौवनरेतःसिग्भावः, अद्यजातशिशोर्नोपपद्यत इति रेतःसिक्संश्लेषमात्रम्, तस्मादिहापि संश्लेषमात्रमिति—

तदपि न, अध्याहारापत्तेः। अथशब्दस्यैवायमर्थ इति चेन्न। तस्य हेतुत्वे शक्त्यभावात्।

**बीजपूरुषयोनीनां सज्जातिनियमोज्झितिम्**

## शेषतात्पर्यचन्द्रिका

इत्यादिना अथशब्दस्वारस्योक्तिसम्भवे तदस्वारस्यायोगाच्च । रेतःसिग्योगवदिति सूत्रणापाताच्च । चशब्दाभावाच्च । **यो वा रेतःसिञ्चति तद्भूय एव भवतीत्यत्र ब्रह्मभूयाय कल्पते** इत्यादिवत् तद्भूतत्वस्यैव प्रतीतेरुपचरितार्थत्वाभावेन दृष्टान्तासिद्धेश्च । तत्र बाधकवशात् तथात्वेऽपि प्रकृते तदयोगाच्च । पितृप्रवेशादिक्लेशसमर्थनपरत्वेन साक्षात्पादसङ्गतिसम्भवे गुणसूत्रत्वायोगाच्च ॥

'योनेः शरीरम्' सूत्रव्याख्यानपरीक्षा

यच्च—तत्किमिदानीं सर्वत्रैवानुशयिनः संसर्गमात्रम्? तथा सति **रमणीयचरणा** इत्यादिषु तदभाव आपद्येत, इत्यतो न कर्मिणां सर्वत्र संश्लेषमात्रम्, किन्तु तच्छरीरप्राप्तिरस्तीत्युच्यते, इति **योनेः शरीरम्** इत्यस्य केषाञ्चिन्मते व्याख्यानम्—

तच्चायुक्तम्, **कपूयचरणाः** इत्यादिवत् कर्मपूर्वजन्माभिलापाभावादिति प्रथमसूत्रे दृष्टान्तकरणेन शङ्काऽयोगात् । हेत्वनुपन्यासेन न्यूनत्वाच्च । मातृशरीरप्रवेशादिरूपक्लेशाधिक्यसमर्थनस्यावश्यकस्य त्यागेन अनावश्यकसंश्लेषमात्रनिराकरणस्यायोगेन गुणसूत्रत्वोक्त्ययुक्तेश्च । प्रधानसूत्रत्वसम्भवेऽपि गुणसूत्रत्वे अन्यत्रापि तदापत्तेश्च ॥

सूत्रक्रमपरीक्षा

**स्वपक्षसाधनं सपरिकरं विधाय विपक्षदूषणस्य कर्तव्यत्वेन सावशेषं स्वपक्षं प्रसाध्य, मध्ये विपक्षं दूषयित्वा, पुनः स्वपक्षसाधनाय युक्त्यन्तरो-**

## शेषतात्पर्यचन्द्रिका

पन्यासायोगेन, तृतीयचतुर्थयोः द्वितीयात्पूर्वनिवेशस्य न्याय्यतया, अशुद्ध-सूत्रस्य द्वितीयत्वायोगेन सूत्रक्रमोऽप्ययुक्तः ॥

अधिकरणक्रमपरीक्षा

एवमाद्यनये गतिप्रकारं निरूप्य द्वितीये आगतिप्रकारं विचार्य, **अनिष्टादिकारिणामपि च श्रुतम्** इति तृतीयेन **एते सर्वे चन्द्रमसमेव गच्छन्ति** इति वाक्यमुदाहृत्य पुनरपि गतिप्रकारविचारस्य प्रकृतहानाप्रकृत-ग्रहणादिदुष्टतया अधिकरणक्रमोऽप्ययुक्तः ॥

ऐक्यप्रतिकूलता

तत्त्वाभाव्यनये च ऐक्यवाक्यानां सादृश्याभिप्रायतायाः उक्तत्वेन ऐक्यप्रतिकूलता स्फुटैवेत्याद्यूह्यम् ॥

टीकायां पूर्वपक्षन्यायविवरणव्याख्यानम्

टीकाक्षरार्थस्तु—**योनेःशरीरमिति** सूत्रानुसाराद्योनिप्रवेशं प्रथमतः प्रतिक्षिपति **योनिप्रवेशस्तावदिति** ॥

**ततो रेतःसिचमेवानुविशतीति** कौण्ठरव्यश्रुत्या **देहं गर्भस्थितम्** इति वचनं योज्यमिति योनिप्रवेशोऽपि श्रूयत एवेत्याशङ्कापरिहाराय **अन्यथा गतिरित्युक्तन्यायं** साध्यप्रदर्शनेन विवृण्वत् **न च**[1] **पितुः सकाशादन्यतो वौदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेः योनिप्रवेशाभाव इति वाच्यम्** इति वाक्यं व्याख्याति **व्यर्थश्च योनिप्रवेश इति** ॥

---

[1] तु

## शेषतात्पर्यचन्द्रिका

अत्र 'योनिप्रवेशो व्यर्थः । पितृप्रवेशोऽप्ययुक्तः । शरीरप्राप्तिरप्यनुपपन्ना ।' इति वाक्यत्रयं विवरणवाक्यशेषतया अध्याहरणीयम् । यतोऽत इति च । औदर्यगर्भस्थशरीरमेव प्रवेष्टुमिति व्यस्तं समस्तं चावृत्तं ज्ञातव्यम् । तथा च—पितुः सकाशात् शरीरमेव प्रवेष्टुमुपपत्तेः योनिप्रवेशो व्यर्थः, अन्यत ओदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेः पितृप्रवेशोऽप्ययुक्तः, औदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेः शरीरप्राप्तिरप्यनुपपन्ना, यतः ; अतो योनिप्रवेशाभाव—इति वाक्यभेदाश्रयणेन वाक्यत्रयम् ॥

तत्र किं योनिप्रवेशः शरीरोत्पत्त्यर्थमङ्गीकार्यः, उत मातृप्राप्त्युपयोगितयेति विकल्प्य आद्यपक्षनिरासाय आद्यं वाक्यं योजयति **पितुः सकाशादेव तस्मिन् बहिरेव वेति** । मान्धात्रादेरिव पितर्येवान्तः, द्रुपदादेरिव बहिरेव वेत्यर्थः । **शरीरमेव प्रवेष्टुमुपपत्तेरित्यस्य** तात्पर्यमाह **उत्पत्तिसम्भवादिति** । द्वितीयपक्षनिरासाय एतदेव वाक्यं योजयति **मातृप्राप्तेरिति** । **संस्पर्शेति** । ग्राम्यधर्मं विनेत्यर्थः । **शरीरमेव प्रवेष्टुमुपपत्तेरित्यस्य** अर्थः **मातृप्राप्त्युपपत्तेरिति** । मातृशरीरमेव प्रवेष्टुमुपपत्तेः योनिप्रवेशो व्यर्थ इति योजना द्रष्टव्या ॥

अन्यतो वा शरीरमेव प्रवेष्टुमुपपत्तेः पितृप्रवेशोऽप्ययुक्त इति द्वितीयवाक्यं व्याचष्टे **पितृप्रवेश इति** । पितृप्रवेशाङ्गीकारे बाधकाभावाद्वा, उत साधकात् , मातृप्रवेशान्यथानुपपत्त्या वा पितृप्रवेशोऽङ्गीकार्य

शेषतात्पर्यचन्द्रिका

इति विकल्प्य आद्यद्वितीयौ भाष्यदिशा निराकृत्य तृतीयनिरासकतया **अन्यतो वे**त्यादि व्याचष्टे **न च पितृप्राप्तिमि**ति । अन्यत इत्यस्यैवार्थः **अन्ना-देवे**ति । **शरीरमेव प्रवेष्टुमुपपत्ते**रित्यस्यार्थो **मातृप्रवेशोपपत्ते**रिति । **औदर्यगर्भस्थे**ति शरीरविशेषणस्वारस्यमाह **मातृस्थरेतस एवे**ति[1] ॥

तृतीयं वाक्यं व्याख्याति **शरीरप्राप्ति**रिति । **औदर्यगर्भस्थे**ति पद-तात्पर्यमाह **पूर्वसिद्धे**ति ॥

टीकायां सिद्धान्तन्यायविवरणव्याख्यानम्

अत्र **अन्यागतिः** इत्युक्तन्यायं गत्यन्तराभावपरतया विवृण्वत्—

**'योनिद्वारेण देहं च प्राप्नोति प्रायशो नरः ।'**

**इति वचनात् सामान्यतो** गत्यन्तराभावात्,

**'विशेषकारणादेव विशेषाज्जनिरिष्यते ।**
**सामान्यजननं चैव नृणां सामान्यहेतुतः ॥'**

**इति वचनाच्च** इति वाक्यम्—तत्पूर्वार्धेन भाष्योदाहृतवचनेषु योनि-द्वारा देहप्राप्त्यश्रवणात् 'योनेः शरीरं प्राप्नोति' इत्यनुपपन्नमिति चोद्यं परास्तम्; सामान्यतो जनने कुतो गत्यन्तराभावः, विशेषकारणादेव द्रुपदादीनामिवोपपत्तेः इत्याशङ्क्य, विशेषकारणात् विशेषजननम्, सामान्य-कारणात् सामान्यजननमिति व्यवस्थायाः **विशेषकारणादेव** इति वचनात् सिद्धेः, सामान्यजननेऽपि पितृप्रवेशादिरूपसामान्यहेतुं विना गत्यन्तरा-भाव इति योज्यमित्यभिप्रेत्य तात्पर्यमाह **सामान्यजन्मनी**ति ॥

---

[1] रेतसैवेति ।

## शेषतात्पर्यचन्द्रिका

सिद्धान्ते एतत्पादीयाधिकरणसूत्रसङ्ख्या

ततश्च, **स्वाभाविकान्यथानाम**-इत्याद्येतत्पादीयपूर्वपक्षन्यायमालायां सहभावान्यथोक्तीत्येतन्न्यायैक्यपक्षे सकृदावर्तते । अविशेषेत्येतच्च सकृदावर्तते । सहभावेत्येतद्द्विरावर्तते । सहस्थानमित्येतत्पञ्चकृत्व आवर्तते । तथा च विंशतिन्यायाः सम्पन्नाः ॥

एवं **गुणाधिक्यार्थतोभत्रौ** इत्यादिसिद्धान्तन्यायमालायां, योग्यता इत्येतद्द्विरावर्तते । कारणाभव इत्येतत् पञ्चकृत्व आवर्तते । तथा च विंशतिन्यायाः सम्पन्नाः ॥

ते च यथाक्रमं विवरणे व्याख्याता इति सर्वज्ञमुनिकृतव्याख्यानानुसारेण विंशत्यधिकरणात्मकः, एकोनत्रिंशत्सूत्रात्मकश्चायं पादः प्रतिपत्तव्यः ; न पुनः मिथ्याज्ञान्यसम्प्रदायकव्याख्यानानुसारेण षडधिकरणात्मकः, **यथेतमनेवं च** इत्यस्य अन्यशेषताकल्पनेन **स्मरणाच्च** इत्यस्य स्वरूपतस्त्यागेनैव सप्तविंशतिसूत्रात्मकः ॥

मतान्तरे सूत्राणामपपाठः

तत्रापि सूत्राणामपपाठः मिथ्याज्ञानिकल्पितः, 'तत्रापि तद्व्यापाराद-विरोधः' 'तृतीयशब्दावरोधः' 'अपि च सप्त' 'साभाव्यापत्तिः' इत्यादि-रूपः प्रतिपत्तव्यः, तेषां सम्प्रदायानभिज्ञत्वस्य स्फुटत्वात् । न हि ते सर्वज्ञमुनिवत् सूत्रकृत्साक्षाच्छिष्याः । अत एव चैतद्व्याख्यानं फणिपत्यादयोऽप्यास्वादयन्तीति अशेषमतिमङ्गळम् ॥

**इति योन्यधिकरणम्** ॥ २० ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीलक्ष्मीनारारायणतीर्थपूज्यपादानां शिष्येण श्रीमद्रघुनाथयतिना कृतायां शिष्टतात्पर्यचन्द्रिकायां तृतीयाध्यायस्य प्रथमः पादः ॥**

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः हरिः ॐ ॥

# अथ तत्त्वप्रकाशिकाशेषतात्पर्यचन्द्रिकासमेते
# श्रीमद्ब्रह्मसूत्रभाष्ये
# तृतीयाध्याये द्वितीयः पादः ।

—:o:—

## ॥ अथ सन्ध्याधिकरणम् ॥ १ ॥

भक्तिरस्मिन् पाद उच्यते । भक्त्यर्थं भगवन्महिमोक्तिः ॥

## ॥ ॐ सन्ध्ये सृष्टिराह हि ॐ ॥ १ ॥

न स्वप्नोऽपि तं विना प्रतीयते । 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथःसृजते' इत्यादिश्रुतेः ॥ १ ॥

---

### तत्त्वप्रकाशिका

एतत्पादप्रतिपाद्यनिरूपणम्

एतत्पादप्रतिपाद्यं दर्शयति **भक्तिरिति**। यद्दार्ढ्यार्थं वैराग्यं निरूपितं पूर्वपादे, या च उपासनस्याङ्गम्, सा भक्तिरवसरप्राप्ता अस्मिन् पादे निरूप्यत इत्यर्थः ॥

ननु भक्तिरुच्यत इति कोऽर्थः । किं तत्स्वरूपं निरूप्यते, कर्तव्येति विधीयते वा? नाद्यः, अभावात् । न द्वितीयः, पुरुषप्रयत्ना-

तत्त्वप्रकाशिका

विषयत्वेन विधेरयोगादित्यत आह **भक्त्यर्थमिति**। नात्र भक्तिस्वरूपनिरूपणं तद्विधानं वा क्रियते। किन्नाम भक्त्युत्पादनार्थं भगवन्महिमोच्यते। माहात्म्यज्ञानपूर्वकस्नेहो हि भक्तिः। न हि माहात्म्यानुक्तौ तज्ज्ञानं भवति स्नेहो वा। एवं साधनवचनस्यापि फल एव तात्पर्यात् भक्तिरुच्यत इत्युक्तमिति भावः ॥

स्यादेतत्। न स्नेहार्थं महिमोक्तिर्युक्ता। तदभावेऽपि पुत्रादौ स्नेहदर्शनात्। क्वचित्तदुक्तावप्यदर्शनादिति। मैवम्। कारणान्तरेण फलसिद्धावप्यन्यस्य कारणत्वाविरोधात्। न हि विनापि कारीर्या वृष्टिर्दृष्टेति तदनुष्ठानं वृष्टावकारणं भवति। श्रुतमाहात्म्येऽपि स्नेहानुत्पत्तिः मत्सरादिनिबद्धा न माहात्म्यश्रवणस्याकारणत्वमाक्षिपति। न हि भर्जितं बीजमङ्कुरं नोत्पादयतीत्येतावता बीजस्याङ्कुरकारणत्वं नास्ति ॥

सर्वस्यापि माहात्म्यस्य प्रथमाध्याय एवोक्तत्वात् किमत्रोच्यत इति, सत्यम्। तदेव क्वचिद्विविच्योच्यते क्वचित्समर्थ्यत इत्यदोषः ॥

सङ्गत्यादि

अत्रादौ भगवत्प्राप्तिसाधनभक्त्यर्थं स्वप्नविषयतत्प्रतीत्योः भगवदधीनत्वमहिम्नो वर्णनात् अस्ति शास्त्रादिसङ्गतिः। सर्वं भगवदधीनमिति प्रागुक्तम्। स्वप्नतत्प्रतीत्योरीश्वरानधीनत्वे तदयुक्तं स्यादिति तद्वर्णनीयम्। स्वप्नोऽत्रविषयः। भगवदधीनो न वेति सन्देहः। विप्रतिपत्तिः सन्देहबीजम् ॥

## तत्त्वप्रकाशिका

पूर्वपक्षः

न स्वप्नो भगवदधीन इति पूर्वः पक्षः। तस्यासत्त्वात्। सत्त्वे च वक्तव्यं, किं स्वाप्नविषयो नित्योऽनित्यो वेति। उभयथापि पूर्वोत्तरकालं दर्शनप्रसङ्गः। न च तदा दृश्यते। अतः प्रातीतिकत्वादसन्नेव, शुक्तिकारजतादिवत्। न च वक्तव्यं प्रतीतिकाल एव सृष्टिनिरोधावतो न दोष इति। प्रमाणाभावात्, कर्त्रुपादाननिमित्तानामभावाच्च। किञ्च स्वप्नविषयं किमयं शरीरे स्थित्वैव पश्यति निर्गत्य वा? नाद्यः। मेरुमन्दरादिदर्शनायोगात्। न द्वितीयः। कुरुषु सुप्तस्य पाञ्चलान् पश्यतः तत्रैव प्रबोधे शरीरप्रवेशोऽस्य पश्चादेवेति प्राप्तेः। किञ्च हेमन्ते सुप्तस्य वसन्तप्रतीतिस्तावदस्ति। न च वसन्तसत्ता तदास्ति। न च प्रतीतिकारणं वास्ति। इन्द्रियवृत्तीनामुपरतत्वात् मनसो बाह्यार्थेष्वस्वातन्त्र्यात्। यदि चैते विषयाः द्रष्टुर्भिन्नाः तदा समीपस्थैर्दृश्येरन्। बाह्यार्थत्वात्। अथ न ततोऽतिरिक्ताः तर्ह्यागतं कल्पितत्वमेव। परमार्थतोऽस्य करितुरगादिभावाभावात्। तत्काल एव सृष्टिनिरोधपक्षे च प्रागुत्तरकालं मृत्पिण्डकपालादीनि दृश्येरन्। न च दृश्यन्ते। अतः प्रातीतिकत्वात् मरुमरीचिकाजलादिवत् न स्वप्नविषयस्य ईश्वराधीनत्वमिति न तस्य महामाहमत्वामातं॥

सिद्धान्तः

(स्वाप्नस्य पूर्वोत्तरकालादर्शनोपपत्तिः)

सिद्धान्तयत्सूत्रं पठित्वा अधिकरणतात्पर्यं तावदाह **सन्ध्य इति**। तं विना परमेश्वरं विना, तदधीन इत्यर्थः। अत्रोक्तदोषपरिहाराय सूत्रम्। यदुक्तं स्वाप्नस्य पश्चाददृष्टेरसत्त्वात् भगवदधीनत्वायोग इति। तदनुपपन्नम्। यतो जाग्रत्सुषुप्तिसन्धौ भवतीति सन्ध्ये स्वप्ने प्रागसतामर्थानां सृष्टिः, अनन्तरमेव निरोधश्चाङ्गीक्रियत इति। ननूक्तमत्र प्रमाणं नास्तीति, तत्राह **नेति**॥१॥

॥ ॐ निर्मातारं चैके पुत्रादयश्च ॐ ॥ २ ॥

'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः' इति च। 'एतस्माद्ध्येव पुत्रो जायते। एतस्माद्भ्रातैतस्माद्भार्या। यदैनं पुरुषमेव स्वप्नेनाभिहन्ति' इति गौपवनश्रुतिश्च ॥ २ ॥

तत्त्वप्रकाशिका

(स्वप्नसृष्टौ कर्त्रनुपपत्तिशङ्कापरिहारः)

कर्तुरभावात् न सृष्टिरुपपन्ना। न हि जीवस्तत्कर्ता। तस्य सुप्तत्वात्। नापीश्वरः। तत्प्रमाणाभावात्। न च पक्षद्वये सृष्टिरुपपन्ना। तत्काल एव सृष्टिनाशकर्तुरदर्शनादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तत्सूचितश्रुती उदाहरति **निर्मातारमिति**। न स्वप्नसृष्टौ कर्तुरभावः। जीवानां सुप्तत्वेऽपि परमात्मनः कर्तृत्वात्। न च तत्र प्रमाणाभावः। यतो **य एषु सुप्तेषु** इतीश्वरं निर्मातारमाहुरके शाखिनः। अत एव तस्यान्याशक्यकरणशक्तिमत्त्वेन तात्कालिकी सृष्टिरुपपन्नेति भावः ॥

(श्रुतेः उक्तार्थपरत्वम्)

एके तु मन्यन्ते—जीवपरैवेयं श्रुतिः। ईश्वरलिङ्गाभावात्। जीवस्य कुलालवत्कर्तृत्वायोगात् कल्पकत्वमेव। अस्तु वा ईश्वरपरता। तथापि नात्र तस्य स्वप्नकर्तृत्वं श्रूयते। निर्मातृत्वमात्रस्यैव श्रवणादिति—तन्न युक्तम्। **सुप्तेषु जागर्ति** इति ईश्वरलिङ्गश्रवणात्। **तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते** इति वाक्यशेषाच्च। न च ब्रह्मैक्यं तस्योच्यते। तस्य दूषितत्वात् **तस्मिँल्लोकाः श्रिताः सर्वे** इत्युक्तविशिष्टेन ऐक्यानङ्गीकाराच्च।

केन साधनेन ?

॥ ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ ॥३॥

अनादिमनोगतान् संस्कारान् स्वेच्छामात्रेण प्रदर्शयति नान्येन साधनेन । सम्यगनभिव्यक्तत्वात् । ब्रह्माण्डे च—

'मनोगतांश्च संस्कारान् स्वेच्छया परमेश्वरः ।
प्रदर्शयति जीवाय स स्वप्न इति गीयते ।
यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता ।
अनभिव्यक्तरूपत्वात् नान्यसाधनजं भवेत् '—इति ॥३॥

---

तत्त्वप्रकाशिका

लक्षणा चागतिका गतिः । न चेश्वरस्य स्वप्नकर्तृत्वं न प्रतीयते । भुञ्जानो नोत्सृजेद्वाचम् इत्यादाविव प्रकरणप्राप्तत्वात् । एतस्मादिति स्पष्टम् । पुत्रादयश्च स्वाप्ना हरेरेव जायन्ते इत्येके शाखिन आहुरिति सूत्रार्थः ॥ २ ॥

(स्वप्नसृष्टौ उपादाननिमित्तानुपपत्तिपरिहारः)

उपादाननिमित्ताभावात् न स्वप्ने सृष्टिरुपपन्नेत्याक्षिपति **केनेति** । तत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे **मायेति** । न स्वप्नस्योपादानाद्यभावेन सृष्ट्यभावः । यतः सन्ध्यं मायामात्रम्, मनोगतान् पूर्वानुभूतवस्तु-संस्कारानुपादानीकृत्य निमित्तभूतया स्वेच्छयैवेश्वरेण निर्मितमित्यर्थः । स्वशिरश्छेदादीनामसत्त्वनिरासाय अनादिमनोग्रहणम् ॥

## तत्त्वप्रकाशिका

(स्वप्नः वासनामयः सत्यश्च)

कुतोऽस्य वासनामयत्वमिति वदन् प्रष्टव्यो जायते। किमस्य कल्पितत्वमभिप्रेयते नित्यत्वं वा उत बाह्यमेव वा कारणम्। न प्रथमद्वितीयौ। सृष्टिवाक्येनैव निरासात्। द्वितीये स्वप्नयुक्तैवादृष्टिपिशाची स्वात्मानमभिधावति। तृतीयं प्रतिषेधति **नेति**। अनेनावधारणार्थस्तुशब्दो व्याख्यातः। अत्र हेतुमाह **सम्यगिति**। यदि बाह्यकारणकाः स्वप्नविषयास्तदा सम्यगभिव्यज्येरन्। न चैवम्। अतः संस्कारोपादानका एवेति भावः॥

एतेनोक्तकण्ठकोलाहलाः प्रत्युक्ताः। वासनामयानां मेरुमन्दरवसन्तादीनां शरीरादनिर्गत्यैव मनसा दर्शनसम्भवात्। बाह्यकारणाभावात् मृत्पिण्डादिप्रतीतेरप्रसङ्गात्। सूत्रार्थे स्मृतिसम्मतिञ्च दर्शयति **ब्रह्माण्डे चेति**॥

(स्वाप्नपदार्थस्य स्वरूपेणाबाध्यत्वम्)

ननु अविद्यमानानेव करितुरगादीनपश्यमित्युत्तरकालिकानुभवात्कथमुत्पत्तिः स्वाप्नस्योच्यत इत्यत आह **यदिति**। प्रतीतं स्वाप्नविषयाणां जाग्रत्पदार्थत्वमेव बाध्यत इति तत्प्रतीतिर्भ्रान्तिरस्तु, न स्वप्नप्रतीतिरिति भावः। तत्कृता अन्यथात्वहेतुकृता, ईश्वरकृतेति वा ॥ ३ ॥

॥ ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ ॥ ४ ॥

साधनान्तराभावेऽपि भावाभावसूचकत्वेनेश्वरो दर्शयति ।

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति ।

समृद्धिं तत्र जानीयात् तस्मिन्स्वप्ननिदर्शने'

इत्यादिश्रुतेः । हिशब्दाद्दर्शनाच्च ।

'यद्वापि ब्राह्मणो ब्रूयाद्देवता वृषभोऽपि वा ।

स्वप्नस्थमथ वा राजा तत्तथैव भविष्यति'

इत्याचक्षते च स्वप्नविदो व्यासादयः ॥ ४ ॥

---

## तत्त्वप्रकाशिका

(शुभाशुभसूचकत्वेन स्वप्नसत्यत्वम्)

ननु यदि बाह्यार्थजन्याः स्वाप्नविषया न भवन्ति तर्हि तेषां सत्त्वं न प्राप्नोति शुक्तिरजतादिवदित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे **सूचकश्चेति** । स्वप्नविषयाणां बाह्यसाधनजन्यत्वाभावेऽपि न सत्त्वहानिः । शुभाशुभसूचकत्वेन सत्त्वस्यैव निश्चितत्वात् । न ह्यविद्यमानं शाकुनं कस्यचित्सूचकमिति भावः । स्वाप्नार्थानां भावाभावसूचकत्वमेव कुत इत्यत आह **यदेति** । काम्येषु कर्मसु क्रियमाणेषु, यदा यदि, स्त्रियं पश्यति, तत्र तर्हि, तस्मिन् स्वप्नाख्ये निदर्शने जाते समृद्धिं जानीयादित्यर्थः । एवं **पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति** इत्यादिश्रुतिश्चोदाहर्तव्या । इति सूचितमितिशेषः । न च मन्तव्यं, **चन्द्रमा इवादित्यो दृश्यत** इति भ्रान्तार्थस्यापि सूचकत्वं श्रूयत इति । अन्यथाज्ञातस्याधिष्ठानस्यैव सूचकत्वाभिधानात् । न चैवमत्रोक्तिरस्ति । न चात्राधिष्ठानमस्ति । आत्मनः पृथक् प्रतीतेः । अतःस्वप्नस्य भगवदधीनत्वसिद्धेः महामाहात्म्यं तस्येति युक्ता तत्र भक्तिरिति सिद्धम् ॥ ४ ॥

## शेषतात्पर्यचन्द्रिका

विवरणपेटिका

### ॥ ॐ सन्ध्ये सृष्टिराह हि ॐ ॥ १ ॥

एतत्पादस्य जन्मादिनयेन सङ्गतिं सूचयितुं
द्वितीयाध्यायस्य तदुक्तिः

प्रथमसूत्रस्थब्रह्मपदोक्तानन्तकल्याणगुणोपपादनाय लक्षणमभिधातुं द्वितीयं सूत्रम् । तत्तु, यावत् तदन्तर्गतपदानि न विव्रियन्ते न तावत् तदुपपादकतामश्नुत इति चरममपि सृष्टिकर्तुः प्राधान्यात् तत्परं तसिलन्तं यत्पदमतिव्याप्त्यसम्भवनिरसनव्याजेन, न रुद्रादिःकर्ता अपि तु विष्णुरेवेति द्वितीयाध्यायेन विवृतम् ॥

एतत्पादस्य प्रकारत्रयेण जन्मादिसूत्रविवरणरूपत्वम्

अस्येति कर्मसमर्पकं जगत्परं पदं न मायिमत इव बाह्यप्रपञ्चमात्रपरं. किन्त्वान्तरप्रपञ्चपरमपीति. इदं घटत्वेन व्यवहर्तव्यं घटत्वादित्यादौ घटत्वमेतद्घटत्वापेक्षयेव विकासकमेवेति निरूप्यते ॥

यद्वा स्वाप्नसृष्टिकथनव्याजेन न केवला प्राकृती उत्पत्तिरेव जन्म, किन्तु वासनामय्यपीति प्रथमश्रुतजन्मपदमेव विव्रियते ॥

यद्वा आदिशब्दो न स्थितिभङ्गमात्रपरः, किन्तु स्थित्यादिमोक्षान्तपर इति क्रमेण विव्रियते ॥

## शेषतात्पर्यचन्द्रिका

ब्रह्मलक्षणविवरणात्मकत्वेऽपि अस्य पादस्य
साधनाध्यायसङ्गतत्वम्

अत्र त्रिष्वपि पक्षेषु श्रुतमाहात्म्यस्य भक्त्युत्पत्तेरावश्यकत्वेन तत्साधनमहिमोक्तिरेव भक्त्युक्तिरिति साधनलक्षणसङ्गतिः। न च आकाशाद्यधिकरणवत् लक्षणविवरणात्मकत्वेन प्रथमद्वितीययोरेवास्य निवेशो युक्तो नात्रेति वाच्यम्। उक्तरीत्या इहापि सङ्गतत्वात्। यथा पर्णमय्यधिकरणस्यार्थवादपादे स्तावकत्वोक्तिरूपत्वेन सङ्गतत्वेऽपि प्रयुक्तिलक्षणे, यथा वा स्मृत्यधिकरणस्य द्वितीयादौ ॥

भक्तिनिरूपणस्य पौनरुक्त्यशङ्कानिरासः

आकाशाद्यधिकरणस्य तु साधारणमाहात्म्यप्रतिपादनेन भक्तिमात्रोपयोगित्वेऽपि, एतत्पादस्थाधिकरणानामिव विवक्षितनिरवधिकनिरतिशयभक्त्युपयोगित्वाभावेन नात्र निवेशः। अत एवातीतपादे साधनजातस्यानुष्ठेयत्वनिरूपणेन भक्तेरपि तन्निरूपितमित्येत्पादवैयर्थ्यमित्याशङ्का निरस्ता ॥

आत्यन्तिकत्वादिविशिष्टविवक्षितवैराग्यस्य तु साधनजातस्यानुष्ठेयत्वसिद्ध्यर्थं मृतिमात्रस्य मोक्षत्वाभावसमर्थनाय गतागतादेः क्लेशिष्ठत्वस्यापि प्रतिपादितत्वादानुषङ्गिकी सिद्धिरिति न पृथगारम्भः ॥

पूर्वपादसङ्गतिः

साधनेषु च वैराग्यस्य प्राथम्यात तन्निरूपणानन्तरं क्रमप्राप्ता भक्तिर्निरूप्यत इति सङ्गतिः।

## शेषतात्पर्यचन्द्रिका

एतत्पादीयाधिकरणानाम् ऐकार्थ्यात् पादैक्यम्

अत्र भगवतः सकाशात्स्वप्नस्य सृष्टिनिरोधाङ्गीकारेण, आद्येऽधिकरणे सत्त्वे प्रतिज्ञाते ; विमतं न भगवत्सृष्टं, निवर्तकं विनापि निवृत्त्युपलम्भात्, न च ज्ञानं निवर्तकम्, जडत्वेन स्वतस्तदनुपपत्तेः, उपपत्तौ वा सुतरां कल्पितत्वप्राप्तेः । नापीश्वरः, प्रमाणाभावादिति प्राप्ते, बन्धमोक्षयोर्भगवदधीनत्वस्य प्रमितत्वात्, तदन्तर्गतस्वप्नतिरोधानकर्तृत्वं सुतरां प्रमितमिति द्वितीयेनोक्ते ; जाग्रत्पदार्थस्याबाधितप्रत्यक्षादिना जीवादिसृष्टत्वावगमेन, अविशेषात् स्वप्नस्यापि तत्सृष्टत्वमेव न्याय्यमितिशङ्कने, प्रत्यक्षादेराभासत्ववर्णनेन जाग्रतस्तत्सृष्टत्वनिराकरणेन दृष्टान्त एवासिद्ध इति तृतीयेनोक्ते ; अहं करोमीत्यादिस्वातन्त्र्यप्रत्यक्षस्य देहाभिमानलक्षणदोषनिमित्तत्वेन जाग्रतः तत्सृष्टत्वाभावेऽपि सुषुप्तिकालीनसुखप्रत्यक्षस्य तदभावेन तत्कालीनसुखादेः तत्सृष्टत्वसम्भवात् तद्दृष्टान्तेन स्वाप्नोऽपि[1] तथेति पूर्वपक्षिते, तस्यापि स्वातन्त्र्यांशे भ्रमत्वोपपादनेन दृष्टान्तासिद्धिरिति चतुर्थेनोक्ते ; अन्वयव्यतिरेकानुविधानसिद्धभेरीताडनादिकृतत्वात्प्रबोधस्य तद्दृष्टान्तेन स्वाप्नोऽप्यन्यकृत इति पुनः प्रत्यवस्थाने, अन्वयव्यतिरेकदर्शनादेरन्यथासिद्धिवर्णनेन तत्रापीशकर्तृत्वसमर्थनेन नायमपि दृष्टान्त इति पञ्चमेनोक्ते ; लौकिकराजादिवदीश्वरस्यापि खण्डेशत्वान्न स्वाप्नादिः तत्कृत इति प्राप्तौ, प्रमाणविशेषोपन्यासेन अखण्डेशत्वं समर्थ्य पुनः तत्कृतत्वे षष्ठेनोक्ते ; मूर्च्छितदुःखादेरतत्कृतत्वमङ्गीकृत्य तद्दृष्टान्तेन पूर्वपक्षिते, तस्यापीश्वरार्धप्राप्त्यादि-

[1] स्वप्नेऽपि

## शेषतात्पर्यचन्द्रिका

कृतत्वेन नायमपि दृष्टान्त इति **प्रत्युक्ते** ; ननु स्थानविशेषाधिष्ठितस्यैव स्वाप्नादिकर्तृत्वं वक्तव्यम्, ततश्च भेदः, ततश्च नास्मदादिवत् स्वप्नकर्तृत्वमिति पुनराक्षेपे, भेदनिरासे **अष्टमेन** कृते ; शरीरित्वेऽनित्यत्वप्रसङ्गेन अशरीरित्वे स्वप्नस्रष्टृत्वानुपपत्तिरिति चोदने, अप्राकृतशरीरसमर्थनेन **नवमे** निरस्ते, जीवस्य स्वाप्नस्रष्टृत्वमुपादानाद्यनभिज्ञत्वादनुपपन्नमिति सर्वसम्मतं, तदभिन्नत्वादीशस्यापीति शङ्कने, **दशमे** जीवभेदसमर्थनेनापहस्तिते, जीवभेदाङ्गीकारे तस्य स्वरूपाभिव्यक्तिरूपमोक्षप्रतिबन्धकत्वात् तदसम्भवः अतो न भेदः, ततश्च स्रष्टृत्वानुपपत्तिरिति चोद्ये, भक्तिं विना स्वरूपाभिव्यक्त्यसम्भवेन तदभावस्य प्रतिबन्धकत्वेऽपि भेदस्य तदभावात् इति **अम्बुनयेन** परिहृते, ईशस्य वैषम्यनैर्घृण्यादिदोषित्वेन जीववदेव स्रष्टृत्वमयुक्तमिति प्रत्यवस्थाने, साधनानुसारेण फलदातृत्वेन उभयान्प्रत्यपि सामञ्जस्यसम्भवेन दोषाभावे **द्वादशेनोक्ते**, विमतो न जगत्स्रष्टा तदपालकत्वात् व्यतिरेकेण जीववत् इति पुनराक्षेपे, निरवकाशप्रमाणेन **त्रयोदशे** पालकत्वे समर्थिते, विमतो न स्रष्टा व्यक्तत्वात् जीववत् इति पुनः प्रत्यवस्थाने, प्रमाणबला**च्चतुर्दशे**ऽव्यक्तत्वे साधिते, ईशत्वाव्याघाताय उद्रिक्तानन्दित्वस्यैव सृष्टिप्रयोजकतया तस्य च 'आनन्दो ब्रह्म' इति निषेधात् स्रष्टृत्वमनुपपन्नमिति पुनः शङ्कने[1], आनन्दित्वसमर्थने **पञ्चदशेन** कृते ; तथापि उत्कृष्टलोकविलक्षणानन्दवत एव तत्तत्पुरुषैकानुभाव्य[2]विचित्रानन्तस्वाप्नस्रष्टृत्वमुपपद्यते, नान्यस्येति पुनरुत्थाने, तद्गुणानां लोकवैलक्षण्ये **षोडशे** समर्थिते ; लौकिकचतुर्मुखाद्या-

1 उत्थाने  2 पुरुषैकसम्भाव्य

शेषतात्पर्यचन्द्रिका

नन्दं प्रति ईशानन्दस्य बिम्बत्वादलौकिकत्वमनुपपन्नं, बिम्बप्रतिबिम्बयोरैकविध्यात्, ततश्च न स्रष्टृत्वमिति पुनराक्षेपे, सप्तदशे तयोरैकविध्यनियमाभावे सिद्धान्तिते, ध्यातृचित्तप्रतिबिम्बितत्वेन भगवतो दोषित्वात् स्रष्टृत्वानुपपत्तिरिति पुनराक्षेपे, ध्यातृचित्तप्रतिबिम्बितान्यत्वे भगवतः अष्टादशेनोक्ते, भगवद्दत्तस्वातन्त्र्येण केनचिज्जीवेन स्वाप्नसृष्ट्युपपत्तेः उक्तमनुपपन्नमिति उपान्ते शङ्किते, न कौतुकेनापि स्वातन्त्र्यं कस्मैचिदप्यन्यस्मै प्रेक्षावानीशो दद्यादिति निरूपिते, कर्मादेः फलं प्रति स्वातन्त्र्यदर्शनेन सृष्टावपि तदेव कारणमस्त्विति पुनराशङ्कने, कर्मादेः स्वातन्त्र्यनिषेधेनेशस्यैव स्वाप्नकर्तृत्वमिति अन्ते प्रतिपादनेन ऐकार्थ्यात् पादैक्यं द्रष्टव्यम् ॥

पेटिकाविवेचनम्

तत्र सप्ताधिकरणी जन्मादिशब्दार्थविवरणपरत्वादेका विवरणपेटिका। एतदुक्तस्य प्रागुक्तस्य च माहात्म्यस्य समर्थनात्मकत्वादवशिष्टान्यधिकरणानि अपरा समर्थनपेटिका। अत एवात्र टीकापि क्वचिद्विविच्योच्यते, क्वचित् समर्थ्यते इति ॥

आद्याधिकरणस्य पूर्वपादानन्तर्यम्

अनन्तरसङ्गतिस्तु न पादाद्यधिकरणस्य नियमेन गवेषणीया। यद्वा दर्शपूर्णमासतिथ्योरिवावस्थानां पौर्वापर्यनियमाभावेनोत्पत्त्यनन्तरं स्वप्नावस्था विचार्यत इति अस्य पूर्वपादानन्तर्यम् ॥

## शेषतात्पर्यचन्द्रिका

### विषयसंशयौ

विचार्यत्वेनोपस्थितस्वप्नावस्थान्तर्गतगजादिः तत्प्रत्ययश्च विषयः। ईश्वरेण न सृष्टः, उत सृष्टः इति सन्देहः, तदर्थं मिथ्या सत्यो वा, तदर्थं कर्त्रुपादाननिमित्तानि वक्तुमशक्यानि, उत शक्यानि, तदर्थं तत्र प्रमाणं नास्ति उतास्तीति चिन्तयितव्यम् ॥

### पूर्वपक्षः

प्रातीतिकत्वात् स्वप्नस्यासत्त्वात् कर्त्राद्ययोगतः।
द्रष्टृदेशाद्ययोगाच्च न सृष्ट्याद्युपपद्यते ॥

यच्च शुक्तिरजतादि प्रतीतिकाल एव सत्, न तस्य असतः सृष्टिरङ्गीकृता। न तावज्जीवः कर्ता। तद्व्यापारमन्तरेणापि प्रतीतेः। तदुपादानानभिज्ञत्वाच्च। नापीश्वरः अर्थक्रियाशून्यं स्रष्टुमुत्सहते। उपादानं चास्य दुर्लभम्। प्रकृतेः प्राकृतस्य वा पुरस्तात्पश्चाच्चोपलम्भापत्तेः। नापि तस्य जीवो द्रष्टा उपरतकरणत्वात्। मनसश्च रूपादिमत्यसामर्थ्यात्। नापि अन्तर्बहिर्वा देशस्सम्भवति। स्थूलानां पार्श्वस्थानुपलब्धानां च गजादीनां तदयोगात। वसन्तसुप्तदृष्टस्य हैमन्तादेः कालसम्पत्त्ययोगाच्च। एवम्भूतस्यापि स्वप्नस्य सृष्टौ प्रमाणाभावाच्चेति पूर्वः पक्षः ॥

### सिद्धान्तः

सिद्धान्तस्तु—

अथेत्यादिप्रमाणस्य वासनायाश्च सम्भवात्।
ईशस्याशक्यशक्तित्वात् सृष्ट्यादिः स्वप्नतद्धियोः ॥

शेषतात्पर्यचन्द्रिका

**'अथ रथान् रथयोगान् पथः सृजते' 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' 'एतस्मात् पुत्रो[1] जायते'** इत्यादिश्रुतिः स्वप्नानां सृष्टिं तस्याश्चेश्वरं कर्तारं श्रावयति। वासना चोपादानमङ्गीक्रियते। तेन देशकालसम्पत्त्याद्यभावः समाहितः। न च प्रातीतिकत्वात् गजादेः शुक्तिरजतादिवन्न सत्त्वं, अत एव न सृष्टिरित्युक्तमिति वाच्यम्। शाकुनादिवत् शुभाशुभसूचकत्वेन सत्प्रतिपक्षितत्वात्। सूचकत्वस्यैव प्रयोजकत्वेन प्रातीतिकत्वस्याप्रयोजकत्वाच्च। शेषमपव्याख्यान[2]निराकरणे भविष्यति॥

'सन्ध्ये सृष्टिराह हि' सूत्रव्याख्या

सूत्राक्षरार्थस्तु—सन्मात्रस्य भगवदधीनत्वनियमात् सन्ध्यमपि सत्त्वाद्भगवदधीनम्। सत्त्वे पुरस्तात् पश्चाच्च दर्शनं स्यादिति चेन्न। सन्ध्यकाल एव सृष्टिनिरोधाङ्गीकारात् न सत्त्वे बाधकमस्ति। हि यस्मात् **अथ रथान् रथयोगान्** इति श्रुतिः सन्ध्ये सृष्टिमाह, अत उक्तं युक्तम्॥

यद्यप्यत्र सृष्टिपदमात्रं श्रूयते। तथापि श्रुतौ तावत् **न तत्र रथा न रथयोगा न पन्थानो भवन्ति** इति पूर्ववाक्यं न पूर्वकालमात्रे रथाद्यभावपरम्। किन्तूत्तरकालेऽपि। अन्यथा पश्चाद्दर्शनप्रसङ्गस्यानिवारणात्। ततश्च श्रुत्यनुसाराय दोषपरिहाराय च निरोधोपलक्षकम्। यद्यपि श्रुत्यनुसाराय प्रथमोद्दिष्टनिरोधेनैव सृष्ट्युपलक्षणं न्याय्यम्। तथाप्युपादानाद्यभावशङ्कोदयाय सृष्टेः कीर्तनमिति ज्ञातव्यम्॥

---

[1] एतस्माद्ध्येव पुत्रो जायते।

[2] अपव्याख्या

## शेषतात्पर्यचन्द्रिका

'निर्मातारं चैके पुत्रादयश्च' सूत्रव्याख्या

**कामं कामं पुरुषो निर्ममाणः** इत्येके शाखिनः सन्ध्यस्य निर्मातारं परमपुरुषमामनन्ति । **एतस्मात्पुत्रो जायते** इत्येके शाखिनः पुत्रादयः सन्ध्ये सृष्टा इत्यामनन्ति । परस्परसमुच्चये चौ ॥

यद्यप्यत्र **आह हि** इति प्रथमसूत्रांशेनैव निर्माणश्रुतिपुत्रश्रुत्योरपि ग्रहणसम्भवात् द्वितीयं व्यर्थम् । तथापि न व्यर्थम् । नात्र प्रमाणमात्रोपन्यासे तात्पर्यम् । किन्तु तत्र प्राप्तशङ्कानुसारेण तन्निरासेऽपि । विश्वतोमुखत्वात्सूत्राणाम् । तथा हि सन्ध्ये सृष्टौ प्रमाणेनावगतायामेव निर्मात्रादिशङ्केति प्रमाणाशङ्का पूर्वं वृत्ता । तत्परिहाराय प्रवृत्तम् **आह हि** इत्येतत् सामान्यप्रमाणविषयम् । अवगतापि सृष्टिर्नोपपद्यते निर्मात्रभावादिति तावन्मात्रस्य शङ्कनात् द्वितीयस्य प्रथमांशो निर्मातृश्रुतिमात्रपरः । अन्यथा अनाकाङ्क्षाभिधानेनाधिक्यं स्यात् । निर्मातृसद्भावः कल्पितत्वस्यैव साधकः । पुरुषस्याज्ञानादिद्वारा शुक्तिरजतनिर्मातृत्ववदुपपत्तेरित्यतः **एतस्मात्पुत्रो जायते**[1] इति विशेषश्रुति र्द्वितीयांशेनोपात्ता । 'देवदत्ताद्यज्ञदत्तो जायते' इतिवदुपादानभागविश्लेषावधित्वस्य पञ्चम्यर्थत्वेनात्रापि कल्पकत्वशङ्कानवकाशः । अत एव योगविभागोऽपि युक्तः । निर्मातृपदस्य कल्पके अप्रयोगाच्छङ्का तुच्छेति न द्वितीये योगविभाग आश्रितः । अन्यथा **अदृश्यत्वादिगुणको धर्मोक्तेः** इत्यादौ धर्मोक्त्यैवाशेषग्रहणसम्भवे सूत्रान्तरवैयर्थ्यापातात् ॥

---

[1] एतस्माद्ध्येव पुत्रः

## शेषतात्पर्यचन्द्रिका

'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इतिसूत्रव्याख्या

तृतीयार्थस्तु टीकायामेव स्पष्टः। यद्यपि तृतीये सकृदुच्चरितस्य मायामात्रशब्दस्य वासना वा भगवदिच्छा वा अर्थ इत्यन्यतरशङ्कैव निवृत्ता। तथापि आवृत्तस्य तस्योभयार्थत्वसम्भवेन भगवति शङ्काद्वयनिवृत्तिरिति ध्येयम् ॥

'सूचकश्च हि श्रुतेराचक्षते च तद्विदः' सूत्रव्याख्या

चतुर्थेऽप्युक्तरीत्या स्त्र्यादिदर्शनस्य सूचकत्वं, न स्त्र्यादेरिति शङ्कानिरसनाय शङ्कायास्तुच्छत्वाच्च **आचक्षते** इति पृथगुक्तिर्योगविभागाभावश्च बोध्यः ॥

सूत्रक्रमः

तेषाञ्च—साधकोक्त्यनन्तरमेव बाधकोद्धारावसर इत्युक्तरीत्या आकाङ्क्षाक्रमेण त्रिसूत्र्या साधकमुच्यते। **अत्रोक्तदोषपरिहाराय सूत्रम्** इति आद्यसूत्रावतारटीका तु भगवदधीनत्वे असत्त्वमुखेन प्राप्तबाधकपरिहाराय प्रवृत्तपूर्वार्धाभिप्राया, न तु प्रमाणपरोत्तरार्धाभिप्राया। अत **एव ननूक्तमत्र प्रमाणं नास्ति** इत्यादिनोत्तरांशावतारणम्। चतुर्थे पराभिहितस्य बाधकस्य प्रातीतिकत्वाद्यनुमानस्य बाधसत्प्रतिपक्षोपाध्यादिसूचनेन बाधकोद्धार इति—क्रमोऽपि ज्ञातव्यः ॥

महिमोक्तेः विशिष्टभक्तिहेतुत्वम्

टीकाक्षरार्थस्तु—**स्यादेतदिति**। किं महिमोक्तिः माहात्म्यज्ञानरूपं विशेषणं जनयति। स्नेहरूपं विशेष्यं वा। उत विशिष्टम्। नाद्यः।

## शेषतात्पर्यचन्द्रिका

प्रथमाध्याये माहात्म्यनिरूपणेन तत्सम्भवेन इह तद्वैयर्थ्यात् । न द्वितीयः । अन्वयतो व्यतिरेकतश्च व्यभिचारात् । न तृतीयः । विशेषणमात्रे उपक्षीणत्वेन विशिष्टेऽपि तस्य हेतुत्वायोगादिति भावः ॥

**मैवमिति** । न तावदाद्ये दोषः । निरतिशयमाहात्म्यज्ञानस्येह साध्यत्वात् । नापि द्वितीये दोषः । प्रतिबद्धसाधने वैकल्पिकसाधने च व्यभिचारस्यादोषत्वात् । महात्म्योक्त्यनुसारेण माहात्म्यज्ञानविशिष्टस्नेहे उत्कर्षदर्शनेन विशिष्टं प्रत्यपि माहात्म्यनिरूपणस्य हेतुत्वग्रहात् न तृतीयेऽपि दोष इति भावः ॥

सर्वं भगवदधीनमिति टीकागतसर्वशब्दस्वारस्यम्

नन्वत्र स्वाप्नो गङ्गादिः विषयः, उत तत्प्रतीतिः ? नाद्यः, **न स्वप्नोऽपि तं विना प्रतीयते** इति भाष्येण, **स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय** इति ब्रह्माण्डवचनेन च विरोधात् । न द्वितीयः, **पश्चाद्दृष्टेः स्वप्नविषयस्यासत्त्वम्** इति विवरणवाक्यविरोधात् इत्याशङ्क्य, विषयः प्रतीतिश्चेत्युभयं विषयः, उभयोरपि सत्त्वाविशेषात्, भगवदधीनत्वसाधनावश्यम्भावात् । अत एव सूत्रे सन्ध्यपदमर्थप्रतीत्यात्मकस्वप्नपरम्, सप्तमी च विषयेऽपि व्याख्येया इति सूचयन्नधिकरणसङ्गतिमाह **सर्वं भगवदधीनमिति** ॥

अत्र पूर्वपक्षोपक्रमोपसंहारयोः स्वप्नविषयमात्रस्य भगवदधीनत्वाभावटीका तु विषयस्य प्राधान्यात् तस्मिन्विचारिते तु तत्प्रतीतिरपि विचारितप्रायेत्यभिप्रेत्य, न तु प्रतीतेरिहाविषयत्वादिति ध्येयम् ॥

## शेषतात्पर्यचन्द्रिका

टीकायाः पूर्वपक्षन्यायविवरणयोजकत्वम्

अत्र,

पश्चाद्दृष्ट्यविज्ञानकालदुःखपृथग्भवाः ।
स्थानभेदो विरुद्धत्वं न्यायसाम्यं स्वतोभवः[1] ॥
गुणसाम्यमयोगश्च तर्कबाधो विलोमता ।
नानाभावः प्रलोभश्च युक्तयः पूर्वपक्षगाः ॥

इति भक्तिपादीयपूर्वपक्षन्यायसङ्ग्राहके श्लोके प्रथमोक्तपश्चाद्दृष्टिन्यायं तत्साध्यादिप्रदर्शनपूर्वकं विवृण्वत् **पश्चाद्दृष्टेः स्वप्नविषयस्यासत्त्वं न वाच्यम्** इति विवरणवाक्यं पादार्थानुगुण्येन परमसाध्यमध्याहृत्य योज्यम्, तत्र च असत्त्वे हेतूपन्यासेऽप्रयोजकत्वादिशङ्कायां तर्के वक्तव्ये प्रयत्नगौरवनिरासाय हेतुद्वयसमर्पणाय च **पश्चाद्दृष्टे**रितिपदं तर्कपरतया योजनीयमित्यभिप्रेत्य पश्चात्पदं पूर्वकालोपलक्षणमिति व्याचष्टे **न स्वप्नविषयो[2] भगवदधीन इति पूर्वः पक्ष इति** । ततश्चात्रैतौ प्रयोगावभिप्रेतौ—विमतमसत् सत्त्वावान्तरनित्यत्वानित्यत्वरूपयावद्विशेषरहितत्वात्, प्रातीतिकत्वाच्च शुक्तिरजतादिवत् । अत्राद्यो हेतुर्नासिद्धः । तथा सति पूर्वोत्तरकालं दर्शनप्रसङ्गात् । न च दृश्यते । तस्मान्न नित्यो नाप्यनित्यः । न च अतीन्द्रियत्वेनोपपत्तिः । तर्हि स्वप्नकाले दर्शनं न स्यात् । नापि द्वितीयो हेतुरसिद्धः । पूर्वोत्तरकालं दर्शनप्रसङ्गादेव । न च दृश्यते । तस्मात्प्रातीतिक एवेति । यद्वा पश्चाद्दृष्टेरित्येतदावर्तते । ततश्च विमतमसत्

[1] सतोभवः ।  [2] न स्वप्नो

## शेषतात्पर्यचन्द्रिका

पूर्वोत्तरकालमनुपलभ्यमानत्वात् । विपक्षे हेतूच्छित्तिप्रसङ्ग इत्यनेनोच्यत इति मन्वानो व्याचष्टे **न स्वप्नेति**[1] । ननु पूर्वोत्तरकालदर्शनाभावो न प्रातीतिकतामाक्षिपति, तत्काले एव सृष्टिनिरोधाभ्यामेवोपपत्तेरित्याशङ्कापरिहारोभयपरतयापि विवरणं व्याचष्टे **न च वक्तव्यमिति** । अत्र अदृष्टेरित्यंशं प्रकारान्तरेण व्याख्याति **कर्त्रुपादानेति** ।

प्रथमद्वितीयतृतीयसूत्रनिरसनीयपूर्वपक्षप्रदर्शकतया व्याख्याय सौत्रसन्ध्यपदविवरणात्मक **न स्वप्नोऽपि तं विना प्रतीयते** इति सिद्धान्तभाष्यनिरसनीयपूर्वपक्षपरतयापि व्याचिख्यासुः देशसम्पत्त्यभावपरतया तावद्व्याचष्टे **किञ्च स्वप्नविषयमित्यादिना** । कालसम्पत्त्यभावपरतयापि व्याख्याति **किञ्च हैमन्त**[2] **इति** । करणसम्पत्त्यभावपरतया च व्याकरोति **न च प्रतीतिकरणश्चास्तीति**[3] । द्रष्टृसम्पत्त्यभावपरतयापि व्याख्याति **यदि चेति** । तत्कालसृष्टिनिरोधपक्षे न केवलं प्रमाणाद्यभावः, विपक्षे बाधकञ्चास्तीत्येतत्परतयापि सिंहावलोकितन्यायेन योजयति **तत्कालसृष्टत्वेति**[4] । प्रत्ययस्यासत्त्वसाधनपक्षेऽप्ययं तर्क इति सूचयितुं सिंहावलोकितन्यायानुसरणम् । अत एव मृत्पिण्डकपालादीनीति आदिशब्दप्रयोगः ॥

टीकानुसारेण न्यायविवरणयोजनाक्रमः

ततश्च स्वप्नविषयस्य पश्चाददृष्टेः पूर्वोत्तरकालमनुपलभ्यमानत्वात् असत्त्वम् । नन्वेतन्नासत्त्वसाधकम्, तत्कालसृष्टिनिरोधेऽप्युपपत्तेरित्यस्या-

---

[1] न स्वप्न इति ।  [2] हेमन्त  [3] करणं वास्तीति ।

[4] तत्काल एव सृष्टीति ।

## शेषतात्पर्यचन्द्रिका

प्येतदेवोत्तरम् । न वाच्यमित्यावर्तते । स्वप्नविषयस्य पश्चात्पुरस्ताच्चासत्त्वम्, तत्काल एव सृष्टिनिरोधाविति यावत्, न वक्तव्यम्, अदृष्टेः, दृष्टव्यभावात् । उपलक्षणम्—प्रमाणाभावात् । तथा अदृष्टेः, कर्त्रुपादाननिमित्तानामदर्शनात् । विपक्षेऽप्येतदेवोत्तरम्, तत्कालसृष्टिनिरोधपक्षे प्रागुत्तरकालश्च मृत्पिण्डकपालादिदर्शनप्रसङ्गादिति । किञ्च स्वप्नविषयस्य, बहुव्रीहिः, स्वाप्नगजादिप्रत्ययस्य अन्तरनुत्पत्त्या बहिरेव वक्तव्यत्वे तदर्थं बहिर्गतस्य तावता प्रबोधे पश्चादेव पुनः शरीरप्रवेशः स्यात् । न चैवमिष्टम् । पश्चाददृष्टेः । प्रवेशस्येति शेषः । अतः प्रत्ययस्यासत्त्वमिति । अपि च स्वप्नविषयस्य वसन्तादेः पश्चात्, बोधानन्तरमदृष्टेः असत्त्वम् । अतश्शून्यविषयत्वात्स्वप्नविषयस्य प्रत्ययस्यासत्त्वम् । किञ्च स्वप्नविषयस्य प्रत्ययस्य करणभूतानामिन्द्रियवृत्तीनां पश्चात्, तैजसप्राप्त्यनन्तरम्, अदृष्टेः, उपरतत्वात्, पश्चात्, बाह्यार्थे, मनसः स्वातन्त्र्यस्यादृष्टेश्चासत्त्वं करणशून्यत्वात् । किञ्च स्वप्नविषयस्य गजादेर्न द्रष्टुर्भेदः । पश्चात्पार्श्वस्थैरदृष्टेः । अन्यथा पार्श्वस्थैरपि दृश्येत । कुतः पश्चात् बाह्यार्थत्वात् । नाप्यभेदः । पश्चाददृष्टेः, द्रष्टुः परमार्थतः करितुरगादिभावादृष्टेः । ततश्च न द्रष्टृसम्पत्तिः । अतः स्वप्नविषयप्रत्ययस्यासत्त्वमिति । अपि च स्वाप्नप्रत्ययस्योपादानादीनां पश्चात्, प्रागुत्तरकालश्चादृष्टेरसत्त्वमिति विवरणयोजना द्रष्टव्या ॥

टीकायाः सिद्धान्तन्यायविवरणभाष्ययोजकत्वम्

अत्र,

**अशक्यकर्तृताशक्तिः स्वतोऽबोधस्तदेव[1] च ।**
**अमानक्लृप्तिः[2] सन्मानव्यवस्थात्यल्पताभवाः ॥**

[1] तथैव [2] क्लृप्तिसन्मान

## शेषतात्पर्यचन्द्रिका

**विशेषदृष्टिवाक्ये[1] च पुंशक्तिः सुनिदर्शनम्[2] ।**
**अलौकिकत्वमाधिक्यं स्वातन्त्र्यं निर्णयप्रमाः ॥**

इति सैद्धान्तिकन्यायसङ्ग्रहे **अशक्यकर्तृताशक्तिः** इति प्राथमिकन्यायं सम्बन्धिपदाध्याहारेण पूर्वोक्ततर्कस्याभासतासूचनेन तत्र प्राप्तबाधकस्य भ्रान्तित्ववर्णनेन च विवृण्वत्, **अशक्यकरण[3]शक्तिमत्त्वादीश्वरस्य संस्कारेण सृष्ट्वा पुनः संस्कारमात्रतामापाद्य तस्यापि तिरोधानोपपत्तेः । जाग्रत्त्वप्रतीतिमात्रस्य भ्रान्तित्वात्** इति वाक्यम् । **अशक्यकरणशक्तिमत्त्वादि**त्यत्र हेत्वनुक्तेः निर्मातृसूत्रभाष्योदाहृतश्रुतिरेव हेतुत्वेन योज्यत इति भावेन **तिरोधानोपपत्ते**रि[4]त्यंशं व्याचष्टे **अत एव तस्येति** । अवशिष्टमन्तिमं वाक्यमेकार्थत्वाद्भाष्येण सह व्याचष्टे **नन्वविद्यमानानिति ॥**

**॥ इति सन्ध्याधिकरणम् ॥ १ ॥**

—:o:—

---

1 विशिष्टदृष्टि    2 पुंशक्तिस्तु निदर्शनम् ।
3 कारण    4 रित्यन्तं

अथ पराभिध्यानाधिकरणम् ॥ २ ॥

## ॥ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ॥५॥

बन्धमोक्षप्रदत्वात् स एव स्वप्नतिरस्कर्ता ।

'स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च ।

तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ ॥'

इति कौर्मे ॥ ५ ॥

---

### तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं तस्य स्वप्नतिरोधायकत्वमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । यदि न तस्यायं महिमा निरूप्यते न तर्हि तत्र निरतिशया भक्तिर्जायत इति वर्णनीयः । प्रकृतः स्वप्नस्य तिरोभावो विषयः । भगवदधीनो न वेति सन्देहः । सर्वस्य तदधीनत्वोक्तिर्विशेषानुक्तिश्च सन्देहबीजम् ॥

पूर्वपक्षः

न भगवदधीनः स्वप्नतिरोभाव इति पूर्वः पक्षः । बाह्याज्ञानादेव स्वप्नः प्रतीयते । अतस्तद्विज्ञानादेव तत्तिरोभावोऽप्युपपद्यते । शक्तिर्ह्येषा ज्ञानस्य यत् समानविषयाज्ञानं नाशयतीति । अतः आलोकेन तमोवज्ज्ञानेनैवाज्ञानस्य निवृत्त्या तन्निमित्तस्वप्नप्रतीत्युपरमे किमीश्वरेणेति न तस्यातिमाहात्म्यमिति ॥

## तत्त्वप्रकाशिका

सिद्धान्तः

सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे **परेति**। परमेश्वरेच्छयैव स्वप्नतिरोधानं न विज्ञानेन। न चाज्ञाननिमित्तत्वात्स्वप्नप्रतीतेस्तत्तिरोधानं ज्ञानेन युक्तमिति वाच्यम्। अज्ञाननिमित्तो बन्धो ज्ञाननिमित्तश्च मोक्षः सुप्रसिद्धः। न च तथापि बन्धमोक्षौ ज्ञानाद्यधीनौ। ज्ञानाज्ञानयोरचेतनत्वेनास्वातन्त्र्यात्। अतो **बन्धको भवपाशेन भवपाशाच्च मोचकः** इत्यादेः भगवदधीनावेव। तथा ज्ञानाज्ञाननिमित्ततया प्रतीतयोरपि स्वप्नाविर्भावतिरोधानयोः परमात्माधीनत्वमेव। ज्ञानाज्ञानयोरस्वातन्त्र्यात्। ते तु निमित्तमात्रमिति भावः। नेदं दृष्टान्तमात्रमिति भावेनात्र स्मृतिञ्चोदाहरति **स्वप्नादीति**। अतः स्वप्नतिरोधानस्यापि भगवदधीनत्वसिद्धेस्तस्य महामहिमत्वाद्युक्ता तत्र भक्तिरिति सिद्धम्॥ ५॥

—·-:o:—

## शेषतात्पर्यचन्द्रिका

विवरणपेटिका

### ॥ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ॥५॥

सङ्गतिः

विनैव बाह्यसाधनं स्वप्नानन्तविचित्रतत्तत्पुरुषैकानुभाव्यपदार्थस्रष्टृत्वमहिमानमुपवर्ण्य, अधुना विनैव बाह्यं साधनं स्वेच्छयैव तत्तिरोधायकत्वमहिमानमुपवर्णयतीति सङ्गतिः ॥

स्वप्नतिरोधायकत्ववर्णनस्य असङ्गतत्वशङ्का

अत्र यद्यपि स्वाप्नपदार्थपालकत्वं वर्णयितुं युक्तम् । सृष्ट्यनन्तरं पालनस्यैवोपस्थितत्वात् । जन्मादिसूत्रस्थादिशब्दार्थविवरणस्य क्रमेणोपपत्तौ तदुल्लङ्घनायोगाच्च । स्फुटत्वाद्विवरणं नापेक्षितमिति चेन्न । प्रकृतैतावत्त्वम् इत्येकादशाधिकरणे तद्विवरणात् ॥

परिहारः

तथापि न केवलं भक्तितारतम्येन मोक्षानन्दतारतम्यमात्रम् । किन्तु सांसारिकपालनादिसकलाभिलषितसिद्धितारतम्यमपीति समर्थनार्थं प्रवृत्तस्य प्रकृतैतावत्त्वनयस्यात्र सङ्गत्ययोगेन, स्वप्नस्य तत्काल एव विद्युदादिवदुत्पन्नत्वात् विनष्टत्वाच्च न पूर्वोत्तरकालं दर्शनापत्तिरिति सम्मुग्धोक्तौ, सृष्टौ कर्त्राद्यभावशङ्कानिवारणपूर्वकं स्थिरीकृतायां, पूर्वोक्तो विनाशस्तत्काल एव नोपपद्यते न सुतरां भगवदधीन इति शङ्कासमाधानेन पूर्वसूत्रोक्तसंहारस्यैव विचार्यत्वमिति प्रबलावान्तरसङ्गतिलाभेन च क्रमोल्लङ्घनमित्यदोषः ॥

## शेषतात्पर्यचन्द्रिका

सङ्गत्यन्तराणि

अत एवात्र पूर्वोक्तयोः परोक्तबाधकपरिहारहेत्वोर्मध्ये प्रथमहेतोः पूर्वमेव स्थिरीकृतत्वात् द्वितीयो हेतुः स्थिरीकृत इति वा, बाह्यसाधनमनपेक्ष्य चेदीश्वरः स्वप्नं सृजति, तर्हि बाह्यसाधनमनपेक्ष्यैव विनाशयेत्, न चैवम्, अत उक्तमयुक्तमित्युत्थानाद्वा, स्वप्नस्य सत्यत्वं नोपपद्यते ज्ञानेन निवृत्त्युपलम्भात् शुक्तिरजतादेरिवेत्युत्थानाद्वा अनन्तरसङ्गतिः ॥

संशयः स्वप्नस्य ज्ञाननिवर्त्यत्वरूपपूर्वपक्षयुक्तिश्च

किमेतत् स्वप्नतिरोधानं भगवत्सकाशान्न भवति, उत भवतीति सन्देहे, नेति पूर्वः पक्षः—

**स्वप्नस्तत्प्रत्ययो वापि नेशेन विनिवर्तते ।**
**ज्ञानेनैव निवृत्तौ स्यात्कल्पनालाघवं यतः ॥**

न चेश्वरोऽपि कारणमस्त्विति वाच्यम् । तस्यैवासिद्धेः । सिद्धौ वा ज्ञानेनैव तत्तिरोभावसम्भवे तस्य कारणत्वकल्पने गौरवात् । न च ज्ञानस्यापि स्वप्नतिरोधायकत्वं कल्प्यमिति कल्पनागौरवं तुल्यम् । न तावद्बाह्यपदार्थज्ञानं कल्प्यम् । उभयसम्मतत्वात् । नापि तस्य स्वप्नतिरोधायकत्वशक्तिः । यत आलोकस्य तमोनिवर्तन इव ज्ञानस्याज्ञाननिवर्तने शक्तिः क्लृप्तैव । शुक्तिज्ञानादौ दर्शनात् ॥

किञ्च स्वप्नप्रतीतिस्तावद्बाह्याविज्ञानसाध्या । अन्यथा स्वतन्त्रान्वयव्यतिरेकदर्शनं न स्यात् । तथा च तद्विरुद्धस्य स्वप्नतिरोधानलक्षणकार्यस्य

## शेषतात्पर्यचन्द्रिका

अज्ञानविरोधिज्ञानकार्यत्वमावश्यकम् । विमतं स्वप्नतिरोधानं ज्ञानकार्यं ज्ञानविरुद्धाज्ञानकार्यस्वप्नप्रतीतिविरुद्धकार्यत्वात्, यद्यद्विरोधिकार्यविरोधिकार्यं तत् तत्साध्यं, यथा ज्ञानविरोध्यज्ञानकार्यबन्धविरोधिकार्यं मोक्षः ज्ञानकार्यमिति प्रयोगसम्भवात् ॥

स्वप्नतिरोधानस्य जीवकर्तृकत्वरूपा पूर्वपक्षयुक्तिः

यद्वा जीवस्यैव तत्तत्कार्येषु स्वतन्त्रान्वयव्यतिरेकदर्शनात्कारणत्वं सिद्धम् । स्वप्नतिरोधानं च जीवेऽनुभूयमानं तत्कृतमेवेति ज्ञायते । न चास्मिन् पक्षे **ज्ञानशक्त्यैव स्वप्नतिरोधानमिति** पूर्वपक्षन्यायविवरणविरोधः । एवकारेण जीवादेरव्यावर्तनात् । एवम्भूतभ्रान्तिनिरसायैव **नेशेने**त्युत्तरवाक्यं, तट्टीका च **किमीश्वरेणेति** । अत एव **बोधे जीवस्यास्वातन्त्र्यादिति** सिद्धान्तन्यायविवरणे जीवपक्षप्रतिक्षेपोऽपि । अत एव च स्फुटप्रतिभासत्वान्नायं पक्षः टीकायां साक्षादुक्तः । अत एव च जीवस्यास्वातन्त्र्यस्फुरणाय **अस्येत्य**सूत्रयत् ॥

स्वप्नासत्यत्वरूपपूर्वपक्षयुक्तिः

यद्वा न भगवदधीनं स्वप्नस्य तिरोधानं, असत्यत्वात् । न च पूर्वाधिकरणे स्वाप्नानां सृष्टिसमर्थनेन सत्यत्वं समर्थितमिति वाच्यम् । यदि सत्यत्वं स्यात्, घटादिकं मुद्गरप्रहारादिनेव बाह्यसाधनेन निवर्तनीयं स्यात् । न चैवम् । भेरीताडनादावसति च ज्ञानेन निवृत्त्युपलम्भात् । न हि बाह्य-

## शेषतात्पर्यचन्द्रिका

निवर्तकमनपेक्ष्य निवर्तमानं[1] सत्यं दृष्टम्। तथा सति शुक्तिरूप्यादेरपि सत्यत्वप्रसङ्गादिति तर्केणासत्त्वे स्थिरीकृते पूर्वोक्तसृष्टेरेवानुपपत्तेः। श्रुतिस्तु कल्पितत्वपरतया यथाकथञ्चिन्नेयेति ॥

उक्तपक्षत्रयस्य आकरः

अत्राद्यः **न चाविज्ञानमात्रेण स्वप्नप्रतीत्येत्या**दिन्यायविवरणाभिप्रेतः, टीकोक्तः। द्वितीयोऽप्युक्तरीत्या समूलत्वात्साक्षादनुक्तोऽपि टीकाभिप्रेत एव। तृतीयस्तु[2] **स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव तु**[3] इति कौर्मवचने पूर्वोक्तस्वप्नकर्तृत्वोत्कीर्तनेन[4] सूचितः ॥

सिद्धान्तः

सिद्धान्तस्तु—

**अज्ञानकार्यबन्धस्य निवृत्तिस्तु कृता यदा।**
**तदा स्वप्ननिवृत्तिश्च लाघवात्तत्कृता भवेत् ॥**

भगवतस्सकाशादेव तिरोधानं युक्तम्। न च कल्पनागौरवम्। ईश्वरस्य प्रामाणिकत्वात्। तस्य **बन्धको भवपाशेन भवपाशाच्च मोचकः** इति बन्धनिवर्तकशक्तिरपि क्लृप्तैव। तथा च मोक्षदातुरज्ञाननिवर्तकत्वस्य क्लृप्तत्वात्, बाह्याज्ञाननिवृत्तिरूपस्वप्नतिरोधानहेतुत्वमपि क्लृप्तमिति न कल्पनागौरवम् ॥

---

[1] निवर्त्यमानं [2] तृतीयस्तावत् [3] च [4] कर्तृत्वकीर्तनेन

## शेषतात्पर्यचन्द्रिका

ज्ञाननिवर्त्यत्वनिरासः

प्रत्युत ज्ञानस्यैव निवर्तकत्वे गौरवं स्यात्। तथाहि किं ज्ञानस्य भगवदधीनतया निमित्तत्वमभिप्रेयते, उत स्वातन्त्र्येण। नाद्यः। निरतिशयमाहात्म्यविरोधित्वाभावेनास्माकमप्रतिपक्षत्वात्। न द्वितीयः। क्वाप्यदर्शनात्। न च संसारनिदानाज्ञाननिवृत्तौ दृष्टमिति वाच्यम्। **भवपाशाच्च मोचकः** इति वचनेन तदभावात्। न च तत्र तथात्वेऽपि, प्रमाणाभावात् स्वप्नतिरोधाने स्वातन्त्र्यं भविष्यतीति वाच्यम्। अचेतनत्वात्। न ह्यचेतनं स्वतन्त्रं दृश्यते। अन्यथा अन्यत्रापि तस्यैव हेतुत्वापत्त्या **भवपाशाच्च मोचकः** इत्यादेरप्रामाण्यप्रसङ्गात्। तदेवं ज्ञानस्याज्ञाननिवृत्तौ शक्त्यादिकं स्वातन्त्र्यं च कल्पनीयमिति विपरीतं गौरवमिति नाद्यः पूर्वपक्षो युक्तः ॥

स्वप्नतिरोधानस्य जीवकर्तृकत्वनिरासः

अत एव द्वितीयोऽप्ययुक्तः। बाह्यसाधनजन्यानामेव निवृत्तौ बाह्यनिवर्तकापेक्षायामपि, आन्तरसाधनजन्यानां तदनपेक्षणात्। अन्यथा दुःखादीनामनिवृत्तिप्रसङ्गात्। अत एव पूर्वाधिकरणे बाह्यसाधनजन्यत्वव्यावृत्तये वासनाजन्यत्वं समर्थितम् ॥

स्वाप्नासत्यत्वनिरासः

तथा च वासनाजन्यत्वात् स्वाप्नाः स्वनिवृत्तौ बाह्यनिवर्तकमनपेक्षमाणा अपि सत्या एवेति न सृष्ट्युक्तययुक्तिः। सत्यस्य च निवर्तकापेक्षास्तीति स्वाप्ननिवर्तको भगवानेवेति सेत्स्यतीति तृतीयः पूर्वपक्षोऽप्ययुक्त इति ॥

## शेषतात्पर्यचन्द्रिका

द्वेधा सूत्राक्षरार्थः

सूत्रार्थस्तु—अस्येत्यावर्तते । भावे निष्ठा । तुः यथार्थः । अत एव तथेति लभ्यते । अस्य स्वाप्नतिरोधनं परमेश्वरेच्छयैव । विज्ञानाद्यधीनत्वेन प्रतीयमानमपि न तन्निमित्तकं प्रतिपत्तव्यम् । यथा अस्य जीवस्य, संसारिण इति यावत्, बन्धमोक्षावज्ञानाद्यधीनौ प्रतीयमानावपि **बन्धको भवपाशेने**त्यादिवचनेनास्वातन्त्र्यात् न तदधीनौ प्रतिपत्तव्यौ, किन्तु ततः **परमेश्वरेच्छयैव**, तथेत्यर्थः ॥

यद्वा हि यस्मात् अस्य संसारिणः बन्धमोक्षावितरस्यास्वातन्त्र्यात् भगवदधीनौ श्रुतौ, यस्माच्च स्वप्नप्रतीतिः तत्तिरोधनं च बन्धे मोक्षे चान्तर्भवति, ततः तस्मात्परमेश्वरेच्छयैव तिरोधानमिति ॥

टीकायां पूर्वपक्षन्यायविवरणव्याख्यानम्

टीकाक्षरार्थस्तु—**अविज्ञान**रूपन्यायमेतदधिकरणपूर्वपक्षबीजं, सिद्धान्त प्रतिकूलनाय मात्रशब्देनाध्याहृतेन योजनामभिप्रेत्य, साक्षात्सिद्धान्तविरोधाभावेन तथाभूतं प्रमेयमध्याहृत्य, विवृण्वत् **न चाविज्ञानमात्रेण स्वप्नप्रतीत्या ज्ञानशक्त्यैव स्वप्नतिरोधानं, नेशेनेति वाच्यम्** इति वाक्यं मात्रपदार्थव्यञ्जनपूर्वकं व्याचष्टे **बाह्याज्ञानादेवेति** । ज्ञानशक्त्यैवेत्येवकारविवरणं **नेशेनेति** । तेन सिद्धान्ते कल्पनागौरवमुक्तमिति सूचयति **किमीश्वरेणेति** ॥

टीकायां सिद्धान्तन्यायविवरणव्याख्यानम्

अत्र **स्वतोऽबोधः** इति सैद्धान्तिकन्यायं सम्बन्धिप्रदर्शनपूर्वकं नञ्न्यत्यासेन विवृण्वत् **बोधे जीवस्यास्वतन्त्र्यात्, ज्ञानाज्ञानयोस्तदन्यत्वे**

शेषतात्पर्यचन्द्रिका

**जडत्वात्, कैमुत्येनास्वातन्त्र्यात्, तत्स्वरूपत्वे तेनैव व्याख्यातत्वात्, उभयात्मकत्वे दोषद्वयापातात्, अनुभयात्मकत्वे स्वव्याहतेः, तावन्मात्रनिमित्तत्वे मानाभावात्, सर्वस्येशवशत्वे मानाच्च** इति वाक्यं सूचनया व्याचष्टे **ज्ञानाज्ञानयोरचेतनत्वेने**त्यादिना **ते तु निमित्तमात्रमिति भाव** इत्यन्तेन । तत्रान्तिमस्यार्थसूचनं **बन्धको भवपाशेने**त्यादि । उपान्तस्यार्थसूचनम् अन्वयव्यतिरेकदर्शनादेरन्यथासिद्धिवर्णनपरेण **ते तु निमित्तमात्रम्** इत्यनेनेति ध्येयम् ॥

स्वप्नतिरोधानादेः जीवकर्तृकत्वनिरासः

ततश्च स्वप्नतिरोधानादिकं नेशेनेति वदन् प्रष्टव्यः— कार्यत्वादेव किमस्य **कारणं** जीवः, उत ज्ञानादिः? आद्येऽपीश्वरनिरपेक्षः, उत तत्सापेक्षः?

द्वितीयस्तु अविरुद्धत्वादिष्ट एव । आद्यं दूषयति **बोधे जीवस्यास्वातन्त्र्यादिति** । हिताकरणादिदोषप्रसक्तिनये अस्वातन्त्र्यं सिद्धमिति भावः । **बोध** इत्यनेन स्वप्नप्रतीतिः तत्तिरोधायकं ज्ञानं च विवक्षितम् । तथा च ज्ञानाज्ञानयोर्जीवस्यास्वातन्त्र्यादिति फलितम् ॥

तस्य ज्ञानाज्ञानहेतुकत्वनिरासः

द्वितीयेऽपि, ज्ञानाज्ञानयोर्जीवाद्भेदः, उताभेदः, उत भेदाभेदः, उतानुभयत्वम्?

आद्यं दूषयति **ज्ञानाज्ञानयोरि**ति । ईश्वरस्तु स्वरूपेण त्वया नाङ्गीक्रियत एवेति जीवान्यत्वे जडत्वापत्तिः । संभावितवृत्तिमति जीवे

## शेषतात्पर्यचन्द्रिका

यदाऽस्वातन्त्र्यं तदा स्वतः प्रवृत्त्यशक्ते जडे किमु वक्तव्यमिति भावः ॥

द्वितीयं दूषयति **तत्स्वरूपत्व** इति । जीवस्य कारणत्वनिराकरणेनैव तदभिन्नयोर्ज्ञानाज्ञानयोरपि कारणत्वस्य निराकृतत्वादित्यर्थः ॥

तृतीयं दूषयति **उभयात्मकत्व** इति । जीवस्वरूपत्वेनास्वातन्त्र्यं तदन्यत्वेन सुतरामस्वातन्त्र्यं चेति दोषद्वयापातादित्यर्थः ॥

चतुर्थं दूषयति **अनुभयत्वस्येति** । घटपटयोर्भेदस्य, घटशौक्ल्ययोरभेदस्य, पटकार्ष्ण्ययो र्भेदाभेदस्य च दर्शनेन त्रितयशून्यस्य वस्तुनः काप्यदर्शनेन वस्तुत्वव्याहतेरित्यर्थः ॥

तत्रान्वयव्यतिरेकदर्शनविरोधपरिहारः

नन्वेवं जीवाज्ञानज्ञानानां स्वातन्त्र्यान्वयव्यतिरेकदर्शनं न स्यादिति चेत्, किमन्वयव्यतिरेकदर्शनं तन्निमित्तत्वमापादयति, उत तावन्मात्रनिमित्तत्वम्? आद्ये इष्टापत्तिः । द्वितीयं दूषयति **तावन्मात्रनिमित्तत्व** इति । स्यादिदमन्वयव्यतिरेकदर्शनं तावन्मात्रनिमित्तत्वसाधकम्, यदि तावन्मात्रनिमित्तत्वे प्रमाणं स्यात् । न चेदमस्ति । वस्तुसिद्धौ प्रमाणमपेक्षितम्, न प्रमाणान्तरमिति, अन्वयव्यतिरेकदर्शनमेव तत्र प्रमाणं भविष्यतीति चेत् तत्किमनन्यथासिद्धम्, उतान्यथासिद्धम्? नाद्यः । उक्तरीत्या तन्निमित्तत्वमात्रप्रत्यायकत्वेन

## शेषतात्पर्यचन्द्रिका

तावन्मात्रनिमित्तत्वांशेऽनन्यथासिद्धत्वाभावात् । तदिदमुक्तम् **तावन्मात्रनिमित्तत्व इति** । अन्वयव्यतिरेकदर्शनस्यानन्यथासिद्धत्वाभावादिति वाक्यशेषोऽत्र द्रष्टव्यः । द्वितीयस्यापीदमेवोत्तरं **तावन्मात्रनिमित्तत्व इति**। अन्यथासिद्धस्यान्वयव्यतिरेकदर्शनस्य तावन्मात्रनिमित्तत्वे मानत्वायोगेन मानाभावादिति परस्तात्पुरस्ताच्च वाक्योपक्षेपेण योज्यम् । नन्वन्यथासिद्धस्यापि तावन्मात्रनिमित्तत्वे मानत्वं किं न स्यादित्यस्यापि इदमेवोत्तरं **तावन्मात्रनिमित्तत्व इति** । प्रकृतापेक्षया तत्तत्कार्येष्वनन्यथासिद्धस्यैव कारणत्वमेष्टव्यम्, दण्डादौ तथा दर्शनात् । न त्वन्यथासिद्धस्यापि, दण्डरूपादौ तथाऽदर्शनात् । तथा च अन्यथासिद्धस्यपि कार्यं प्रति हेतुत्वे मानाभावादित्यर्थः ॥

ईशहेतुकत्वोपपत्तिः

नन्वेवं कारणमात्रस्य दूषणे कार्यत्वात्किमस्य कारणमिति चेत्, ईश एवेति वदामः । कल्पनागौरवमिति चेत्, किमीशस्य कल्प्यत्वात्कल्पनागौरवम्, उत सर्वस्येशवशत्वस्य? पक्षद्वयमपि नोपपद्यत इत्याह **सर्वस्येति**। '**सत्यं ज्ञानमनन्तं ब्रह्म**,' '**अस्तीत्येवोपलब्धव्यः**,' '**बन्धको भवपाशेन**,' '**द्रव्यं कर्म च**' इत्यादेः सर्वस्येशवशत्वे मानादित्यर्थः । एषां पञ्चम्यन्तानां **न वाच्यमित्यत्रान्वयः** । तावन्मात्रनिमित्तत्वे मानाभावसमुच्चितस्यैव विवक्षितार्थसाधकत्वात् चशब्दो युक्त इति विवरणवाक्यार्थो ज्ञातव्यः ॥

**इति पराभिध्यानाधिकरणम्** ॥ २

अथ देहयोगाधिकरणम् ॥ ३ ॥

॥ ॐ देहयोगाद्वासोऽपि ॐ ॥ ६ ॥

देहयोगेन वासो जाग्रदपि तत एव। 'स एव जागरितं स्थापयति स स्वप्ने स प्रसुस्तुराषाट्, स एको बहुधा भवति' इति कौण्ठरव्यश्रुतेः ॥ ६ ॥

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्रेश्वरप्राप्तिसाधनभक्त्यर्थं जाग्रत्प्रवर्तकत्वमहिम्नो निरूपणादस्ति शास्त्रादिसङ्गतिः। अस्य च महिम्नोऽवर्णने न निरतिशया भक्तिरुत्पद्यत इति वर्णनीयः। स्वप्ननिरूपणसङ्गता जाग्रदवस्थाऽत्र विषयः। किमीश्वराधीना न वेति सन्देहः। पूर्वोक्तमेव सन्देहबीजम् ॥

पूर्वपक्षः

न जागरणमीश्वराधीनमिति पूर्वः पक्षः। तस्य कालाधीनत्वदर्शनात्। न च कालस्यास्वातन्त्र्यादयुक्तिः। तदधीनत्वस्य प्रत्यक्षसिद्धत्वात्। न चास्य प्रत्यक्षस्य बाधकमस्ति, येन मन्यामहे भ्रान्तमिति। अतो जाग्रदवस्थायाः भगवदधीनत्वाभावेन न महामाहात्म्यं तस्येति॥

सिद्धान्तः

सिद्धान्तयत्सूत्रं पठीत्वा व्याचष्टे देहेति। देहाभिमानेन या स्थितिर्जीवस्य जाग्रदवस्था सापि पराभिध्यानादेव न कालतः। तस्याचेतन-

तत्त्वप्रकाशिका

त्वेनास्वातन्त्र्यादिति भावः। जाग्रदवस्थायाः कालाधीनत्वप्रतीतेः कथमीश्वराधीनत्वमित्यत आह **स एवेति**। कालस्यैव तत्प्रवर्तकत्वे श्रुतिविरोधात् निमित्तमात्रविषयं प्रत्यक्षमिति भावः। तुराषाट् वैरिवेगसहः। अतो हरेः जाग्रत्प्रवर्तकत्वेन महामहिमत्वाद्युक्ता तत्र भक्तिरिति सिद्धम् ॥ ६ ॥

—:o:—

## शेषतात्पर्यचन्द्रिका

### विवरणपेटिका

## ॥ ॐ देहयोगाद्वासोऽपि ॐ ॥ ६ ॥

पेटिकासङ्गतिः

जाग्रदवस्थायां बहुषु कार्येषु जीवाधीनत्वस्य प्रत्यक्षसिद्धत्वेन, स्वप्नावस्थायाञ्च सुस्वप्नाद्याशया प्रार्थनेऽप्यदर्शनेन जीवाधीनात्वायोगेन, जन्मादिसूत्रोक्तेदंशब्दस्य स्वप्नप्रपञ्चपरत्वमेव, न जाग्रत्प्रपञ्चपरत्वमित्याक्षिप्य समर्थनेन विव्रियत इति पेटिकासङ्गतिः ॥

अनन्तरसङ्गतिः

उक्तरीत्या जाग्रदवस्थायाः जीवाधीनत्वे, अवस्थात्वाविशेषान्न स्वाप्नस्य भगवदधीनत्वं युक्तमित्याक्षेपाद्वा, जाग्रदवस्थापि भगवदधीनैवेत्यतिदेशाद्वानन्तरसङ्गतिः ॥

सन्देहः पूर्वपक्षत्रयसङ्ग्रहश्च

अत्र जाग्रदवस्था न भगवदधीना उत भगवदधीनेति सन्देहे, पूर्वः पक्षः—

**प्रमेयाश्रितया युक्त्या प्रमाणाश्रितयान्यया ।**
**कालो जीवोऽथ वा हेतुर्जाग्रतस्स्यान्न चेश्वरः ॥**

जाग्रदवस्था कालाधीनेति प्रथमः पूर्वपक्षः

न च पूर्वाधिकरणे ज्ञानादेरस्वातन्त्र्योपपादनेन कारणताया निरस्तत्वेन न पुनरत्र पूर्वपक्षोत्थानमिति वाच्यम्; पूर्वमेव सुप्त इतो घटिका-

## शेषतात्पर्यचन्द्रिका

नन्तरमेवोत्थास्यतीति लोकानां प्रतीतेः, अचेतनत्वसाम्येऽप्ययस्कान्तादिशिलाविशेषस्य भ्रमणादीन् प्रतीव कालस्य ज्ञानकारणत्वेन जगन्मात्रं प्रति कॢप्तहेतुत्वकत्वेन च जागरणं प्रति हेतुत्वोपपत्तिरिति प्रमेयाश्रितया, ज्ञानाद्यन्वयव्यतिरेकदर्शनस्य **स्वप्नादिबुद्धिकर्ता** इत्यादिविशेषप्रमाणबाधेन भ्रान्तित्वेऽपि जाग्रदवस्थायाः कालाधीनत्वग्राहिप्रत्यक्षस्य बाधकाभावेन प्रबलत्वादिति प्रमाणाश्रितया च अभ्यधिकाशङ्कया पूर्वपक्षोत्थितिः ॥

रोगाधीनेति द्वितीयः पूर्वपक्षः

एवं श्वासहिंसादि[1]रोगविशेषस्यापि स्वतन्त्रान्वयदर्शनादिना जाग्रदवस्थाहेतुत्वं दर्शयितव्यम् ॥

जीवाधीनेति तृतीय. पूर्वपक्षः

यद्वा जीवाधीनमेवेदं जागरणम् । तस्य चेतनत्वेन पूर्वोक्तदोषाभावात् । चेतनस्याप्यस्वातन्त्र्योपपादनान्नैवं पूर्वपक्ष इति न वाच्यम् । महत्तरकार्ये तस्यास्वातन्त्र्येऽपि जागरणे तस्य स्वातन्त्र्यसम्भवादिति प्रमेयाश्रितया, 'अहमेव करोमि' 'देहादिकं ममैव' इत्यादिस्वातन्त्र्यप्रतीत्या निर्बाधया तदुपपत्तेरिति प्रमाणाश्रितया च अभ्यधिकाशङ्कया पूर्वपक्षसम्भवात् ॥

उक्तपक्षत्रयसमर्थनं तदाकरप्रदर्शनं च

न च कालादौ जीवे वा अन्वयव्यतिरेकदर्शनं भगवदपेक्षयैवेत्यन्यथासिद्धमिति वाच्यम् । न ह्यत्र प्रमाणमस्ति । न च देहयोगस्य

1. कासादि

## शेषतात्पर्यचन्द्रिका

भगवदधीनत्वात्तन्निमित्तकं जागरणमपि भगवदधीनमिति वाच्यम्। तत्रैव प्रमाणाभावादिति ॥

अत्राद्यः पूर्वपक्षः **कालापेक्षयैव जागरितमिति** न्यायविवरणे स्पष्टमुक्तः। द्वितीयस्तु **स एको बहुधा भवति** इति भाष्योदाहृतकौण्ठरव्यश्रुतौ कालरोगजीवेषु बहुषु स्थलेषु भगवतोऽवस्थानरूपबहुभावेन सूचितः। तृतीयस्तु लाघवाय 'जाग्रदपि' इति सूत्रयितव्येऽपि देहयोगस्येश्वराधीनत्वसूचनाय देहयोगनिमित्तकाभिमानाख्यदोषजन्यत्वेन कर्तृत्वस्वातन्त्र्यप्रतीतेः भ्रान्तित्वसूचनाय च **देहयोगाद्वासोऽपि** इति सूत्रणेन, **स एव जागरिते स्थापयिता**[1] इति जीवस्थापकत्ववचनस्य भाष्ये उदाहारणात्, **चेतनान्तरस्याप्यस्वातन्त्र्यात्** इति सैद्धान्तिकन्यायविवरणाच्च सूचितः। अत एव टीकायां **न जागरणमीश्वराधीनम्** इति त्रितयसाधारण्येन पूर्वपक्षोक्तिः। **तस्य कालाधीनत्वदर्शनात्** इति कालग्रहणन्तु न्यायमालायां कालस्योक्तत्वादिति ध्येयम् ॥

### सिद्धान्तः

सिद्धान्तस्तु—

**'स एवे'त्यादिवाक्येन प्रत्यक्षभ्रमता स्थिता।**
**तत ईशो न जीवो वा कालो वा हेतुरस्तु नः ॥**

न तावज्जागरणं कालाधीनम्। तस्याचेतनत्वात्। न चाचेतनत्वेऽप्ययस्कान्तादिवत्स्वातन्त्र्य संभवतीति वाच्यम्। तत्रापीश्वरसद्भावाङ्गी-

[1] स्थापयति

शेषतात्पर्यचन्द्रिका

कारेण दृष्टान्तासिद्धेः। न चाबाधितं प्रत्यक्षमस्ति। **स एव जागरिते स्थापयिता** इत्येवकारशिरस्केन कौण्ठरव्यवचनेन बाधात्। अत एव द्वितीयतृतीयावपि पक्षौ निरस्तौ। कारणत्वग्राहिप्रत्यक्षं च तत्तद्गतभगवद्पेक्षयान्यथासिद्धम्। **स एको बहुधा भवति** इति कालरोगजीवेष्वेकस्यैव बहुरूपेणावस्थानोक्तेः॥

कैमुत्यन्यायेन उक्तसिद्धान्तसमर्थनम्

किञ्च **सर्वाणि रूपाणि विचित्य** इति देहयोगस्य भगवदधीनत्वश्रुतेः तत्साध्यसर्वव्यापारस्यापि तदधीनत्वसिद्ध्या तदन्तर्गतस्य जागरणस्य सुतरां तदधीनत्वसिद्धिः। तदर्थं च **देहयोगेन वासो जाग्रदपि तत एव** इति भाष्यस्य न केवलं टीकोक्तरीत्या **पराभिध्यानादेव न कालतः** इत्यर्थः, किन्तु यतः, तत एवास्य देहयोगः **सर्वाणि रूपाणि विचित्य** इति श्रुतेः, ततोऽस्य जाग्रदवस्था तत एवेति किमु वक्तव्यम्, जाग्रदवस्थां प्रत्यपि कारणस्य देहयोगस्येशाधीनत्वादित्यप्यर्थोऽनुसन्धेयः। एतेन **सूत्रमपि** निगदव्याख्यातम्॥

अत्र अद्वैतिसम्मताधिकरणशरीरम्

अत्रान्ये तु षट्सूत्रीमेकमधिकरणं वदन्तः सूत्रद्वयेन पूर्वपक्षयित्वावशिष्टैश्चतुर्भिस्सिद्धान्तयन्त इत्थं व्याचक्षते—

अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चितः। इदानीं तु तस्यावस्थाप्रभेदप्रकारः प्रपञ्च्यते॥

### शेषतात्पर्यचन्द्रिका

इदमामनन्ति—**स यत्र प्रस्वपिति**[1] इत्युपक्रम्य **न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते** इत्यादि ॥

तत्र संशयः—किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयीति ॥

तत्र—यथा ज्ञानं[2] यमर्थमवबोधयति स तथैवेति युक्तम्; तथाभावस्य ज्ञानारोहात्, अतथात्वस्य प्रतीयमानतथाभावप्रमेयविरोधेन कल्पनानास्पदत्वात्। बाधकप्रत्ययादतथात्वमिति चेन्न, तस्य बाधकत्वासिद्धेः। समानगोचरे हि विरुद्धार्थोपसंहारिणी ज्ञाने विरुध्येते। बलवत्त्वाबलवत्त्वनिश्चयाच्च बाध्यबाधकभावं प्रतिपद्येते। तथा हि[3] क्षीरं दृष्टं कालान्तरे दधि भवति, एवं रजतं दृष्टं कालान्तरे शुक्तिर्भवेत्। तथा च न समानविषयत्वम्, कालभेदेन व्यवस्थोपपत्तेः। नानारूपं वा तद्वस्तु। तद्यस्य तीव्रातपक्रान्तिसहितं[4] चक्षुः तत्तस्य[5] रजतरूपतां गृह्णाति। यस्य तु केवलमालोकमात्रोपकृतं[6] तत्तस्यैव[7] शुक्तिरूपतां गृह्णाति। यथोत्पलं नीललोहितमपि सौरीभिर्भाभिरभिव्यक्तं[8] नीलतया गृह्यते। प्रदीपाभिव्यक्तं सत्[9] लोहिततया गृह्यते। एवमसत्यां निद्रायां सतोऽपि रथादीन्न गृह्णाति, निद्राणस्तु गृह्णाति इति सामग्रीभेदात् कालभेदाद्वा न विरोधः। नापि बलवदबलत्वनिर्णयः। द्वयोरपि स्वगोचरचारितया समानत्वेन विनिगमनाहेतोरभावात् ॥

---

1 स्वपिति 2 विज्ञानं 3 यथा हि 4 तीव्रातपादि
5 स तस्य 6 यस्य केवल 7 स तस्यैव 8 दिवा सौरीभि 9 नक्तं

शेषतात्पर्यचन्द्रिका

सम्यक् स्याद्विमतं ज्ञानं ज्ञानत्वात्संमतं यथा ।
न बाधः कालभेदादेर्विच्छिन्न[1]विषयत्वतः ॥

—इति पूर्वः पक्षः ॥

सिद्धान्तस्तु—न तावद्रजतस्यैवोत्तरकालीनपरिणामः शुक्तिज्ञानगोचर इति युक्तम् । रजतमिति भ्रमगृहीतस्य तत्कालेऽपि निर्मललोचनेन पुरुषान्तरेण शुक्तित्वेन वेदनात् । नापि तदेव शुक्तिरजतात्मकम् । तथा सति शुक्तित्वरजतत्वप्रयुक्तकार्यान्वयप्रसङ्गेन शुक्तिदाहे क्षारभावद्रव[2]भावयोरुपलम्भप्रसङ्गात् । यत्तु बाध्यबाधकभावानिश्चय इति तन्न । पूर्वज्ञानस्योत्तरेण बाधात् । रजतज्ञानात्प्राक् शुक्तिज्ञानस्य अप्राप्तस्य च तेन बाधानुपपत्तेः । ज्ञानयोः स्वगोचरचारित्वेऽपि शुक्तित्वरजतत्वयोर्वर्णितेन प्रकारेणैकधर्मिसमावेशे स्याद्विरोधः । एवं विमतसम्यक्त्वानुमानं बाधकप्रत्ययेन कालातीतम् । एतेन स्वाप्नप्रत्ययो व्याख्यातः । न्यायानुभवसिद्धं [3]तद्बाधनम् । न तत्र रथा इति श्रुतिः अथ रथानित्यनूद्यात्मप्रकाशत्वं प्रतिपादयति । [4]स्वप्नस्त्रीदर्शनादेरस्ति व्यावहारिकं सत्त्वम् । नोपलब्धं स्त्र्यादीति बाधानुपलम्भात् । युक्त्या तु मिथ्यार्थरूपत्वेन तात्त्विकत्वं बाध्यते । अतस्तस्य सत्य[5]शुभादिसूचनमर्थक्रिया न विरुध्यते ।

तथा च,

नान्यकालेऽन्यथाभावो भ्रामकालेऽपि बाधतः ।
द्व्यात्मतायां च शुक्तौ स्यात्कार्यजातं द्वयोचितम्—इति ॥

[1] विभिन्न [2] द्रवी [3] तच्छोधनम् [4] स्वप्नस्य [5] शुभादि

## शेषतात्पर्यचन्द्रिका

इह जीवावस्थाभेदचिन्तनस्य असङ्गतिः वैयर्थ्यं च

तत्र प्रतिपाद्यकथनं तावदयुक्तम् । साधनाध्यायत्वात् , वैराग्यनिरूपणस्य वृत्तत्वेन, **अम्बुवदग्रहणात्** इति सूत्राक्षरस्वारस्यानुरोधेन च तदनन्तरं भक्तेरेव प्रतिपाद्यत्वस्य युक्तत्वात् । जीवस्यावस्थाप्रभेदप्रकारचिन्तनस्याध्यायपादयोरसङ्गतत्वाद्वैयर्थ्याच्च । अत्र भामत्यां स्वयं ज्योतिष्ट्वसिद्ध्यर्थं तस्यावस्थाभेदः चिन्त्यत इत्युक्तम् । तन्न, स्वयं ज्योतिष्ट्वसिद्धेरपि विफलत्वात् ॥

तत्त्वम्पदार्थविवेकस्यापि इह अप्रस्तुतत्वं वैयर्थ्यं च

अत्रोक्तं कल्पतरौ—कर्मफलस्य यातायातरूपत्वेन पूर्वं[1] वैराग्यं निरूपितम् । इदानीं विरक्तस्य तत्त्वंपदार्थविवेकाय[2] द्वितीयः पाद आरभ्यते । तत्रापि,

**'न स्थानतोऽपी'त्यस्मात्प्राक् त्वम्पदार्थो विविक्तसितः ।**
**तत्पदार्थस्ततः पश्चाद्यावत्पादः समाप्यते**—इति ॥

तदप्ययुक्तम् । तत्त्वंपदार्थविवेकस्यापि स्वतः प्रयोजनत्वाभावात् । ऐक्यापरोक्ष्याय स आवश्यक इति चेत् , विवेको भेदस्तज्ज्ञानं वा तत्प्रतिबन्धकमेवेति कथं स आवश्यकः ॥

चिन्मात्रलक्षणया ह्यभेदो बोध्यः । लक्षणा च मुख्यार्थानुपपत्तौ सत्यामेव । सा च तत्त्वंपदयोर्मुख्यार्थविवेकाधीना । अतस्तस्योपयोगोऽ-

---

[1] यातायातरूपत्वेन वैराग्यं　　[2] विवेकार्थं

## शेषतात्पर्यचन्द्रिका

स्तीतीति चेत्—न, एतादृशतत्त्वंपदयोरेव सद्भावेनार्थपर्यन्तधावनवैयर्थ्यात् । इदानीमप्रस्तुतत्वाच्च ॥

नित्यानित्यवस्तुविवेको ह्यथशब्दगृहीतसाधनचतुष्टयान्तर्गतः । **स च** तत्त्वंपदार्थविवेक एव वा[1] तदधीन एव वेति कथमप्रस्तुतत्वमिति **चेन्न** । सार्वज्ञादिविशिष्टस्तत्पदार्थः, तद्विरुद्धस्वभावस्त्वंपदार्थ इति विवेकः तत्त्वंपदार्थविवेक इत्यभ्युपगमे विशिष्टयोरुभयोरप्यनित्यतया तद्विवेकस्य नित्यानित्यविवेकात्मकत्वाद्ययोगात् । तत्त्वंपदोपलक्षितचिन्मात्रविवेकस्य च नित्यमात्रविषयकत्वेनोक्तदोषानिस्तारात् । **'आब्रह्म स्तम्बपर्यन्तमसारं चाप्यनित्यकम् । विज्ञाय जातवैराग्यः' 'परीक्ष्य लोकान् कर्मचितान्'** इत्यादिषु क्त्वाप्रत्ययेन नित्यानित्यवस्तुविवेकस्य पूर्वकालीनत्वावगमेन प्रथमद्वितीययोः पादयोर्व्यत्ययापाताच्च ॥

साधननिरूपणानन्तरं किमस्य साध्यमिति जिज्ञासावत् साध्यनिरूपणानन्तरं किमस्य साधनमिति जिज्ञासाया अपि दर्शनेन नैष दोष इति चेत्, सत्यम् । क्वचिदेवैवंविधजिज्ञासा दृश्यते । न प्राचुर्येण । किं चोत्तरयोः पादयोः प्रथमत्वाद्यापत्तिः । निर्निमित्तमर्धजरतीयानुपपत्तेः । भक्तेर्निखिलनिगमावेदितसाधनभावाया अवश्यनिरूपणीयत्वेन तदनिरूपणप्रसङ्गाच्च । तत्त्वंपदार्थविवेकस्य प्रथमद्वितीयाभ्यां कृतत्वेन गतार्थत्वाच्च ॥

[1] एव तदधीन

## शेषतात्पर्यचन्द्रिका

इह तत्त्वम्पदार्थपरिशोधनस्याध्यायासङ्गतिः

एतेन 'तृतीये पादे करिष्यमाणसगुणनिर्गुणब्रह्मवाक्यविचारस्य तत्त्वंपदार्थोपसंहाराधीनत्वादुपोद्घातप्रक्रियया तावत् तत्त्वंपदार्थपरिशोधनं क्रियत' इत्यमलानन्दोक्तं निरस्तम्। 'अविरोधेन वेदान्तवेद्यं ब्रह्म निरूपितम्। तत्प्राप्तिसाधनं ज्ञानं सोपायमिह चिन्त्यत' इति तृतीयप्रतिपाद्यकथनेन तत्त्वम्पदार्थपरिशोधनस्य सगुणब्रह्मवाक्यविचारस्य च ऐक्यापरोक्षप्रतिकूलतया असाङ्गत्याद्यपरिहारात्॥

स्वप्नमिथ्यात्ववर्णनस्य अनुपयुक्तता

त्वम्पदार्थपरिशोधनफलस्य स्वयंज्योतिष्ट्वस्य स्वप्नमिथ्यात्वप्रतिपादनेन विनापि सिद्धिसम्भवेन तन्मिथ्यात्वप्रतिपादनस्य अकाण्डे ताण्डवायितत्वाच्च। जाग्रन्मिथ्यात्वप्रतिपादनेनापि स्वयंज्योतिष्ट्वसिद्धिसम्भवे विशिष्य स्वाप्नमिथ्यात्वप्रतिपादने हेत्वभावाच्च। अत्रोक्तं कल्पतरौ—जाग्रदवस्थायां हि आदित्यादिसञ्चाराद्दुर्विवेकं स्वयंज्योतिष्ट्वम्। तत्र यदि स्वप्नोऽपि सत्यःस्यात्तदा तदवस्थं दुर्विवेकत्वमिति तन्मिथ्यात्वमुच्यत इति—तन्न, स्वयंज्योतिष्ट्वं हि स्वप्रकाशत्वं नान्यत्, तच्च यदि मद्रीत्या स्वविषयप्रकाशत्वं तदा सत्यत्वेऽप्यन्यस्य[1] तत्सम्भवेन प्रकृतानुपयोगतादवस्थ्यात्। यदि त्वद्रीत्याऽवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वादिरूपं पुनस्तदवस्थमेवानुपयुक्तत्वम्॥

स्वव्यवहारे स्वातिरिक्तापेक्षानियतत्वाभावरूपं स्वप्रकाशत्वं स्वप्ने सुग्रहम्। चक्षुरादेः करणस्य मेर्वादेर्देशस्य गजादेः प्रमेयस्य च मिथ्यात्वेनास-

1 प्यस्य

## शेषतात्पर्यचन्द्रिका

त्कल्पतयार्थक्रियाकारित्वाभावेन तज्ज्ञाने तदपेक्षाऽभावनियमात्। जाग्रति त्वर्थक्रियाकारिणामेवादित्यादिसहितचक्षुरादीनां सत्त्वाद्दुर्ग्रहमिति चेत्, स्वरूपमात्रव्यवहारस्य सुषुप्तावेव सत्त्वेन तदितरयोरवस्थयोस्तदभावात्। अद्वितीयत्वादिविशिष्टव्यवहारस्य च जाग्रत्यद्वैतश्रुत्यादिसापेक्षत्ववत् 'अहं राजा, सुखी' इत्यादिस्वप्नविशिष्टव्यवहारस्य गजादीतरसापेक्षत्वेऽपि स्वप्रकाशत्वहान्यभावात्। स्वप्ने मनसो मिथ्यात्वाभावेन तत्सापेक्षत्वस्या-वर्जनीयत्वाच्च। अन्यथा जाग्रत्यपि आदित्यादिसापेक्षत्वे स्वयंज्योतिष्ट्वं दुग्रहं स्यात्। दृश्यत्वस्यादित्यादीनामप्यविशेषात्। असतोऽपि साधकत्वसिद्धान्ते स्वाप्नगजादिसापेक्षव्यवहारविषयत्वरूपास्वप्रकाशत्वस्यानिवार्यत्वात्, तन्मि-थ्यात्वप्रतिपादनस्य वैयर्थ्यापरिहाराच्च॥

अतीतपादस्य संसारप्रभेदप्रपञ्चनपरस्य अवस्थाप्रभेदप्रकारप्रपञ्चन-परैतत्पादवत् त्वंपदार्थविवेकार्थत्वोपपत्त्या पादभेदायोगाच्च॥

पूर्वोक्तसंशयस्य अयुक्तता

संशयोऽप्ययुक्तः। सृष्टौ पारमार्थ्यकोट्यप्रसिद्धेः। प्रबोधकालीन-सृष्टौ तत्प्रसिद्धिरिति चेन्न। तत्रापि पारमार्थ्यासंमतेः। संमतौ तु दृश्यत्वस्य तत्रैव व्यभिचारः॥

यदत्रोक्तं भामत्याम्—यद्यपि ब्रह्मणोऽन्यस्यानिर्वाच्यतया जाग्र-त्स्वप्नावस्थागतयोरपि मायामात्रत्वम्[1], तथापि यथा जगत्सृष्टिराब्रह्मात्म-[2]

[1] गतयोरुभयोरपि सर्गयो र्माया

[2] जाग्रत्सृष्टिः ब्रह्मात्मभावसाक्षात्कारात् प्राक् अनुवर्तते ब्रह्मात्मभावसाक्षात्कारात्तु निवर्तते

## शेषतात्पर्यचन्द्रिका

भावसाक्षात्कारादनुवर्तते, ब्रह्मात्मभावसाक्षात्कारान्निवर्तते, एवं किं स्वप्नसृष्टिः, आहोस्वित्प्रतिदिनं निवर्तत इति विमर्शार्थ इति—तन्न, प्रतिदिननिवर्त्यत्वस्य[3] मायामात्रशब्दार्थत्वाभावात्। विवक्षायां तु वक्ष्यमाणरीत्या कार्त्स्न्येनानभिव्यक्तस्वरूपत्वस्य सौत्रस्य हेतोः जाग्रत्यपि सत्त्वेन व्यभिचारापातात् ॥

एतेन स्वाप्नस्य[4] व्यावहारिकसत्त्वमस्ति न वेति चिन्त्यत इत्यर्थ इति कल्पतरूक्तं निरस्तम्। एतेनैवार्थक्रियाकारित्वरूपं सत्त्वमस्ति न वेति विचार्यत इत्यपि निरस्तम्। शुभादिसूचनादिरूपार्थक्रियाकारित्वस्य सूत्रकृतैवाङ्गीकृतत्वेन त्वयैव व्याख्यातत्वाच्च ॥

भ्रमान्तरेषु व्यभिचारेण पूर्वपक्षानुत्थितिः

एवं पूर्वपक्षोऽपि—स किं शुक्तिरजतादिज्ञानानां भ्रमत्वमङ्गीकृत्य प्रवर्तते, उत तदनङ्गीकृत्य? नाद्यः। सम्यक् स्याद्विमतं ज्ञानं ज्ञानत्वात् इति प्रयोगे तत्रैव व्यभिचारात्। अस्यैव सम्यक्त्वे विशेषहेत्वभावाच्च। नान्त्यः। असम्यग्ज्ञानमेव नास्तीति निषेधाय भ्रमस्यावश्यमभ्युपगमनीयत्वात्। अन्यथाऽप्रसक्तप्रतिषेधापत्तेः। शब्दाभासादसम्यग्ज्ञानप्रतीतौ तन्निषेधः सुशक एवेति चेत्, शब्दाभासस्वीकारे किमपराद्धं प्रत्यक्षाभासेन। शब्दाभासजन्यासम्यग्ज्ञानप्रतीतेः सम्यक्त्वे स्वव्याघातः। सम्यक्त्वस्य निषेध्यतया बाध्यत्वे तुल्यन्यायेन शुक्तिरजतादेस्तत्सिद्ध्यवश्यंभावश्च। असम्यक्त्वे च पुनर्व्याघातानिस्तारः। हेतोस्तत्रैव व्यभिचारश्च ॥

---

[3] प्रतिदिनं　　[4] स्वप्नस्य

## शेषतात्पर्यचन्द्रिका

भ्रममात्रस्य पक्षत्वे सौत्रसन्ध्यपदायोगः

सौत्रसंध्यपदस्वारस्येन स्वाप्नप्रत्ययविषयस्यैव पूर्वपक्षस्य युक्तत्वेन भ्रममात्रविषयत्वेन पूर्वपक्षायोगाच्च ॥

अत्रोक्तं वाचस्पतिना—इह हि सर्वाण्यपि मिथ्याज्ञानान्युदाहरणम्। प्रकृतोपयोगितया तु स्वाप्नज्ञानमुदाहृतमिति। विवृतं चैतत्कल्पतरौ—स्वप्रकाशत्वश्रुतौ[1] प्रकृतम्, **अत्रायं पुरुषः स्वयंज्योतिर्भवतीति**—तदयुक्तम्। स्वाप्नमिथ्यात्वस्य स्वप्रकाशत्वे उपयोगादर्शनात्। दर्शने वा शुक्तिरूप्यमिथ्यात्वस्यापि तदापातात्। दृढत्वेन त्वयैवाङ्गीकृतस्य त्वत्सिद्धान्तस्यैव मद्रीत्येह पूर्वपक्षसम्भवे सर्वानुभवविरुद्धज्ञानमात्रसम्यक्त्वावलम्बेन दुर्बलपूर्वपक्षायोगाच्च ॥

ईशसृष्टत्वेन स्वप्नस्य मिथ्यात्वसिद्धान्तायोगः

एवं सिद्धान्तोऽप्ययुक्तः—**अथ रथान् रथयोगान् पथः सृजते** इति वियदादीनामिव सृष्ट्युक्तेः। न च वियदादीनां सृष्टिरीश्वरकर्तृकेति तत्सत्यत्वेऽपि न जीवाज्ञानकल्पितस्वाप्नसत्यत्वं युक्तमिति वाच्यम्। **'अन्यत्र धर्मादन्यत्राधर्मात्' 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते' 'तस्मिंल्लोकाः श्रितास्सर्वे तदु नात्येति कश्चन'** इत्यादि वाक्यशेषेण, **कामं कामं पुरुषो निर्ममाणः** इति श्रुतेरीश्वरविषयत्वे सिद्धे **अथ रथान्** इत्यादेरपि तद्विषयत्वावश्यंभावात्। **जागरितदेश एवास्यैषः** इति यानि[2]

---

1 त्वं    1 स्यैष यानि

शेषतात्पर्यचन्द्रिका

**ह्येव जाग्रत्पश्यति तानि सुप्तः** इति जाग्रत्स्वप्नयोः समानन्यायत्वश्रवणाच्च। **कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्** इति युक्तेस्तु समाधानमग्रे भविष्यति ॥

स्वप्नमिथ्यात्वश्रुतेः सावकाशत्वम्

**न तत्र रथा न रथयोगा न पन्थानो भवन्ति** इति श्रुतिस्तु नात्यन्तासत्त्वाभिप्राया, किन्तु भगवत्सृष्टेः पूर्वमसत्त्वाभिप्राया, अजाग्रत्त्वाभिप्राया वा। अन्यथा **इदं वा अग्रे नैव किञ्चनासीत्** इति श्रुत्या वियदादीनामपि सत्त्वनिषेधादसत्त्वं स्यात्। तेषामर्थक्रियाकारित्वान्नासत्त्वमिति चेत्, शुभाशुभसूचकत्वस्य सूत्रकृदभिमतत्वेन त्वयैव व्याख्यातत्वेन स्वाप्नस्यापि साम्यात्। केषाञ्चित्स्वाप्नानां सत्त्वे च किमन्यैरपराद्धम्?

मायामात्रत्वस्य विकल्पासहत्वम्

किञ्चेदं मायामात्रत्वं यदिह सिषाधयिषितम्? व्यावहारिकत्वं चेद्बाधः। प्रातिभासिकत्वं चेद्व्यावहारिके वियदादौ, असति शशविषाणादौ च व्यभिचारः। न हि तयोरपि देशकालसम्पत्त्यादिः शक्यवचनः। साधारणं मिथ्यात्वमात्रं चेदर्थान्तरता। तस्य चासत्त्वपर्यवसानेन बाधश्चेति ॥

सन्ध्यसूत्रार्थपरीक्षा

एवं सूत्रार्थोऽप्ययुक्तः। यच्च आद्यस्य—सन्ध्ये स्वप्ने[1] तथ्यरूपैव सृष्टिः इति व्याख्यानं—तत्तु तथ्यपदाश्रवणादुपेक्षणीयम्। यस्य सृष्टिस्तस्य

[1] स्थाने

## शेषतात्पर्यचन्द्रिका

तथ्यरूपत्वमेवेति नियमात् तात्पर्यकथनमेतदिति चेन्न। त्वत्सिद्धान्ते आविद्यकस्य शुक्तिरूप्यादेस्तात्कालिकसृष्टिसद्भावेन व्यभिचारात्। मायामात्रशब्दस्य[1] सिद्धान्तसूत्रे दर्शनादिह पूर्वपक्षसूत्रे तत्प्रतिद्वन्द्वितया तथ्यरूपत्वमभिप्रेतमिति चेन्न। असत्त्वपरमार्थसत्त्वयोरपि त्वन्मते तत्प्रतिद्वन्द्वितोपपत्तेः॥

किञ्च किमत्र सन्ध्यकालं पक्षीकृत्य सृष्टिमात्रं साध्यते, उत तथ्यरूपत्वविशिष्टा सृष्टिः, आहोस्वित्स्वप्नकालीनसृष्टिं पक्षीकृत्य तथ्यरूपत्वमात्रम्? नाद्यः। सिद्धान्तिनाप्याविद्यकसृष्टेरङ्गीकारेण सिद्धसाधनात्। न द्वितीयः। अंशतः सिद्धसाधनात्, गौरवात्, अप्रसिद्धविशेषणत्वात्, सृष्टिमात्रस्य श्रुतत्वेऽपि विशिष्टस्याश्रुतत्वाच्च। अत एव न तृतीयः। **अथ रथान् रथयोगान् पथः सृजते** इति वाक्ये तथ्यरूपत्वस्य साध्यस्याश्रवणात्॥

'**स हि कर्ता** इति चोपसंहारादेवमेवावगम्यते' इति च न सूत्रारूढं भाष्यम्। तर्हि द्वितीयसूत्रस्यायमवतारो भविष्यतीति चेन्न। **एके शाखिन** इति श्रवणात्समाख्याप्रमाणोपन्यासरूपतावगमात्। न हि शाखान्तरस्य शाखान्तरस्थं वाक्यमुपसंहारो भवति। **अपि चैके शाखिनः** इति युक्त्यन्तरोपन्यासपरतया भाषणाच्च। अन्यथा योगविभाग एकशब्दश्चानर्थकः स्यात्॥

### निर्मातृसूत्रार्थपरीक्षा

यच्च द्वितीयस्य—**य एष[2] सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण** इत्येके शाखिनः सन्ध्यस्य निर्मातारमात्मानमामनन्तीति पूर्वार्धं

---

[1] पदस्य [2] एषु

## शेषतात्पर्यचन्द्रिका

व्याख्याय, पुत्रादयश्चेह[1] कामा अभिप्रेयन्ते, **शतायुषः पुत्रपौत्रान् वृणीष्व** इति प्रकृत्य अन्ते **कामानां त्वा कामभाजं करोमि** इति प्रकृतेषु पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात् इति **पुत्रादयश्चे**त्युत्तरार्धस्य व्याख्यानम्—

तदप्यसत् । बह्वध्याहारप्रसङ्गात् । कामशब्दव्याख्यानस्येहाप्रस्तुतत्वाच्च । एतत्सूत्रमूलश्रुतिगतकामशब्दस्य पुत्रादिपरत्वनिर्णयान्नाप्रस्तुतत्वमिति चेन्न । तन्निर्णयस्याप्यफलत्वात् । कामशब्दस्येच्छापरत्वनिवृत्तिः फलमिति चेन्न । स्वाप्नेच्छाया अपि मिथ्यात्वं सिषाधयिषितमेवेति तत्परत्वेनापि पूर्वपक्षस्य युक्ततया तन्निरासायोगात् । स्वप्ने मनसोऽनुपरतत्वात्तदुपादेयेच्छायाः व्यावहारिकत्वं सिद्धान्ते संमतमेवेत्यंशतः सिद्धसाधनतापरिहाराय तद्व्यावृत्तिरावश्यकीति चेत्तर्हि स्वप्नज्ञानस्यापि व्यावृत्तिः सम्पादनीया स्यात् । त्वन्मतेऽपीच्छादेरान्तरप्रपञ्चस्य साक्षाच्चिन्निर्भास्यत्वसिद्धये आविद्य[2]कतया प्रातिभासिकत्वाङ्गीकाराच्च । **शतायुषः पुत्रपौत्रान् वृणीष्व** इति श्रुतावायुषः प्रथमत्वात् तदनुसारेण 'आयुरादयश्च' इति सूत्रयितव्ये द्वितीयोद्दिष्टपुत्रादित्वेन सौत्रनिर्देशायोगाच्च । श्रुतौ च कांश्चिदिष्टान् स्वरूपेणैवोक्त्वाऽनन्तत्वात् सामान्येन **कामानां त्वा काम**-इति पुत्रादीतरेष्टा एवारोग्यादयो निर्दिश्यन्त इति पुत्रादिषु कामशब्दप्रयोगासिद्धेश्च ॥

### मायामात्रसूत्रार्थानुवादः

यत्तु तृतीयस्य व्याख्यानम्—स्वप्ने सृष्टिः मायामात्रम् । न तु परमार्थगन्धोऽस्ति । कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । देशकालनिमित्त-

---

[1] पुत्रादयश्च कामाः, पुत्रादयश्च तत्र कामाः　　[2] आवश्यकतया

## शेषतात्पर्यचन्द्रिका

सम्पत्तिरबाधश्च कार्त्स्न्यम् । न हि परमार्थवस्तुविषयाणि देशकालनिमित्तान्यबाधश्च स्वप्ने संभाव्यन्ते । न तावत्स्वप्नदृष्टरथादीनामुचितो देशस्संवृते देहे सम्भाव्यते । नापि स्वप्नदृष्टवासरादीनां रजन्यां सम्भवः । नापि तद्ग्राहकाणि चक्षुरादीनि सन्ति । तेषामुपरतत्वात् । बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे । स्वप्न एव चैते सुलभबाधा भवन्ति । आद्यन्तयोर्व्यभिचारदर्शनात् । रथोऽयमिति हि कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्पद्यते । मनुष्योऽयमिति निर्धारितः क्षणेन वृक्ष इति । तस्मान्मायामात्रं स्वप्नदर्शनमिति —

स्वप्नस्य अज्ञानकल्पितत्वे साध्ये श्रुतिविरोधः

तन्न, मायाशब्देनाज्ञानोक्तौ **अथ रथान् रथयोगान् पथः सृजते** इति श्रुतौ सृष्टिवचनमयुक्तं स्यात् । न ह्यज्ञानमयं शुक्तिरूप्यादि सृजत इति श्रुतिरस्ति । न चायमनुवादः । व्यर्थत्वात् । तत्र 'रथा न' इत्युक्त्यैव निषेधसम्भवेन तदर्थमप्यनुवादानपेक्षणात् । अनुवादस्य प्राथम्यनियमेन **न तत्र रथा** इत्यनूद्य **अथ रथान्** इति सिद्धान्त उच्यत इत्यापाताच्च । स्वप्नकालीनरथादिसृष्टेः प्रमाणान्तराप्राप्तत्वेनानुवादायोगाच्च । ईश्वरसामर्थ्योक्तौ च सत्यत्वसिद्धिः । न हि मिथ्यासृष्टिसिद्धये सामर्थ्यमपेक्षितम् । तद्विधुरस्यापि जीवस्य त्वन्मते शुक्तिरूप्यस्रष्टृत्वाङ्गीकारात् ॥

सूत्राक्षरार्थास्वारस्यम्

मात्रशब्देनैव पूर्वपक्षप्रतिक्षेपसम्भवेन पक्षव्यावर्तकतया तुशब्दव्याख्यानमयुक्तम् । देशकालसम्पत्त्यबाधेषु कार्त्स्न्यशब्दस्याव्युत्पन्नतया

## शेषतात्पर्यचन्द्रिका

तस्य तत्परत्वव्याख्यानमयुक्तम्। विवक्षायामपि लाघवाय अकात्स्न्यात् इत्येतावतैवोक्तप्रमेयलाभसम्भवेनानभिव्यक्तस्वरूपत्वादित्यंशस्य प्रयोजनादर्शनात् ॥

देशकालनिमित्तसम्पत्त्यबाधानां हेतूनामसिद्धिः

मद्रीत्या ईश्वरेच्छया अतिसूक्ष्ममनोवासनोपादानकसृष्टिप्रमितौ देशकालनिमित्तसम्पत्त्यबाधानामेव सम्भवादसिद्धिश्च। संवृतेऽपि देहे ततोऽपि संवृताः सूक्ष्ममनोवासनोपादानकाः रथादयोऽवकाशं लभेरन्नेव। अत एव रजन्यां वासरसृष्टिरपि न विरुद्धा। वासरस्याप्राकृतत्वात्। अत एव च निमित्तसम्पत्तिरपि सुलभैव। चक्षुरादीनामुपरतत्वेऽपि मनस एव रूपादिग्राहकत्वसम्भवात्। न च तत्रासामर्थ्यम्। प्राकृतरूपादिष्वेव हि तत्। न तु सर्वत्र। न हि यद्यत्रासमर्थं दृष्टं तत् तज्जातीये सर्वत्रासमर्थमित्यस्ति नियमः। तथा सति स्थले शकटादिवहनासमर्था नौर्जलेऽपि तत्रासमर्था स्यात्। स्याच्च मनसः अनुव्यवसाये घटाद्यग्राहकता। एवं बाधोऽप्यसिद्धः। स हि भवन्नायं गज इति वा न मया गजो दृष्ट इति वा भवेत्। न हि प्रबोधे स्वप्ने वा कश्चिदेवं प्रत्येति। किन्तु नायं जाग्रद्गजः, स्वप्नदृष्ट इत्येव। जाग्रत्त्वमात्रं तु कामं मिथ्याभूतम्, न पुनर्धर्मिण एव मिथ्यात्वं युक्तम्। शुक्तेरपि तत्प्रसङ्गात् ॥

उक्तहेतूनामप्रयोजकत्वम्

यदपि—स्वप्ने निर्धारितो रथादिः क्षणेन मनुष्यःसम्पद्यते इत्यादि—तदपि परमसमर्थो हरिर्जीवानां तत्तत्कर्माणि निमित्तीकृत्य तदीयविचित्र-

## शेषतात्पर्यचन्द्रिका

वासनामुपादानीकृत्य क्षिप्रतरमेव तत्तद्योग्यपदार्थजातं सृष्टिविनाशाभ्यां संयोजयतीत्यङ्गीकारेण न मिथ्यात्वप्रापकम्। अत एव **न तत्र रथाः** इति श्रुतिःसमाहिता। अन्यथा स्वर्णकारहस्तलाघवेन क्षिप्रतरं निर्मितःकुण्डलादिः क्षणेन कटकादिरपि दृश्यत इति कुण्डलादेरपि मिथ्यात्वं स्यात्। अत एवायं हेतुरप्रयोजकः। स्थूलदेशकालसम्पत्त्याद्यभावेऽपि सूक्ष्मदेशकालादिसम्पत्तिसद्भावेन सत्यत्वोपपत्तेः। सत्यस्य हि देशकालादिसम्पत्त्यैव व्याप्तिः। न तु स्थूलदेशकालादिसम्पत्त्या। जीवस्य विभुत्वाणुत्वपक्षयोः पिपीलिकादिगजादिरूपदेशसम्पत्त्यभावात्। देशकालयोश्च स्वभिन्नदेशकालसम्पत्त्यभावाच्च॥

उक्तहेतूनामसिद्धिः व्यभिचारो विरोधश्च

शुक्तिरूप्यस्याविद्यकत्वेन अविद्याशुक्त्यादेर्देशस्य सम्पत्तेःहेत्वसिद्धिश्च। अनाविद्यकदेशादिसम्पत्तिशून्यत्वं हेतुरिति चेन्न। ब्रह्मेतरस्य सर्वस्याप्याविद्यकत्वेन देशादावनाविद्यकत्वविशेषणाप्रसिद्धेः॥

अत एव व्यावहारिकप्रपञ्चेऽनाविद्यकदेशाभावाद्व्यभिचारश्च॥

किञ्चायमसाधारणो हेतुः। पक्षमात्रवृत्तिर्ह्यसाधारणः; न चायं तथा, शुक्तिरूप्येऽपि वृत्तेरिति चेन्न। त्वन्मते तस्यापि पक्षत्वस्वीकारात्। यथोक्तं वाचस्पत्यमलानन्दाभ्याम्—'इह हि सर्वाण्येव मिथ्याज्ञानान्युदाहरणम्। तेषामसत्यत्वं प्रतिज्ञायते। प्रकृतोपयोगितया स्वप्नज्ञानमुदाहृतम्' इति। 'इह हि सर्वाण्येव मिथ्याज्ञानान्युदाहरणम्, न्यायस्य तुल्यत्वात्। स्वयंज्योतिष्ट्वोपयोगितया स्वप्नज्ञानमुदाहृतम्' इति च॥

## शेषतात्पर्यचन्द्रिका

तर्हि केवलव्यतिरेकी भविष्यतीति चेत्, मायामात्रत्वरूपसाध्यव्यतिरेकवति ब्रह्मणि देशकालसम्पत्तिशून्यत्वरूपहेतुव्यतिरेकाभावाद्व्यभिचारः। पारमार्थिकदेशाद्यभावेऽप्यपारमार्थिकदेशसद्भावान्न व्यभिचार इति चेत्, पक्षे हेत्वसिद्धिः॥

पर्वताग्रस्थितसूक्ष्मतरवस्तुषु साकल्येनाविज्ञेयस्वरूत्वस्य सत्यत्वेनैव व्याप्तिदर्शनेन विरुद्धश्चायं हेतुः॥

### सिद्धान्तिनो मते तु नासाधारण्यम्

त्वन्मतेऽपि तर्हि वासनामयत्वसाधनेऽसाधारण्यं स्यादिति चेन्न। व्यतिरेकव्याप्त्युपपत्तेः। यद्वा भगवदिच्छानिर्मितत्वं मन्मते साध्यम्। मायाशब्दस्य **महामायेत्यविद्येति....तवेच्छानन्त कथ्यते** इति तत्रापि प्रयोगात्। तथा च परमाणुप्रदेशेऽनन्तप्राणिराश्यवस्थानादिर्दृष्टान्तो भविष्यति। तद्धि कार्त्स्न्येनानभिव्यक्तस्वरूपं भवति। भूतले घटाद्यवस्थानं पण्डितपामरसाधारण्येन यथानुभवमारोहति न तथानन्तजीवावस्थानम्॥

### ईश्वरेच्छानिर्मितत्वे साध्ये हेतोरगौरवम्

ईश्वरेच्छायाः कार्यमात्रं प्रति हेतुत्वेन कार्यत्वमात्रस्यैव तदिच्छानिर्मितत्वव्याप्तिसम्भवेन कुतोऽयमपूर्वो हेतुरुच्यत इति चेत्, वह्निव्याप्यानां वह्न्यालोकादीनां सम्भवेन कुतोऽयमपूर्वो हेतुरुच्यते? उपस्थितत्वादिति चेत्, इहापि तथास्तु। गौरवं दोष इति चेन्न। विशेष्यमात्रम् असति व्यभिचीर्णम्। असतः स्वरूपस्यैवाभावेनाभिव्यक्तस्वरूपत्वाभावस्य, ईशेच्छानिर्मितत्वाभावस्य

## शेषतात्पर्यचन्द्रिका

च सत्त्वात्। ततश्च विशेषणम्। तेन च एकदेशाभिव्यक्तस्वरूपत्वे सति साकल्येन तदभावो विवक्षित इति साकल्येनाभिव्यक्तस्वरूपे घटादौ, निःस्वरूपे शशविषाणादौ च न प्रसक्तिरिति विशिष्टस्याप्यावश्यकत्वेन गौरवस्यादोषत्वात्। अन्यथा चक्षुस्तैजसं रूपादिषु पञ्चसु गध्ये रूपस्यैवाभिव्यञ्जकत्वादिति प्रयोगे तैजसावयवारब्धत्वमात्रस्य लघुत्वेन गुरुशरीरस्य हेतुत्वानुपपत्तिः स्यात्॥

मायामात्रसूत्रस्य सिद्धान्ते दूषणानुमानत्वेन उक्तशङ्कानवकाशः

यद्वा नात्र मायामयत्वं साध्यम्। स्वाप्नसत्यत्वस्यैव प्रकृतत्वात्। किन्तु निमित्तोपादानयोरदर्शनात् स्वप्ने गजादीनां सृष्टिर्नोपपद्यते इति शङ्कानिरासाय, ईश्वरेच्छा निमित्तं वासना चोपादानमिति तन्त्रेण साधयितुं, वासनामयत्वानङ्गीकारे घटादिवत्कार्त्स्न्येनाभिव्यक्तिः स्यादित्यादि बाधकमनेनोच्यत इति न कुशङ्कावकाशः॥

देशकालाद्यसम्भव इत्यादि भारतीतीर्थाशयानुवादः

एतेन—स्वाप्नस्य[1] सत्यत्वे उचितकालाद्यसम्भवः। न हि केशसहस्रांशपरिमितमनोमध्ये गिरिनदीसमुद्राणामुचितदेशोऽस्ति। न हि निशि शयानस्य सूर्यग्रहणोचितः कालोऽस्ति। नाप्यनुपनीतस्य बालस्य पुत्रोत्सवादिहर्षनिमित्तान्युचितानि। किञ्च स्वप्नोपलब्धानां पदार्थानां स्वप्न एव बाधो दृश्यते। कदाचित्तरुत्वेनावसितः पदार्थः तदैव गिरित्वेनाप्यवसितो भवति। वस्तुतो न सन्तोऽपि रथाद्याः शुक्तिरजतवदवभासन्त इति सृष्टिश्रुतेरभिप्रायः,

[1] स्वप्नस्य

## शेषतात्पर्यचन्द्रिका

न तु वियदादिवत्सत्या इति। जाग्रत्साम्यं चाप्रयोजकम्। अनुचितदेशकालादेर्भूयसो वैषम्यस्योक्तत्वात्। ईश्वरकर्तृकत्वात् सत्या सृष्टिरिति चासिद्धम्। **य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाण** इति जीवस्य स्वप्ननिर्मातृत्वेन[1] श्रुत्याभ्यस्यमानत्वादिति भारतीतीर्थोक्तं—निरस्तम्॥

तत्र स्थूलदेशाद्यसंभवस्य स्वाप्नसत्यत्वाविरोधित्वम्

वासनायाः सूक्ष्मत्वेन तदुपादानकस्य गिरिनदीसमुद्रादेरपि सूक्ष्मतया अप्रतिघद्रव्यतया च केशसहस्रांशपरिमितसूक्ष्मेऽपि मनस्यवस्थाने बाधकाभावात्। न हि स्थूला एव गिरिनदीसमुद्रास्तच्छब्दवाच्याः, न तु सूक्ष्मा इति युक्तम्। तथा सति सूक्ष्मे घटे तच्छब्दो न स्यात्। यद्यपि निशाकालः जाग्रत्सूर्यग्रहणायानुचितः, तथापि वासनामयसूर्यग्रहणायोचित एव। न ह्येककार्येऽनुचितः स तद्विजातीयकार्येऽप्यनुचितो भवति। तथा सति अनुद्भूतरूपरसगन्धस्पर्शशब्दग्रहणानुचितानि चक्षुरादीनि उद्भूतानामप्येषां ग्रहणायानुचितानि स्युः। स्युश्च कुविन्दादयो घटादावसमर्थाःपटादावपि। अनुपनीतस्यापि बालस्य जन्मान्तरीयपुत्रोत्सवाद्यनुभवजनितवासनामुपादानीकृत्य तत्सदृशदेहान्तरोत्पत्तौ तत्रास्याभिमानोदये पुत्रोत्सवादिहर्षनिमित्तानामप्यौचित्यात्, स्वाप्नकामिनीसम्भोगादिवत्॥

तरुगिरिभावादेः स्वाप्नसत्यत्वाविरोधित्वम्

यच्च किञ्चेत्युक्तं तदपि न। न हि यस्मिन् क्षणे यस्तरुत्वेनावसितः स तस्मिन्नेव क्षणे गिरित्वेनावसीयते। अनुभवविरोधात्। किन्तु सूक्ष्मकाल-

[1] स्वप्नभोगनिर्मातृत्वेन

## शेषतात्पर्यचन्द्रिका

भेदानाकलनाद्यौगपद्याभिमानमात्रम्। स्वाप्ने तत्पदार्थानां क्षिप्रहस्तस्वर्णकारादिकृताङ्गुलीयककटकादिवत् क्षिप्रमेव पूर्वपूर्वपदार्थनाशेन पदार्थान्तरोत्पत्तिसम्भवात् ॥

सृष्टिश्रुतेरसन्तोऽपि शुक्तिरजतवदवभासन्त इत्यभिप्राय इति कल्पनस्य च नान्यच्छ्रुतिद्रोहादाकलयामो निमित्तम् ॥

एतेनानुचितदेशकालादेर्भूयसो वैषम्यस्य दर्शनाज्जाग्रत्साम्यं सत्यतायामप्रयोजकमिति निरस्तम्। देशकालाद्यौचित्यस्योक्तत्वात् ॥

सृष्टिश्रुतेः जीवपरत्वासंभवः

यच्च ईश्वरकर्तृकत्वेन स्वाप्नसत्यत्वानुमानस्य 'एषु सुप्तेषु' इति श्रुतेर्जीवपरत्वेनासिद्ध्यद्भावनं, तदीश्वरप्रद्वेषनिबन्धनम्। 'अन्यत्र धर्मादन्यत्राधर्मात्' 'तदेव शुक्रं[1] तद्ब्रह्म तदेवामृतमुच्यते। तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥' इति पूर्वेण 'य एषु सुप्तेषु' इति धर्माधर्मासंस्पर्शादिना सुप्तजीवगतत्वेन चेश्वरस्यैव प्रतीतेः। न हि जीवे धर्माधर्मासंस्पर्शशुक्रत्वब्रह्मत्वामृतत्वलोकाश्रयत्वसर्वानतिक्रमणीयत्वसुप्तजीवनियामकत्वनिर्मातृत्वानि युज्यन्ते। जीवस्य ब्रह्माभेदान्न दोष इति चेत्, तथापि लोकाश्रयत्वादीश्वरधर्माणामनुपपत्तिः। ईश्वरस्यापि ब्रह्माभिन्नत्वाददोष इति चेत्, कर्णे स्पृष्टे कटिं चालयसि। नेमे ईश्वरधर्मा इति चेत्, कस्य तर्हि? जडस्याप्रसक्तेः, जीवस्य तु बाधितमेव। ब्रह्म त्वखण्डम्।

[1] शुक्रं

## शेषतात्पर्यचन्द्रिका

ईश्वरेणापि जीवस्याभेद इति चेन्न। अपसिद्धान्तात्। विरुद्धधर्माधिकरणयोस्तदयोगाच्च। स्वाप्नसृष्टिर्जीवकर्तृका नेश्वरकर्तृकेति त्वदुक्त्ययोगाच्च। **आत्मन आकाशः** इत्यादेरप्युक्तरीत्या जीवपरत्वसम्भवे वियदादेरपीश्वरकर्तृकत्वायोगेन सत्यत्वासिद्धेश्च। किञ्च जीवस्यैव स्वाप्ननिर्मातृत्वे स्वेच्छया शुभसूचकानामेव निर्माणे तद्दर्शनमेव स्यान्न कदाचिदरिष्टदर्शनम्॥

स्वाप्नस्येश्वरकर्तृकत्वे शाङ्करभाष्योक्तबाधकपरीक्षा

अत्र स्वाप्नस्येश्वरकर्तृकत्वे भाष्यकृत् बाधकमाभाषत—श्रुत्यन्तरे **स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति** इति जीवव्यापारश्रवणात्, **य एषु सुप्तेषु** इति प्रसिद्धानुवादादिहापि जीव एव सङ्कीर्त्यते। न हि **स्वयंशब्दः**, **प्रस्वपितीत्युक्तस्वापः**, यच्छब्दोक्तप्रसिद्धिश्चेश्वरे सम्भाव्यते। यद्यपीदं ब्रह्मप्रकरणं, तथापि नात्र जीवस्वरूपनिरूपणं विरुद्धम्। वाक्यशेषे **तदेव शुक्रं**[1] **तद्ब्रह्म तदेवामृतमुच्यते** इति जीवभावं व्यावर्त्य **तत्त्वमसीत्यादिनेव** ब्रह्मभावस्योपदिश्यमानत्वात्—इति॥

तदेतत्सूत्रानुक्तत्वादयुक्तम्। **निर्मातारं चैके** इति सौत्रपूर्वपक्षस्य प्रबलस्येश्वरकर्तृकत्वस्य सूत्राक्षरेणैव साक्षान्निरसनीयत्वाच्च। **स्वयंशब्दः** स्वतन्त्रवाची, स्वयमेव करोतीति प्रयोगदर्शनात्। स्वतन्त्रश्च भगवानेवेति कथं जीवज्ञप्तिः? **स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति** इति च विरुद्धम्। प्रस्वापो ह्यज्ञानकार्यम्। न च तत् प्रकाशादिना भवति। **स्वयं**

[1] शुक्रं

## शेषतात्पर्यचन्द्रिका

**विहृत्येति** च विरुद्धम् । देहाभिमानत्यागेन हि विहृतिर्भवति । **स च न** स्वेच्छाधीनः । कदाचिन्निद्रेच्छायामपि तदभावानुभावात् । यच्छब्दोदित-प्रसिद्धिरपि **ब्रह्मेत्याचक्षते** इत्यादिश्रौतप्रयोगाद्युक्तैव । ब्रह्मप्रकरणविरोधोऽप्यपरिहार्य एव । जैववाक्यस्यासाधारण्येनाब्रह्मपरत्वात् । अन्यथा **मास-मग्निहोत्रं जुहोति** इत्यादौ प्रकरणाद्भेदो न स्यात् । तत्रापि यथाकथञ्चित्प्र-करणैक्यसम्पादनसम्भवात् । किञ्च सर्वस्याप्यस्य प्रकरणस्य जैवत्वमाक्षिप्य ब्रह्मस्वरूपप्रतिपादनमप्येवं शक्यसमाधानं स्यात् ॥

वाराहोक्तभगवद्वाक्येन स्वाप्नस्येश्वराचिन्त्यशक्तिनिर्मितत्वे, सृष्टिश्रुतेः सत्यत्वपरत्वे च सर्वानुपपत्त्युद्धारः

किञ्च,

विश्वोपाश्रयतां[1] दिव्यां ततो मम मुने पुरा ।
मार्कण्डेयविरिञ्चौ हि प्रविश्यान्तरपश्यताम् ॥
देवकीनन्दनत्वेऽपि यशोदा नन्दगेहिनी ।
दिव्यं लब्ध्वा तु नयनमाम्बिकेयार्जुनावपि ॥
उदङ्कस्तादृशश्चान्ये ददृशुस्तन्महाद्भुतम् ।
स्तोकमात्रं वपुरिदमिह लोका विशृङ्खलाः ॥
रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति च ।
न च गन्धर्वनगरमिन्द्रजालादिसम्भवम् ॥
दिव्येन चक्षुषा दृष्टिर्न भ्रमत्वं च विन्दति ।
तत्त्वार्थे त्वेकरूपे वै न विरोधश्च युज्यते ॥

---

[1] विश्वापाश्रयतां

शेषतात्पर्यचन्द्रिका

एवं वितर्कयन्तोऽपि योगिनो बहुधा नृप।
न पारं संशयस्यास्य गच्छन्तः शक्तिमेव मे॥
नमन्ति विविधाकारां श्रुतां स्वाभाविकीं द्विज।

इत्यणुरूपे तस्य[1] रोमकूपेऽपि अनन्तब्रह्माण्डाद्याधारत्वाद्यघटितघटनापटीयसी-मचिन्त्याद्भुतशक्तिं प्रस्तुत्य,

यया रथान् रथयोगान् पथश्च विविधानपि॥
वेशान्तान् सरसश्चापि गिरीन्द्रान् वारिधीनपि।
सेना[2] राजन्यसौधांश्च स्त्रियश्च[3] परमा द्विज॥
दैत्यरक्षःपिशाचांश्च दन्तियास्यभटानपि।
पुंसश्च दिव्यान् दिव्याश्च कथाः कथयतोऽद्भुताः॥
अत्रिवृत्पञ्चकरणमभूतेन्द्रियमिश्रणम्[4]।
अजीववर्गसाचिव्यं सृष्ट्वा भावानिहाद्भुतान्॥
हृदः प्रदेश एवायमबहिर्निर्गमक्रियम्।
लम्बितस्तु[5] दशां स्वामीं जीवकर्मनिबन्धनाम्॥
निद्रादोषेण धातूनां प्रकोपेन च यद्यपि।
कुदृष्टीनां स्वप्नदृशो भ्रमत्वप्रथनं द्विज॥
तथापि मत्तनोरस्यास्त्वमहत्त्वमहत्त्वयोः।
मिथो विरुद्धयोर्दिव्यचक्षुर्दृक्पथता कथम्॥

[1] तत्स्थ　[2] सेन　[3] श्रियश्च　[4] ताम्　[5] लम्भित

शेषतात्पर्यचन्द्रिका

इत्थंभूतवितर्काब्धेर्न निस्तारोऽपि योगिनाम् ।
मन्दात्मनां तु तत्तत्त्वनिस्तारे कानुचिन्तना ॥
इदमत्यद्भुतत्वं मे मूर्तेर्ब्रह्मादिदुर्लभम् ।
विश्वान्तर्गतता विश्वाधारस्यापि यदीक्ष्यते ॥

इत्यादिना स्वाप्नरथादेरचिन्त्याद्भुतशक्त्यादिनिर्मितत्वप्रतिपादनेन, सत्यत्वपक्षबाधकोद्धारेण, मिथ्यात्वपक्षस्य सयुक्तिकं दूषणेन च सत्यत्वमेव श्रुत्यर्थ इति वाराहे क्षेत्रखण्डे नारदं प्रति गोष्ठीपूर्णाख्येन[1] भगवता स्वयमेव व्याख्यातत्वान्नान्योत्प्रेक्षितव्याख्यानं श्रुतेर्युक्तम् ॥

अत्र हि—यया शक्त्यायं परमात्मा जीवकर्मनिबन्धनां स्वाप्नीं दशामवलम्ब्य, अत्रिवृत्पञ्चकरणादि यथा भवति तथेह भावान् स्वाप्नान् रथादीन् सृष्ट्वा जीवाय दर्शयति—इत्यध्याहृतेन सम्बन्धः ॥

**अत्रिवृत्पञ्चकरणमभूतेन्द्रियमिश्रणम्** इत्याभ्यां पदाभ्यां हि पश्चात्पुरस्ताच्च स्वाप्नानां सत्यत्वे दर्शनं स्यात्, भौतिकानामिन्द्रियाणामुपरतत्वात्तद्दर्शनञ्च न स्यादिति बाधकद्वयमुद्धृतम् । **अजीववर्गसाचिव्यम्** इत्यनेन गजादीनां चेतनत्वप्रतीतेर्बहुचेतनानां तात्कालिकी सृष्टिरदृष्टाऽप्रामाणिकी चेति बाधकम्, **हृदः प्रदेश एव** इत्यनेन स्वप्नदर्शनार्थं बहिर्गतस्य पुनः शरीरप्रवेशानुपपत्तिरिति बाधकम्, **अबहिर्निर्गमक्रियम्** इत्यनेन बहिष्ठानामप्युपलम्भप्रसङ्ग इति बाधकम्, **जीवकर्मनिबन्धनाम्**इत्यनेन शुभाशुभमिश्र-

[1] गोष्ठि

## शेषतात्पर्यचन्द्रिका

सृष्ट्यनुपपत्तिरिति बाधकं चोद्धृतम्। **निद्रादोषेण** इत्यादिना मिथ्यात्वप्रवादस्य गत्युक्तिः, भगवच्छरीरे युगपदणुत्वमहत्त्वयोर्दिव्यदृष्टिगोचरत्वाद्यन्यथानुपपत्त्या अत्यद्भुतशक्त्यङ्गीकारे सति तयैव सृष्ट्युपपत्तेर्मिथ्यात्वप्रवादो न युक्त इति तस्य हेयत्वप्रदर्शनञ्चेत्याद्यूह्यम्॥

सूचकश्चेति सूत्रभाष्यपरीक्षा

यच्च[1] चतुर्थस्य व्याख्यानम्—मायामात्रत्वात्तर्हि न कश्चित्स्वप्ने परमार्थगन्धोऽस्तीति। नेत्युच्यते। सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः। तथा हि **यदा कर्मसु** इति श्रुतिः। आचक्षते च स्वप्नाध्यायविदः[2], कुञ्जरारोहणादीनि स्वप्ने धन्यानि, खरयानादीन्यधन्यानि इति। मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित्स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते इति—तदप्ययुक्तम्। त्वद्रीत्या तृतीये सिद्धान्तसूत्रे व्यावहारिकत्वं नास्तीत्युक्त्या तत्रैव साधकान्तरं बाधकपरिहारो वा चतुर्थे सङ्गतः। सूचकत्वसाधनन्तु कथं सङ्गतम्?

एतेन मायामात्रसूत्रोक्तदिशा तर्हि स्वप्ने कश्चित्परमार्थगन्धोऽस्ति किमिति विचिकित्सायामस्ति कश्चित्परमार्थगन्ध इत्युच्यते चतुर्थेनेत्यवतारोऽपि निरस्तः। तादृशविचिकित्सायाः परिहारावसराभावात्। अन्यथा तत्र दोषगन्धविचिकित्सापि परिहार्या स्यात्। सूचकत्वसाधनस्य परमार्थगन्धसाधनत्वेन प्रकृतस्वयंज्योतिष्ट्वस्य दुर्ग्रहत्वापाताच्च। कस्मिंश्चिदेव सूचके स्वप्ने

1 यच्चतुर्थस्य   2 स्वाप्नाध्याय

## शेषतात्पर्यचन्द्रिका

पारमार्थ्यसद्भावेऽप्यसूचकेषु बहुषु स्वप्नेषु तदभावेन तत्र स्वयंज्योतिष्ट्वं सुग्रहमेवेति चेन्न, अविशेषात्सर्वस्यापि स्वाप्नस्य पारमार्थ्यापातात् । पूर्वसूत्रोक्तमायामात्रत्वे मद्रीत्यैव युक्त्यन्तरोपन्यासाभावेन चशब्दवैयर्थ्याच्च । किञ्च स्वप्नमात्रस्यार्थक्रियाकारित्वात्मकव्यावहारिकत्वाभावस्तृतीये साध्यते। शुभाशुभसूचनादिरूपार्थक्रियाकारित्वं चतुर्थे साध्यत इति कथं न पूर्वापरविरोधः ॥

### सूचकं दर्शनं मिथ्येतिभाष्यपरीक्षा

अत्रोक्तं भाष्ये—तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वम् । सूचकस्य तु स्त्रीदर्शनादेर्वैतथ्यं, बाध्यमानत्वादित्यभिप्रायः । तस्मादुपपन्नं मायामात्रत्वं स्वप्नस्य इति ॥

तन्न । अत्र किं स्त्रीदर्शनादेः सूचकत्वरूपार्थक्रियाकारित्वं सत्यत्वं चोभयं नेत्युच्यते । उत सूचकत्वमङ्गीकृत्य सत्यत्वमात्रम् । नाद्यः । श्रुतिस्वप्नाध्यायविद्वद्वचनविरोधात् । द्वितीये प्रपञ्चवदर्थक्रियाकारिणः व्यावहारिकत्वस्य प्राप्त्या विरोधापरिहारात् । अत एवाद्राक्षमहं स्वप्नमिति मिथ्यार्थोपहितं स्वप्नदर्शनमनुमन्यते इति कल्पतरूक्तेर्बाध्यमानत्वस्यासिद्ध्या वैतथ्यसाधकहेत्वभावाच्च । चरमवृत्तिबाध्यत्वञ्च व्यावहारिके प्रपञ्चे व्यभिचीर्णम् । किञ्चैवमस्य सूत्रस्याभिप्रायवर्णने परमार्थगन्धाभावस्यैव प्राप्त्या 'मायामात्रत्वात्तर्हि स्वप्ने न कश्चित्परमार्थगन्धोऽस्ति ? नेत्युच्यते' इत्येवं सूत्रावतारभाष्यविरोधः ॥

## शेषतात्पर्यचन्द्रिका

सूचकं दर्शनं स्वरूपेण सदिति भामतीपरीक्षा

अत्रोक्तं वाचस्पतिना—दर्शनं[1] सूचकं, तच्च स्वरूपेण सत् । असत्तु दृश्यम् । अत एव स्त्रीदर्शनस्वरूपसाध्याश्चरमधातुविसर्गादयो जाग्रदवस्थायामनुवर्तन्ते । स्त्रीसाध्यास्तु माल्यविलेपनदन्तक्षतादयो नानुवर्तन्त इति ॥

तत्र प्रष्टव्यं—किमनेनोक्तं स्यादिति । अर्थज्ञानात्मकस्य स्वप्नस्य मध्ये ज्ञानस्य सत्त्वम् अर्थस्यासत्त्वं सोपष्टम्भकमुक्तं स्यादिति यदि ब्रूयात् प्रतिब्रूयादेनं—पूर्वापरयोः सूत्रयोर्भाष्ययोश्च विरोधे कः परिहार इति। किं च सूचकस्य स्त्रीदर्शनादेर्वैतथ्यं, सूच्यमानस्य समृद्ध्यादेस्सत्त्वं भाष्यकृदाह । दर्शनस्य सत्त्वं दृश्यस्य स्त्र्यादेर्वैतथ्यं तद्व्याख्याता भवानाह । तथा च कथं नानयोर्विरोध इति स्वयमेव विभावयेत् ॥

मिथ्यार्थोपहितत्वेन दर्शनं मिथ्येति कल्पतरुपरीक्षा

यदत्रोक्तं कल्पतरौ—स्त्रीदर्शनादिरूपं ज्ञानं विषयाविशेषितरूपेण ज्ञानमात्ररूपेण सत् । तच्च न सूचकम् । यतः कुतश्चित् ज्ञानाद्यस्य कस्यचित् सूचनप्रसङ्गात् । असत्तु दृश्यम् । तस्माद्यदुपहितं दर्शनं सूचकं तच्च मिथ्यैव। ततश्चास्ति मिथ्याभूतस्त्र्याद्युपहितस्यापि स्वप्नदर्शनस्य व्यावहारिकं सत्त्वम् । अत एवाद्राक्षं स्वप्नमहमिति मिथ्यार्थोपहितं स्वप्नदर्शनमनुमन्यते । युक्त्या तु मिथ्यार्थोपहितत्वादिकया मिथ्यात्वमुच्यते । अर्थस्तु स्वाप्नो मिथ्या । न च व्यावहारिकमपि सत्त्वं तस्यास्तीति न पूर्वापरविरोध इत्यर्थ इति—

[1] तद्दर्शनं

## शेषतात्पर्यचन्द्रिका

किमत्र स्वप्ने स्त्रीदर्शनादेर्मिथ्याभूतस्त्र्यादिसम्पर्केण जपाकुसुमसम्पर्केण स्फटिकादेरिव लौहित्यं, मिथ्यात्वं जायत इत्युच्यते, उत मिथ्यात्वाभावेऽप्युपचारेण तथा व्यवहारमात्रम् ? नाद्यः। सूचकत्वोक्त्या सूत्राभिप्रेततया त्वयैव व्याख्यातस्य सत्त्वस्य त्यागे कथं न सूत्रादिविरोधः ? अत्यागे तु मिथ्यात्वस्यावकाशायोगात्, योगे वा अर्थस्यापि तथात्वापातात् । नान्त्यः। सूचकस्य स्त्रीदर्शनादेर्वैतथ्यं बाध्यमानत्वात् इति भाष्यविरोधात् । न ह्यौपचारिके व्यवहारे युक्त्युपन्यासो दृष्टः । देशकालसम्पत्तिराहित्यस्वरूपस्य कार्त्स्न्येनानभिव्यक्तस्वरूपत्वहेतोः स्वाप्नस्त्रीदर्शने व्यभिचारापाताच्च । न हि तत्र देशकालादिसम्पत्तिः शक्योपपादना। अन्यथा हेत्वसिद्धिरपरिहार्या स्यात् । व्यावहारिकं सत्त्वं नात्रास्तीति चेन्न । चरमधातुविसर्गादिरूपायाः तदुचितार्थक्रियायाः भामत्यामेवोपपादनात् । स्त्रीदर्शनस्यापि पक्षत्वाददोष इति चेत्पुनर्भाष्यादिविरोधप्रत्यावृत्तिः, अंशतो बाधः, स्त्र्यादिरूपार्थस्यापि स्वोचितसुखादिरूपार्थक्रियां प्रति स्वाप्नलब्धान्नपानादेः स्वोचितक्षुन्निवृत्त्यादिरूपार्थक्रियां प्रति च हेतुत्वदर्शनेन बाधश्च स्यात् । जाग्रदर्थक्रियाकारित्वाभावो मायामात्रत्वमिति चेत्, तथाप्यंशतो बाधानिस्तारः । व्यावहारिकस्य प्रपञ्चस्य स्वाप्नार्थक्रियाकारित्वाभावरूपं वैवक्षिकं मायामात्रत्वम् उक्तहेत्वभावेनापि सुसाध्यमित्याभाससाम्यञ्चेत्यलं दुर्बलहिंसया ॥

### पराभिध्यानसूत्रार्थः

यत्तु पञ्चमस्य व्याख्यानम्—यद्यपि ज्ञानैश्वर्यादिना जीवस्येश्वरसमानधर्मत्वमंशांशिभावेनाङ्गीकृतमस्ति । तथापि तत्रारणिभस्मभ्यां छन्नस्य

## शेषतात्पर्यचन्द्रिका

वह्नेर्दाहकत्वप्रकाशकत्वादिवत् 'तिरोहितम्' एव, न त्वतिरोहितम्, येनेश्वरात् साङ्कल्पिकवियदादिसृष्टिवज्जीवादपि साङ्कल्पिकी स्वाप्नसृष्टिः स्यात्, ततश्च सत्यापि स्यादिति शङ्केतापि। ततश्चेश्वरः अतिरोहितविज्ञानादिशक्तिमत्त्वात्[1] साङ्कल्पिकीं प्रपञ्चसृष्टिं तनुते। जीवस्तु तिरोहितज्ञानैश्वर्यादिमत्त्वान्न साङ्कल्पिकीं सृष्टिं कर्तुमीष्टे। अंशांशिभावनिबन्धनं ज्ञानैश्वर्यादिकं तु 'पराभिध्यानादेव' आविर्भवति। अविद्यादिव्यवधानात्पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादाच्च संसिद्धस्य कस्यचिदेवाविर्भवतीति यावत्। स्वभावत एव सर्वेषां जन्तूनां शक्त्याविर्भावो नास्ति, किं त्वीश्वरप्रसादादेवेत्युच्यते— 'ततो ह्यस्य बन्धविपर्ययौ।' ईश्वरस्वरूपापरिज्ञानाद्बन्धः, ईश्वरस्वरूपपरिज्ञानात्तु मोक्ष इति,

**ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः।**
**तस्याभिध्यानात्तु[2] तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः॥**

इत्याद्या श्रुतिर्विक्ति। अत्र, ईश्वरोऽहमस्मीति देवं ज्ञात्वा साक्षात्कृत्य सर्वपाशानामविद्यादिबन्धानां हानिर्भवति; अत एव क्षीणैः क्लेशैः हेत्वभावाज्जन्ममरणहानिर्भवति इति पूर्वार्धेन निर्गुणविद्यायाः फलमुक्त्वा, देहवियोगे सतीश्वरध्यानाद्बन्धमोक्षयोरान्तरालिकत्वात्तृतीयमैश्वर्यं ज्ञानं च प्राप्नोति इति सगुणविद्योपास्तिफलमभिधाय, पुनर्निर्गुणविद्यायाः केवलः अद्वितीयः, आप्तकामः प्राप्तपरमानन्दश्च भवतीत्युच्यत इत्यर्थ इति—

[1] अतिरोहितज्ञानादि [2] ध्यानात्तृतीयं

## शेषतात्पर्यचन्द्रिका

जीवीयज्ञानैश्वर्यादेःतिरोभावादिवचनस्य
प्रकृतासङ्गत्यादि

तदपि न। यतो ज्ञानैश्वर्यादेस्तिरोभावाविर्भाववचनं, पराभिध्यानादेव तत्समर्थनं च प्रकृतसंगतिगन्धविधुरम् । न हि मायामात्रत्वे सूचकत्वे वा अस्य सङ्गतिर्दृश्यते। जीवादेव साङ्कल्पिकसत्यसृष्टिनिवारणाय ज्ञानैश्वर्यादेस्तिरोभाववचनं सङ्गतमिति चेन्न। सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवस्येश्वरधर्मविपरीतधर्मत्वमिति सूत्राद्बहिरेव समाधानं भाष्येऽभिधाय, किं पुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव? न नास्ति, विद्यमानमपि तत्तिरोहितम् इत्यादिना अन्तरा प्राप्तशङ्कानिवारकत्वेन व्याख्यातत्वात् प्रकृतप्रमेयाक्षेपनिवारकेश्वरविपरीतधर्मत्वस्य भाष्यदिशा साक्षात्सङ्गतत्वेऽपि सौत्रं तिरोभाववचनं कथं सङ्गतम्? जीवस्येश्वरधर्मविपरीतधर्मत्वान्न तस्मात्साङ्कल्पिकी सृष्टिः इत्यध्याहारेण सूत्रयोजनं तु वक्रम्। किं चेश्वरधर्मविपरीतधर्मत्वोक्त्या समानधर्मत्वाभावस्यैव निश्चितत्वेन तत्र सन्देह एव नोत्पद्यते। उत्पत्तौ वा नास्त्येवेत्येव परिहारो युक्तः। न तु न नास्तीत्यभ्युपेत्य। तर्हीदानीमुपलम्भः स्यादिति चोद्ये तिरोहितं तदिति वक्रः परिहारः। अविद्यासम्बन्धाधीनस्य तिरोभावस्य स्वप्रकाशेऽसंगे चात्मन्यसम्भवस्यान्यत्रोक्तत्वात्। जीवेश्वरयोस्समानधर्मत्वसिद्धान्तस्य सत्यसृष्टिसाधकत्वेन प्रकृतप्रमेयविरोधापाताच्च। तिरोहितस्याप्यानन्दादेः सुषुप्तिकाल इव ज्ञानैश्वर्यादेः स्वप्नकालेऽप्याविर्भावोपपत्तेः। पराभिध्यानादेवाविर्भावनियमे सुषुप्तिकालीनानन्दादेरपि स न स्यात्॥

## शेषतात्पर्यचन्द्रिका

### जीवेश्वरयोः समानधर्मत्वसाधनायोगः

किञ्चेह कौ जीवेश्वरौ विवक्षितौ, ययोस्समानधर्मत्वं सूत्रे प्रतिपाद्यमुच्यते? यद्यविद्यामायाविशिष्टौ चेतनौ तर्हि तत्तत्स्वरूप[1]ग्राहिमानेनैव परस्परविपरीतधर्मवत्तया प्रमितत्वात् समानधर्मत्वसाधनं कालात्ययापदिष्टमपसिद्धान्तश्च। यद्यविद्यामायोपलक्षितचेतनौ तदापि निर्धर्मकत्वेन समानधर्मत्वसाधनं सुतरामसङ्गतम्। तत्तदुपलक्ष्यतावच्छेदकधर्माभावे उपलक्षकत्वानुपपत्त्या, समानाधिकरणधर्मयोरेव तथात्वे अविद्यामायाकार्यसाङ्कर्याद्यापत्त्या, विरुद्धधर्मयोरेवावच्छेदकत्वे वाच्ये समानधर्मत्वसाधनायोगाच्च। जीवेश्वरयोर्विशिष्टयोरेव विपरीतधर्मत्वे सृष्टेः सत्यत्वशङ्कानिरासायोपक्षिप्ते तयोरेव समानधर्मत्वसाधनस्य कथञ्चिद्युक्तत्वेऽपि, उपहितयोस्तत्साधनस्यायुक्तिश्च ॥

### सूत्रयोजनायाम् अस्वारस्यम्

स्वाप्नसृष्टिनिरोधयोर्भगवदधीनत्वे कथिते तत्सङ्गतम्, अक्षिदेशं हृदयदेशं वा गन्तुं कण्ठदेशाच्चलनरूपं स्वप्नतिरोहितं परमेश्वरेच्छयैवेति सौत्रपदयोः साक्षादध्याहारेण च, अवक्रेणैव च, प्रकृतप्रमेयस्य पूर्वमप्रतिपादितस्यातिबुभुत्सितस्य प्रतिपादकतया योजनासम्भवे, पारम्पर्येणाध्याहारेण वक्रेण च, अप्रकृतस्य आरम्भणाद्यधिकरणे बहुशः प्रतिपादितस्य प्रतिपादकतया योजनाऽसम्भवाच्च। अत एव स्वप्नतिरोधायकत्वरूपमाहात्म्यप्रतिपादनेन प्रधानसूत्रत्वे सम्भवति गुणसूत्रत्वायोगाच्च। स्वप्नतिरोधानस्यावश्यवक्तव्यस्य भगवदधीनत्वस्यावचनापाताच्च ॥

---

[1] स्वस्वरूप

## शेषतात्पर्यचन्द्रिका

सौत्र 'ततो ह्यस्य' भागव्याख्यापरीक्षा

एतेन, **ततो ह्यस्य बन्धविपर्ययौ** इत्यस्य व्याख्यानमपव्याख्यानमिति ख्यायते। जीवेश्वरशब्दाभ्यां चिन्मात्रोक्तौ चिन्मात्रज्ञानासम्भवस्यान्यत्रोपपादितत्वेन, चिन्मात्रज्ञानस्य च अहमिति स्वप्रकाशतया, सन् घट इत्यादिप्रत्यक्षे सद्रूपेण च, **सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते** इति त्वयैव चितः प्रकाशाङ्गीकारेण च सर्वदा सत्त्वेन बन्धमोक्षयोस्तदायत्तत्वाभावात्। अल्पज्ञत्वसर्वज्ञत्वादिविशिष्टोक्तौ च बन्धमोक्षयोस्तदज्ञानज्ञानाधीनत्वं सुतरामयुक्तम्। ईश्वरज्ञानस्य मिथ्याज्ञानत्वेन मोक्षहेतुत्वायोगात्। गौणमोक्षहेतुत्वमुपपद्यत इति चेन्न। स्वर्गादिहेतुयागादिवद्गौणमुक्तिहेतोरीश्वरप्रसादादेः तिरोहितस्वरूपाविर्भावहेतुत्वायोगात्। अन्यथा यागादेरपि तद्धेतुत्वापातात्। अत एव विशिष्टाज्ञानं न बन्धकम्॥

अत एव श्रुत्यर्थोऽप्ययुक्तः। न ह्येकस्मिन्नेव वाक्ये पूर्वार्धेन निर्गुणमुक्तिः, ततः सगुणमुक्तिः, पुनर्निर्गुणमुक्तिरुच्यत इति युक्तमभ्युपगन्तुम्॥

देहयोगसूत्रव्याख्या

यच्चान्तिमस्य व्याख्यानं—कस्मात्पुनर्जीवः परमात्मांश एव सन् तिरोहितज्ञानैश्वर्यो भवति? युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वम्। विस्फुलिङ्गस्येव दहनप्रकाशयोरिति। अत्रोच्यते। सोऽपि जीवस्य ज्ञानैश्वर्यतिरोभावः देहयोगात् देहेन्द्रियमनोबुद्धिविषयवेदनादियोगात् भवति। यथाग्नेर्दहनप्रकाशनसमर्थस्यापि अरणिगतस्य दहनप्रकाशतिरोभावः। वाशब्दो जीवेश्वरयोरन्यत्वाशङ्काव्या-

## शेषतात्पर्यचन्द्रिका

वृत्त्यर्थः । न ह्यन्यत्वं जीवस्येश्वरादुपपद्यते । **सेयं देवतैक्षत** इत्युपक्रम्य **अनेन जीवेनात्मनानुप्रविश्य** इत्यात्मशब्देन जीवस्य परामर्शात् । **तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो** इति च जीवायोपदिशतीश्वरत्वमिति—

अत्र तिरोभावहेतुप्रश्नोऽनुपयक्तः परिहारश्चायुक्त :

तदपि न, तिरोभावकारणप्रश्नस्येदानीमुपयोगादर्शनात् ॥

परिहारश्चायुक्तः[1] । स्वतः परमात्मांशस्य देहयोगस्यैव दीपस्यान्धकारयोगस्येवायोगात् । उपाधिसम्बन्धोऽपि हि स्वतोऽसंगस्यायुक्त एवेत्युक्तम् । अग्नेस्तु स्वतः परिच्छिन्नत्वेनारण्याद्यावृतत्वसम्भवेऽपि स्वतोऽपरिच्छिन्नस्य चैतन्यस्याविद्यया आवृतत्वायोगात् । जीवस्यापरिच्छिन्नेश्वरांशत्वे तु ज्ञानैश्वर्यादीनां तद्धर्माणां देहयोगेन तिरोभावोक्त्ययोगः । न हि घटधर्माणां पटे तिरोभावोक्तिर्युज्यते । अन्यथा सर्वधर्माणां सर्वत्र साङ्कर्यप्रसङ्गः ॥

वाकारार्थः पूर्वविरुद्धः

सृष्टिवाक्ये श्रुतः स्वाप्नकर्ता नेश्वरः, येन सोऽपि सत्यः स्यात् , किन्तु जीव एवेति पूर्वत्र प्रतिपादनादिह वाशब्दस्य जीवेश्वरयोरन्यत्वशङ्काव्यावृत्त्यर्थत्वोक्तिः कथं न विरुद्धेति स्वयमेव विभावय ॥

‘ जीवेनात्मना ’ श्रुत्यर्थो भगवान्

यच्च — **सेयं देवता** इत्युपक्रम्य, आत्मशब्देन जीवस्य परामर्शात् तदनन्यत्वमुक्तम् — तदयुक्तम् । व्यवहर्तुर्जीवस्यैव देवताशब्देनोपक्रमसम्भ-

---

[1] रस्यायुक्तेश्च

शेषतात्पर्यचन्द्रिका

वात्। **आत्मशब्दः परे विष्णौ नान्यत्र कचिदिष्यते** इत्यात्मशब्दो भगवति व्युत्पन्न इति जीवस्य परामर्शायोगाच्च। **जीव इति भगवतोऽनिरुद्धस्याख्या** इत्यन्यत्र व्याख्यातत्वान्न तत्समभिव्याहारेणात्मशब्दस्तत्परामर्शकोऽवगन्तुं शक्यः ॥

'तत्त्वमसि' श्रुतेरभिसन्धिः

यच्च --'**तत्त्वमसि**' इति जीवायोपदिशतीश्वरत्वमित्युक्तम्— तदपि निगूढहृदयायाः अतिगहनार्थायाः बह्वभिसन्धेः श्रुतेर्द्रविडस्य परिपाकनिमित्तं, न विदुषां हृदयंगमम्। तथाहि। तच्छब्दोऽयमविभक्तिको निर्दिष्टः **न लोपः प्रातिपदिके**ति यथा, यया विभक्त्या विवक्षितान्वयघटकमर्थमुपस्थापयेत् तया विभक्त्या योज्य इति विज्ञापयितुम्। तथा चाप्रथमा सर्वापि विभक्तिरूह्या—

प्रतियोगे च द्वितीया, अस्तिश्च स्थित्यर्थः—**तं परमात्मानं प्रति त्वं स्थितः। रूपं रूपं प्रतिरूपो बभूव** इति श्रुतेर्भगवत्प्रतिबिम्ब इत्यर्थः। बिम्बप्रतिबिम्बयोश्च प्रातिमुख्याप्रातिमुख्यमलिनत्वामलिनत्वचलत्वाचलत्वादिविरुद्धधर्मेण भेद एवान्यत्रोपपादितः। स एवात्मा, पूर्णगुणः। त्वं तु तत्प्रतिबिम्ब एवातो नात्मेति वाक्यार्थः ॥

ननु प्रतिबिम्बत्वं हि तदधीनत्वे सति तत्सदृशत्वम्। चित्त्वाविशेषात् कथं जीवस्य तदधीनत्वमिति चेत्तत्राप्येतदेवोत्तरं **तत्त्वमसीति**। तृती

## शेषतात्पर्यचन्द्रिका

यान्तश्चेदम्—**तेन भगवता त्वं स्थित इति । स्वभावो जीव एव च यदनुग्रहतः सन्ति** इति स्थितेरपि तदधीनत्वोक्तेः । न हि तत्स्थितिरेव तदधीना, नासौ तदधीन इति युज्यते ॥

न केवलं स्थितिस्तदायत्तेति तदधीनः, किन्तु संहारोऽपीत्याह **तत्त्वमसीति । तस्मै त्वमसीत्युक्तौ** ब्राह्मणाय सूप इतिवत्, **यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः** इति वचनाच्च तद्भक्ष्यत्वप्रतीतिसम्भवात् ॥

न केवलं स्थितिसंहारौ तदायत्तौ किन्तूत्पत्तिरपीत्याह **तस्मात्त्वं जातोऽसीति** । चित्स्वरूपस्याप्युत्पत्तिः **ज्ञोऽत एव** इत्यादौ सिद्धा ॥

**जनिकर्तुः प्रकृतिः** इति सूत्रात्पञ्चमीविधानात् जायमानोपादानत्वं ब्रह्मण आपन्नमित्युपादानोपादेययोश्चाभेदः श्रुत्या प्राप्तो न निवार्यत इति चेत्, जायमानोपादानं न 'जनिकर्तृप्रकृति' शब्दार्थः। तथा सति **शृङ्गाच्छरो जायते, अविलोमभ्यो दूर्वा जायन्ते, गोमयाद्वृश्चिको जायते** इत्यादि-काशिकोदाहरणमनुपपन्नं स्यात्। न हि शृङ्गाविलोमगोमयानि शरदूर्वावृश्चिको-पादानम्। शरादिभ्यः शृङ्गादीनां पृथगुपलम्भात्। न हि घटोपादानमृत्पिण्डा-दिर्घटात्पृथगुपलब्धो दृष्टः, इष्टो वा । किन्तु जायमानोपादानसंसृष्टभाग एव । अत एव च देवदत्ताद्यज्ञदत्तो जायत इत्युपपन्नम् । देवदत्तशरीरस्य यज्ञदत्तशरीरोपादानचरमधातुविशेषसंसृष्टभागत्वात् । न चैवं ध्रुवत्वप्राप्त्या **ध्रुवमपायेऽपादानम्** इत्येव सिद्धत्वात्, **जनिकर्तुः प्रकृतिः** इति व्यर्थम् ।

## शेषतात्पर्यचन्द्रिका

सत्यम् । एतत्परिहृतम् **अयं योगः शक्योऽवक्तुम्** इत्यादिना भाष्य एव प्रपञ्चनार्थत्वेन ॥

किं बहुनोक्तेन ? तदधीनत्वप्रापकयावद्धेतुसद्भावादित्याह **तस्य त्वमसीति । एकशतं षष्ठ्यर्थाः** इति महाभाष्योक्तेः स्वस्वामिभावोपकार्योपकारकभावोपजीव्योपजीवकभावोपास्योपासकभावदातृप्रतिगृहीतृभावादिरूपसम्बन्धसद्भावात् तदधीनत्वं युक्तमेवेति भावः ॥

नन्वस्तु संसारदशायामुक्तहेतुनिवहात् तदधीनत्वं, तथापि ब्रह्मस्वरूपापत्तिलक्षणमुक्तौ तदभावः किं न स्यात्, निमित्तापाये नैमित्तिकापायस्य न्यायप्राप्तत्वात् इत्यत आह **तस्मिंस्त्वमसीति** । मुक्तिर्न ब्रह्मस्वरूपापत्तिः । प्रागन्यस्य उपायसहस्रेणापि तादात्म्यानुपपत्तेः । किं त्वचञ्चला तस्मिन् स्थितिरेव । ततश्चाधाराधेयभावादिस्तदापि न निवर्तत इति न तन्निबन्धननैमित्तिकापायशङ्का युक्तेति भावः ॥

प्रथमान्तत्वे **स आत्मेति** पदद्वयानुसारात्पुल्लिङ्गत्वमेव स्यात्। **तत्सत्यम्** इति पदयोर्व्यवहितत्वात् । स आत्मा त्वमिति योजनायां, व्यवहितपरामर्शस्वीकारे वा तदित्यस्य स आत्मेत्यनयोर्वा वैयर्थ्यापातः । **ब्रह्मांशो वा शिवांशो वा नैषा प्रज्ञान्यथा भवेत्** इति स्वात्मानं नैच्यमुपदिश्य, तत्प्रतिबिम्बत्वादिना अहङ्कारं त्याजयितुं प्रवृत्तस्य पितुर्वाक्ये ईश्वराभेदपरत्वस्य प्रक्रमविरुद्धत्वञ्च ॥

## शेषतात्पर्यचन्द्रिका

अस्तु वा प्रथमान्तम्। योजना तु— अस्त्वेवं स्थितिसंहारोत्पत्त्यादेर्भगवदायत्तत्वाज्जीवस्य तदधीनत्वम्। तथापि कथं तत्प्रतिबिम्बत्वम्? तावन्मात्रस्य तत्त्वाभावादित्यतोऽतिदिशति **तत् ब्रह्म त्वमसीति**। **ब्रह्मसदृशोऽसि त्वमित्यर्थः**। सादृश्यज्ञप्त्यर्थो बहुलमतिदेशो दृश्यते ॥

यत्र दृश्यते तत्र दृश्यन्ते 'समान' 'वत्' इत्यादिशब्दाः 'समानमितरच्छयेनेन' 'स्थानिवदादेशः' इत्यादौ, नान्तरेणैतानिति चेत्, किं न पश्यसि 'सिंहो माणवकः' 'यजमानः प्रस्तरः' 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' 'असंयोगाल्लिट् कित्' 'सार्वधातुकमपित्' इति च? अत्र भाष्यकृदप्याह 'अन्तरेणापि वतिम् अतिदेशो दृश्यते। अब्रह्मदत्तं ब्रह्मदत्त इत्याह। ब्रह्मदत्तवदिति गम्यते' इत्यादि ॥

अतश्च तदधीनत्वे सति तत्सदृशत्वरूपं प्रतिबिम्बत्वं पुष्कलमुपपन्नमिति सर्वप्रमाणाविरुद्धयोजनया बह्वर्थविवक्षया श्रुतिः प्रवृत्तेति, कुकविकृतिवत्सर्वप्रमाणविरुद्धयोजनया नाल्पार्था श्रुतिर्व्याख्येयेत्यलं दुर्बलहिंसया ॥

सूत्रक्रमायोगः

एवं सूत्रक्रमोऽप्ययुक्तः। द्वितीयस्य निर्मातृमात्रसाधकत्वेन, आद्यस्य च तथ्यसृष्टिरूपविशेषसाधकत्वेन, सामान्योक्त्यनन्तरमेव विशेषोक्तेर्बहुलमुपलब्धेर्विनिमयस्यैव युक्तत्वात्। अत एव तृतीयसिद्धान्तसूत्रस्य द्वितीयानन्तर्यमयुक्तम्। सूचकत्ववर्णनं त्वसङ्गतमेवेत्युक्तम्। सङ्गतत्वेऽप्यन्तिमतैव युक्ता न तुरीयत्वम्। अत एव पञ्चमस्य चतुर्थत्वं युक्तम्। अत एव षष्ठस्यान्तिमत्वमप्ययुक्तम् ॥

## शेषतात्पर्यचन्द्रिका

अपव्याख्याप्रत्याख्यानफलम्

तदेतत्सूत्रव्याख्यानच्छलेन तद्दूषणमेव कृतमिति न सूरिभिरिदं सङ्ग्राह्यम्, बादरायणप्रेमायनेन सर्वज्ञमुनिना प्रदर्शितमेव व्याख्यानमवद्यगन्धविधुरमित्यादरेण शिरसा वहनीयमिति सिद्धम्॥

सुधानुव्याख्यानयोः नानुक्तोपालम्भदोषः

यत्त्वत्र सुधायां—**कात्स्र्न्येनानभिव्यक्तस्वरूपत्वादि**त्यस्य सौत्रपदस्य द्रष्टृभिन्नत्वादिना निर्वक्तुमशक्यत्वादिति परकीयव्याख्यानस्य 'अपर आह' इत्यादिनानुवचनम्, यच्चानुव्याख्याने भेदाभेदादिविकल्पस्यैवानुपपत्तिरिति सविस्तरं दूषणं—तत्तु भट्टभास्करादिरीतिप्राप्तस्य शत्रुशेषस्येव नोपेक्षणं युक्तमित्यभिप्रेत्येति नानुक्तोपालम्भदोषः शङ्कनीयः॥

अत्र परमतव्याख्यादूषणस्वव्याख्याभूषणप्रकारविस्तरस्तु अनुव्याख्यासुधयोर्द्रष्टव्यः॥

विशिष्टाद्वैतिनाम् अधिकरणशरीरम्

केचित्तु षण्णामपि सूत्राणामेकाधिकरणत्वं, सूत्रद्वयेन पूर्वपक्षमवशिष्टैः सिद्धान्तञ्चाङ्गीकृत्यापि चतुर्थस्य सूचकश्चेति सूत्रस्य पञ्चतया पाठं विधायेत्थं व्याचक्षते—एवं कर्मानुरूपगमनागमनादियोगेन जाग्रतो जीवस्य दुःखित्वं ख्यापितम्। इदानीमस्य स्वप्नावस्था[1] परीक्ष्यते। स्वप्नमधिकृत्य श्रूयते **न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः**

[1] स्वाप्नावस्था

शेषतात्पर्यचन्द्रिका

**सृजते। न तत्रानन्दा मुदः प्रमुदो भवन्ति। अथानन्दान् मुदः प्रमुदः सृजते। न तत्र वेशान्ता[1]ः पुष्करिण्यः स्रवन्त्यो भवन्ति। अथ वेशा[2]न्तान् पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता** इति। तत्र संशयः किमियं रथादिसृष्टिः जीवेनैव क्रियते, आहोस्विदीश्वरेणेति। तत्र स्वप्नदृशो जीवस्य सन्निधानात् **स हि कर्तेति** स एव परामृश्यते। जीवस्यापि सत्यसङ्कल्पत्वं प्रजापतिवाक्योदितमिति पूर्वः पक्षः। सिद्धान्तस्तु जीवस्य सत्यसङ्कल्पत्वं स्वाभाविकमपि संसारादशायां परमपुरुषसङ्कल्पात्तिरोहितमिति न जीवस्य स्रष्टृत्वमुपपद्यत इति॥

स्वप्नावस्थाविचारः असंगतः

तदयुक्तम्। दुःखित्वख्यापनेन वैराग्यनिरूपणानन्तरं भक्त्यादिसाधनान्तरनिरूपणस्य सङ्गतत्वेन स्वप्नावस्थापरीक्षायाः सङ्गत्यदर्शनात्। त्वन्मत इव भक्त्यर्थं भगवन्महिमोक्त्या[3] कथमसङ्गतिः? अत एव 'ब्रह्मोपासिसिषोपजननाय ब्रह्मणः फलदायित्वपर्यन्तं वक्तव्यम्' इत्यनन्तरपादोपक्रमभाष्ये एतत्पादप्रतिपाद्यानुवाद इति चेत्, त्वन्मते जाग्रत्प्रपञ्चस्वाप्नप्रपञ्चयोर्वैलक्षण्याभावेन जाग्रत्प्रपञ्चस्रष्टृत्वोक्त्यैव स्वाप्नस्रष्टृत्वस्य सिद्धत्वाद्वैयर्थ्यम्। स्वाप्नस्य सकलेतराननुभाव्यतया, स्वाप्नदृगेकानुभाव्यतया, तत्कालमात्रावसानतया च आश्चर्यरूपत्वान्न तदुक्तिर्व्यर्थेति चेत्, एवंभूतस्यापि सुखदुःखेच्छादेः जाग्रत्प्रपञ्चस्य स्रष्टेश्वरः सिद्ध एव। तथाप्यसत्त्वशङ्काकलङ्कितस्य, अत एवासम्भावितोत्प-

[1]-[2] वेश　　[3] मोक्तौ

शेषतात्पर्यचन्द्रिका

तिकस्य स्वाप्नस्य नेश्वरः स्रष्टा सिद्ध इति चेत्, स्यादपीदं समाधानम्। स्वाप्नस्यासत्त्वपूर्वपक्षेणाधिकरणं व्याख्यायतामेव, न तु जीवकर्तृत्वपूर्वपक्षेण ॥

संशयः सूत्राननुगुणः

संशयोऽपि—मायामात्रमिति सिद्धान्तदर्शनेन स्वाप्नगजादि मायामात्रम् आश्चर्यरूपं न वा इत्येव युक्तः। न तु जीवेनेत्यादिः। तथा सति पूर्वपक्षसूत्रे संध्ये जीवेन सृष्टिरिति, सिद्धान्तसूत्रे च ईश्वरेण सृष्टिरिति च प्रसङ्गात् ॥

पूर्वपक्षः निर्दलः

अत्र पूर्वपक्षोऽपि किं जीवस्य स्वातन्त्र्यमङ्गीकृत्य प्रवर्तते, उत तदनङ्गीकृत्यैव? नाद्यः। हिताकरणादिदोषप्रसक्त्या प्रागेव निरस्तत्वात्। जाग्रदवस्थातोऽधिकं स्वप्नेऽस्वातन्त्र्यानुभवाच्च। न द्वितीयः। सिद्धान्तेऽपि तत्तत्कर्मानुगुणस्वाप्नसृष्ट्यङ्गीकारेण कर्मादिद्वारा भगवदधीनकर्तृत्वस्यानिषिद्धत्वेन पूर्वपक्षत्वायोगात्। स्वभयंकरस्वाप्नमर्कटादिस्रष्टृत्वस्यानुभवविरुद्धत्वेन पूर्वपक्षस्य निर्दलत्वाच्च। अवश्यनिरसनीयस्य सदलस्य मायिमतस्यैव प्रसिद्धस्य पूर्वपक्षत्वसम्भवे तद्विपरीतस्य तदयोगाच्च। **य एषु सुप्तेषु जागर्ति कामं कामम्** इति श्रुतौ जाग्रत्त्वादिनैव विरुद्धधर्मेणेश्वरस्य सन्निहितत्वात् **स हि सर्वस्य कर्ता** इत्यन्यपरामर्शायोगाच्च ॥

जीवस्य सत्यसङ्कल्पत्वोक्तिरनुपयुक्ता

जीवस्यापि सत्यसङ्कल्पत्वादिकं प्रजापतिवाक्योदितमिति पूर्वपक्षशेषस्तु सूत्रानुक्तोऽनुपयुक्तश्च। न हि सत्यसङ्कल्पत्वाभावे जाग्रति कुलालादेः

शेषतात्पर्यचन्द्रिका

स्रष्टृत्वं नोपलभ्यते। यदत्रोक्तम्—उपकरणाद्यभावेऽपि सृष्टिरुपपद्यते सत्यसङ्कल्पत्वादेवेति वक्तुमुपयुक्तम्—इति, तन्न । मनसः वासनादेश्चोपकरणस्याङ्गिकारेण तदभावस्यासिद्धेः । उपकरणाद्यभावनिबन्धनशङ्कायाः सत्यसङ्कल्पत्वमात्रेणासमाधानाच्च । ईश्वरे समाधानं दृश्यत इति चेन्न । तथा सति उपकरणाद्यङ्गीकारवैयर्थ्यात् । लीलया विग्रहग्रहणत्यागयोरस्वीकारापाताच्च ॥

सिद्धान्तोऽप्ययुक्तः

सिद्धान्तोऽप्ययुक्तः । उक्तरीत्या सत्यसङ्कल्पत्वस्योपयोगाभावेन, जीवस्य तदभावेन स्रष्टृत्वाभावसाधनायोगात् । उपकरणाद्यभावस्तु तत्साधकोऽसिद्ध इत्युक्तम् ॥

एतन्मतोक्तसन्ध्यसूत्रार्थपरीक्षा

सूत्रार्थोऽप्ययुक्तः । 'सन्ध्ये सृष्टिर्जीवेन क्रियते स हि कर्ता त्याह हि' इति हि प्रथमस्यार्थः । तत्र जीवेनेत्यध्याहारो दोषः । त्वन्मतेऽपीश्वरेणेत्यध्याहरणीयमिति चेन्न । स्वाप्नस्य सत्यत्वे सृष्टेरेव प्रयोजकत्वेन तत्कर्तृविशेषजिज्ञासावसराभावात् । स हि कर्ता इति वाक्यस्येश्वरपरत्वेन विरुद्धप्रमाणोपन्यासापत्तिश्च ॥

निर्मातृसूत्रार्थपरीक्षा

एतेन—किं चैनमेव[1] जीवं स्वाप्नानामर्थानां निर्मातारमेके शाखिनोऽधीयते—इत्यादिका द्वितीयस्य व्याख्याप्यपव्याख्या । **कामं कामं पुरुषो**

[1] मेवं

## शेषतात्पर्यचन्द्रिका

**निर्ममाण** इत्यादिश्रुतेरीश्वरपरत्वेन विरुद्धप्रमाणोपन्यासापाताच्च । जीवेश्वरभेदस्य त्वन्मते सत्यत्वेनान्यमत इव परिहारायोगाच्च ॥

### मायामात्रसूत्रार्थपरीक्षा

यत्तु तृतीयस्य सिद्धान्तसूत्रत्वेन व्याख्यानम्— तुशब्दात्पक्षो विपरिवर्तते। न जीवेन सृष्टं स्वाप्नमर्थजातम् । अपि तु मायामात्रम् । सकलेतरपुरुषानुभवाविषयं तदेकानुभाव्यं तत्कालावसानमाश्चर्यरूपमर्थजातमीश्वरः सृजतीत्यर्थः । मायाशब्दो ह्याश्चर्यवाची। **जनकस्य कुले जाता देवमायेव निर्मिता** इत्यादौ तथा दर्शनात् । एवंविधाश्चर्यरूपा सृष्टिः सत्यसङ्कल्पस्य परमपुरुषस्यैवोपपद्यते; न जीवस्य, तस्य सत्यसङ्कल्पत्वादियुक्तस्यापि कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् इत्यादि—

तदप्ययुक्तम् । अध्याहारप्रसङ्गात् । मायामात्रमित्यस्यैवेश्वरसृष्टमित्यर्थ इति चेन्न । अपदार्थत्वात् । मायाशब्दो ह्याश्चर्यवाचीति स्वयमेवार्थान्तराभिधानाच्च । अत्यन्तं बुभुत्सितस्य साध्यस्यैवाध्याहारायोगाच्च । मायामात्रमिति पदवैयर्थ्याच्च । ईश्वरसृष्टत्वे हेतुगर्भमिदम्, आश्चर्यरूपत्वादीश्वरेणैव सृष्टं न जीवेनेति प्रतिपादनसंभवादिति चेन्न । कार्त्स्न्येनेति पञ्चम्यन्तस्य वैयर्थ्यापातात् । ज्ञानेच्छाप्रयत्नादेराश्चर्यरूपस्य जीवः स्रष्टेति व्यभिचारोपलब्धेश्च । न हि सकलेतरपुरुषानुभवाविषयं तदेकानुभाव्यं तत्कालावसानं ज्ञानादि नाश्चर्यरूपं, न वा जानातीच्छतीत्यादिकर्तृप्रत्ययप्रयोगविषयो जीवस्तस्याकर्ता भवति । कार्त्स्न्येनानभिव्यक्तसत्यसङ्कल्पत्वादिस्वरूपत्वान्न जीवः

## शेषतात्पर्यचन्द्रिका

स्रष्टेति हेतुत्वेनान्वयसम्भवान्न पञ्चम्यन्तवैयर्थ्यमिति चेन्न। मायामात्रपदस्य हेतुगर्भविशेषणत्वेन त्वयैव व्याख्यातत्वात्। अन्यथा तत्पदवैयर्थ्यापरिहारात्। मायामात्रत्वमीश्वरस्रष्टत्वे साक्षाद्धेतुः। कार्त्स्न्येनेति पञ्चम्यन्तं तु जीव-कर्तृत्वाभावसाधनद्वारा, न साक्षादित्युभयावैयर्थ्यमिति चेन्न। हेतुत्वख्यापक-पञ्चमीवतः पारम्पर्येण हेतुसमर्पकत्वं तद्रहितस्य साक्षादेवेति व्याख्यान-कौशलमायुष्मताम्। मद्रीत्या मायामात्रमिति साध्यनिर्देशः, इतरद्धेतुनिर्देश इति ऋजुमार्गसम्भवे कुसृष्टिमार्गानुसरणायोगाच्च॥

### पराभिध्यानसूत्रार्थपरीक्षा

'सूचकश्चे' ति सूत्रस्य 'मायामात्रं' 'पराभिध्यानादि' ति पूर्वोत्तरसूत्राभ्यां सङ्गतिमपश्यता सम्प्रदायप्राप्तक्रमापह्नवेन स्वानुकूलकाल्पनिक-क्रमेण पञ्चमस्य चतुर्थत्वमाश्रित्य 'स्वाभाविकं चेत् जीवस्य सत्यसङ्कल्पत्वं कथं नाभिव्यज्यत' इत्याशङ्क्याह **पराभिध्यानादिति'** इत्यवतारपूर्वकं 'परमपुरुषसङ्कल्पादस्य स्वाभाविकं रूपमनादिकर्मप्रवाहेण कृतापराधतया तिरोहितम्। ततः परमपुरुषसङ्कल्पादेवास्य बन्धविपर्ययौ संसारमोक्षौ **'को ह्येवान्यात् कः प्राण्यात्' 'परं ज्योतिरुपसंपद्य स्वेन रूपेण'** इत्यादौ श्रूयेते' इति व्याख्यातं **'पराभिध्यानादि'**ति सूत्रम्॥

तत्र संप्रदायप्राप्तक्रमापह्नवद्रोहाचरणेऽपि न सङ्गतिलाभः। अनभि-व्यक्तसत्यसङ्कल्पत्वादिरूपत्वाज्जीवस्य न स्रष्टृत्वमित्युक्तौ स्वाभाविकं चेज्जीवस्य सत्यसङ्कल्पत्वमित्यादिशङ्काया अवसराभावात्। अनभिव्यक्तेत्युक्त्या स्वाभा-

## शेषतात्पर्यचन्द्रिका

विकत्वं सूचितमिति तत्राक्षेपोदयो युक्त इति चेन्न। आदितः कण्ठत एवोक्तमायामयत्वाक्षेपसमाधानं विनानन्तरसूचितस्वाभाविकत्वाक्षेपसमाधानायोगात्। अनादिकर्मप्रवाहेत्यादि तु सूत्राक्षरानारूढं प्रकृतानुपयुक्तं च। विपर्ययपदवैयर्थ्याच्च ॥

देहयोगसूत्रार्थपरीक्षा

यच्च **देहयोगाद्वासोऽपि** इत्यस्य तिरोधानप्रकारमाहेत्यवतार्य सोऽपि तिरोधानभावोऽपि देहयोगाद्वा भवति। वाशब्दो विकल्पार्थः। सृष्टिवेलायां देवमनुष्यादिदेहाकारपरिणताचिद्योगात्, प्रलयकाले तु नामरूपविभागानर्हसूक्ष्मदशापन्नाचिद्योगेनेति व्यवस्थितश्च विकल्पः इति व्याख्यानम्—

तदप्ययुक्तम्। इदानीं साक्षादुक्तस्य बहोरर्थस्य चिन्तनीयस्य सद्भावेऽपि सूचितस्वाभाविकत्वसमर्थनायोक्तस्य तिरोधानस्य प्रकारचिन्ताया अयोगात्। सृष्टिप्रलययोर्देहे सद्भावेन व्यवस्थितविकल्पव्याख्यानस्यायुक्तत्वात्। सूत्रानुक्तपक्षान्तराश्रयेण विकल्पाङ्गीकारे सर्वत्रापि तत्प्रसङ्गाच्च। अत्र वाशब्दश्रवणान्नैवमिति चेन्न। वास इति पदविभागे तदभावात्। किमत्र नियामकमिति चेन्न। प्रकारनिरूपणपरत्वे तृतीयाया एव सङ्गतत्वेन पञ्चम्याः, **तिरोहितमिति** पूर्वसूत्रानुसारात् नपुंसकतच्छब्दस्यैव युक्तत्वेन पुल्लिङ्गतच्छब्दस्य च त्वदीयपदविभागेऽयोगात् ॥

## शेषतात्पर्यचन्द्रिका

सूचकसूत्रार्थपरीक्षा

यच्च सूचकत्वात्स्वाप्नस्य न जीवकर्तृत्वमिति युक्त्यन्तरमनेनोच्यत इति **सूचकसूत्रव्याख्यानम्**—

तदप्ययुक्तम् । ईश्वरनिरपेक्षकर्तृत्वपक्षकक्षीकारेण पूर्वपक्षस्य स्वप्नदशायां जीवस्य निद्रावशत्वानुभवेनानुदयात् । तद्विपर्ययेण पूर्वपक्षस्य च वेदनादाविव जीवस्य भगवदिच्छावशात् स्वाप्नावस्थायामपि अनिष्टसूचकेऽपि कर्तृत्वसंभवेन सूचकत्वयुक्त्या निरासायोगादिति ॥

सूत्रक्रमोऽपि स्फुटमयुक्तः

अत्र सूत्रक्रमोऽप्यन्यमत इव स्फुटमयुक्त एवेत्यलं दुर्बलकलहेन ॥

टीकायां पूर्वपक्षन्यायविवरणव्याख्यानम्

टीकाक्षरार्थस्तु — **पश्चाद्दृष्टयविज्ञानकालदुःखपृथग्भवाः** इति न्यायमालायां **कालन्यायमपेक्षितपूरणेनैतदधिकरणसङ्गतत्वेन** विवृण्वत् **न च कालापेक्षयैव जागरितम्** इति वाक्यम् एवकारो भगवद्व्यावर्तक इति सूचयन् व्याख्यातुमुपक्रमते **न जागरणमीश्वराधीनमिति** ॥

सिद्धान्तन्यायविवरणव्याख्यानम्

**तदेव च** इत्यनेन विवक्षितं **स्वतोऽबोधाख्यैतदधिकरणसैद्धान्तिकन्यायं** विवृण्वत् **अचेतनत्वादेव कालस्य, चेतनान्तरस्याप्यस्वातन्त्र्यात्** इति वाक्यद्वयं सूचनया व्याचष्टे **तस्याचेतनत्वेनास्वातन्त्र्यादिति** ।

## शेषतात्पर्यचन्द्रिका

ततश्च अचेतनत्वादेव कालस्यास्वातन्त्र्यम् । ततश्च कालापेक्षयैव जागरितमिति नेति योजनया प्रथमः पूर्वपक्षः, ईश्वरस्य स्वातन्त्र्येऽपि ततोऽतिरिक्तस्य चेतनान्तरस्य जीवस्यापि हिताकरणादिदोषप्रसक्तिनयरीत्या अस्वातन्त्र्यान्न जीवापेक्षया जागरितमिति योजनया द्वितीयपूर्वपक्षश्च निरस्तो वेदितव्यः ॥

**स्वतोऽबोध** इति पदं—कालः अबोधः अचेतनः, जीवस्तु चेतनोऽपि स्वतः स्वातन्त्र्येण न चेतन इति ; तच्छब्दविवक्षितन्यायो द्वेधा व्याख्येयः । अत एव सामान्येन नपुंसकप्रयोगः ॥ ६ ॥

इति देहयोगाधिकरणम् ॥ ३ ॥

—:o:—

अथ तदभावाधिकरणम् ॥ ४ ॥

## ॥ ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि हि ॐ ॥ ७ ॥

**जाग्रत्स्वप्नाभावः सुप्तिर्नाडीस्थे परमात्मनि । 'आसु तदा नाडीषु सृप्तो[1] भवति', 'सता सोम्य तदा सम्पन्नो भवति' इति श्रुतेः ॥ ७ ॥**

### तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र ईश्वरप्राप्तिसाधनभक्त्यर्थं सुप्तप्राप्यत्वमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । एतदवर्णने न निरतिशया भक्तिः स्यादतोऽसौ वर्णनीयः । स्वप्नजाग्रद्विचारेऽवशिष्टा सुषुप्तिर्विषयः । भगवदधीनत्वे विवादाभावात् किं परमात्मनि नाडीषु वेति सन्देहः । **सता सोम्य तदा सम्पन्नो भवति** इति **यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो[2] भवति** इति श्रुती सन्देहबीजम् ॥

पूर्वपक्षः

परमात्मन्येव सुप्तिर्न नाडीष्विति पूर्वः पक्षः । परमात्मनोऽन्यत्रावस्थाने सुप्तस्य दुःखित्वप्रसङ्गात्, जाग्रत्स्वप्नयोरिव । न च मुक्तवत्सुप्तस्य दुःखमस्ति । तदा सुखमात्रानुभवात् । न च तत्र प्रमाणाभावः । सुखमहमस्वाप्समित्युत्तरकालीनस्मृतेः । न चाननुभूतं स्मर्यते । न च वाच्यं दुःखाभावः स्मर्यते न सुखमिति । तदनुभवाभ्युपगमे किमपराद्धं सुखेन ।

1 2 सुप्तो

## तत्त्वप्रकाशिका

दुःखाभावोऽनुमीयते न च स्मर्यत इति चेन्न । पक्षभूतावस्थास्मरणाभावेन तदनुदयात् । आत्मपक्षीकारेऽपि प्रतिज्ञाविशेषणतया अवस्थास्मरणस्यावश्यं-भावित्वात् । अतः सुषुप्तौ सुखैकानुभवात्परमात्मन्येव सुप्तिर्न नाडीष्वित्यतः तच्छ्रुतेरप्रामाण्यमिति ॥

सिद्धान्तः

सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे तदिति । सुप्तिर्जीवस्य नाडीषु भवति ॥ न चैवं दुःखप्राप्तिः, परमात्मनि सुप्त्यङ्गीकारात् । न चैकस्योभयत्र सुप्तिर्विरुद्धा । नाडीस्थपरमात्मनि सुप्त्यङ्गीकारेणोभयोपपत्तेः । परमात्मन्येव किं न स्यात्सुप्तिः किं नाडीस्थविशेषणेनेति चेत् न । उभयविधश्रुतेरन्यथानुपपत्तेः । एवं च सति तदुपपत्तेः । एवं चाभ्युपगमेनोपपन्नेन प्रमाणभूत-श्रुतिद्वयव्यवस्थोपपत्तौ तदनभ्युपगमे सर्वत्राप्यव्यवस्थैवेत्यतिप्रसङ्ग इति भावः ॥

सुप्तः[1] प्राप्तः । अतः परमात्मनो नाडीस्थस्य सुप्तप्राप्यत्वमाहात्म्य-वत्त्वाद्युक्ता तत्र भक्तिरिति सिद्धम् ॥ ७ ॥

—:o:—

[1] सुप्त:

## शेषतात्पर्यचन्द्रिका

विवरणपेटिका

## ॥ ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि हि ॐ ॥ ७ ॥

पेटिकानन्तरसङ्गती

अत्र नियमनादौ सन्देहाभावात्, आदिशब्दान्तर्गतो मोक्षो विवरणीयः। तदत्र अवस्थाप्रसङ्गेन सङ्गतत्वात् **तदभाव** इति परामर्शसौकर्याच्च क्रियत इति पेटिकासङ्गतिः ॥

युक्तं पूर्वत्र अहं करोमि इत्यस्य स्वातन्त्र्यप्रत्यक्षस्य देहाभिमानलक्षणदोषनिमित्तत्वेन भ्रान्तित्वं, सुषुप्तिकालीनसुखप्रत्यक्षस्य तदभावान्न भ्रान्तित्वं युक्तमिति वा, **स एव जागरिते स्थापयति** इत्याद्यप्रतिपक्षश्रुतिवशात् जाग्रदादेरक्ष्यादिस्थभगवदधीनत्वसिद्धावपि, **आसु तदा नाडीषु सृप्तो**[1] **भवति** इति श्रुत्या सुप्तेर्न नाडीस्थभगवदधीनत्वं सिध्यति **सता सोम्य**[2] **तदा सम्पन्नो भवति** इति प्रतिपक्षश्रुतेरिति वोत्थानादनन्तरसङ्गतिः ॥

पूर्वपक्षायुक्तताशङ्का

नन्वत्र कथं पूर्वःपक्षः? परमात्मन्येव सुप्तिः, न नाडीष्विति पूर्वपक्षस्य फलाभावात्। सुप्तप्राप्यत्व[3]महिम्नः प्रापकस्य अस्य पूर्वपक्षस्य सिद्धान्ते निराकरणायोगाच्च। न च श्रुतेरप्रामाण्यं फलमिति वाच्यम्। असङ्गतत्वात्। नाडीष्वेव सुप्तिर्न परमात्मनीति पूर्वपक्षेऽपि श्रुत्यप्रामाण्यसिद्धेश्च। न च

[1] सुप्तो　[2] सौम्य　[3] प्राप्त

## शेषतात्पर्यचन्द्रिका

परमात्मन्येवेति पूर्वपक्षस्य नाडीस्थत्वमहिम्नो विघातकत्वात् सङ्गतिः फलं चास्तीति वाच्यम्। **सुप्तप्राप्यत्वमहिम्नो वर्णनात्** इति सङ्गतिटीकाविरोधात्॥ [1]तदा हि 'नाडीस्थत्वमहिम्नो वर्णनादि'ति स्यात्। **एतद्वर्णने न निरतिशया भक्तिः स्यात्** इत्युत्तरटीकाविरोधाच्च। नाडीस्थत्वमाहात्म्यस्य भक्तिमात्र-साधकत्वेऽपि निरतिशयभक्तिसाधकत्वायोगात्॥

न च विकल्पः समुच्चयो वेति पूर्वपक्षोऽपि युक्तः। **परमात्मन्येव** इति टीकाविरोधात्। **श्रुतेरप्रामाण्यम्** इति फलाभिधानविरोधाच्च॥

अत एवानध्यवसायपूर्वपक्षोऽप्ययुक्तः इति चेत्—

उक्तचतुर्विधपूर्वपक्षस्य स्थापनम्

अत्रोच्यते—अनध्यवसायेन तावत्पूर्वपक्षो युज्यते। भाष्योदाहृतश्रुति-द्वयस्यापि निरवकाशत्वेन प्राबल्यदौर्बल्यविवेकायोगेन अध्यवसायाभावस्य न्यायप्राप्तत्वात्। परमात्मन्येवेति वा, नाडीष्वेवेति वा, परमात्मनि वा नाडीषु वेति वा, परमात्मनि च नाडीषु चेति वेति पक्षाणामन्यतमनिर्धारणाभावे भगवतः सुप्तप्राप्यत्वमहिम्नोऽसिद्ध्या पूर्वपक्षे फलसङ्गत्योः सम्भवात्। अर्था-प्रमापकत्वमेवाप्रामाण्यमिति श्रुतेरप्रामाण्यं च युक्तम्। **परमात्मन्येव सुप्ति-र्न नाडीषु** इति टीकोक्तिस्तु न निर्धारणाभिप्राया। किन्तु बाह्यपदार्थाज्ञानेन पुरीतन्नाडीप्रवेशस्य सर्ववादिसिद्धत्वेन न तत्रोपपादनापेक्षेति तत्प्रतिपक्षभूतो

---

[1] तथा

### शेषतात्पर्यचन्द्रिका

नाडीष्वेव न परमात्मनीत्येवंरूपोऽपि पूर्वः पक्ष ऊह्यतामित्यभिप्रायः। अत एव **तच्छ्रुतेरप्रामाण्यम्** इति सामान्येनाह। अन्यथा **'आसु तदा नाडीषु' इति श्रुतेः** इत्यवक्ष्यत॥

अत एव विकल्पपक्षोऽपि युक्तः। यस्मिन् पक्षे नाडीष्वेव सुप्तिः, तस्मिन् भगवतः सुप्तप्राप्यत्वालाभात् इति फलसङ्गती च स्तः। नित्यवच्छ्रवण-बाधनमेव श्रुतेरप्रामाण्यमिति न तद्वाक्यविरोधोऽपि॥

अत एव समुच्चयपक्षोऽपि युक्तः। नाडीतुल्यकक्ष्यतया परमात्मनि सुप्त्यङ्गीकारे न तस्य निरतिशयमाहात्म्यवत्त्वमिति सङ्गतिसम्भवात्। निरपेक्ष-सुप्त्यधिकरणत्वप्रतीतिबाधात् समुच्चये तयोः श्रुत्योरप्रामाण्यं च युक्तम्॥

यद्वा निर्धारणेनैव पूर्वः पक्षः **परमात्मन्येव सुप्तिर्न नाडीषु** इति। अस्य नाडीषु स्थिते परमात्मन्येव सुप्तिर्न, किं तु केवले परमात्मनि। तथा च केवल-परमात्मनः सुप्तप्राप्यत्वलाभेऽपि नाडीस्थपरमात्मनस्तदलाभात् सङ्गतिः फलं च लभ्यते। न चैवं पूर्वपक्षे परमात्मनः सुप्तप्राप्यत्वाङ्गीकारेण नाडीस्थत्वमेव प्रतिक्षिप्तमिति नाडीस्थत्वसमर्थनमेवाधिकरणार्थः स्यादिति वाच्यम्। सुप्त-प्राप्यत्वमहिम्नो वर्णनेन अवस्थाप्रसङ्गसन्निधापितसुप्त्यनुबद्धविचारस्य सङ्गतत्व-वत् नाडीस्थत्वविचारस्येह स्फुटं सङ्गत्यप्रतीतेः। अत एव **अतः परमात्मनो नाडीस्थस्य सुप्तप्राप्यत्वमाहात्म्यवत्त्वात्** इति सिद्धान्तोपसंहारटीकापि दृश्यते। तदानुगुण्याय च **नाडीस्थस्य सुप्तप्राप्यत्वमहिम्नो वर्णनात्** इति सङ्गतिटीकापि योज्येति न किंचिदनुपपन्नम्॥

## शेषतात्पर्यचन्द्रिका

अत्र निर्धारणेन पूर्वपक्षस्त्वित्थम्—न नाडीस्थे परमात्मनि जीवस्य सुप्तिः, प्रमाणाभावात्। **नाडीषु सुप्तो भवति** इति वाक्यस्य केवलनाड्यामेव सुप्तिपरत्वेन तत्स्थपरमात्मप्रत्यायकत्वाभावात्। **सता सम्पन्नः** इत्यस्य च परमात्मप्रत्यायकत्वेऽपि नाडीस्थपरमात्मा[1]प्रत्यायकत्वात्। न च **नाडीषु** इति वाक्ये 'स्थिते परमात्मनि' इत्यध्याहारेण विवक्षितार्थसिद्धिरिति वाच्यम्। **सता सम्पन्नो भवति** इति वाक्यवैयर्थ्यात्। न चोभयप्रामाण्यनिर्वाहायात्र तात्पर्यं कल्प्यमिति वाच्यम्। अन्यतराप्रामाण्यस्यैवास्माकमभिलषितत्वात्। न च विनिगमकाभावादन्यतराप्रामाण्यानिश्चयः। नाडीवाक्यस्यैवाप्रामाण्योपपत्तेः। परमात्मप्राप्तेरिव नाडीप्राप्तेरवश्यापेक्षितत्वाभावात्। तथा हि — सुप्तस्य सुखित्वमेव मुक्तवत्, न दुःखित्वमित्यस्ति नियमः। 'सुखमहमस्वाप्सम्' इति प्रतीतेः। न चासौ भ्रान्तिः। बाधकाभावात्। न चेयं प्रतीतिरनुभवः। अस्वाप्समित्यतीतत्वोल्लेखित्वात्। न च दुःखाभावस्मृतिर्वा दुःखाभावानुमितिर्वा भविष्यतीति वाच्यम्। सुखोल्लेखिस्मृतेः दुःखाभावग्राहित्वे प्रमाणाभावात्। अनुमितिरपि, विमता सुप्तिः दुःखशून्या सुप्तित्वात्, तत्कारणशून्यत्वाच्च पूर्वतनसुप्तिवदिति नावस्थापक्षिका युज्यते। तत्र पक्षभूतावस्थास्मरणमस्ति न वा। नेति पक्षे धर्मिज्ञानाभावान्नानुमितिः स्यात्। आद्येऽनुभवाभावान्न स्मरणं युक्तम्। सुषुप्तिकाले अस्त्यवस्थानुभव इति चेन्न। त्वयानङ्गीकारात्। अङ्गीकारे वा तुल्यन्यायेन सुखस्याप्यनुभूतिसम्भवेन तज्जन्यायाः प्रकृतप्रतीतेः स्मृतित्वसम्भवेन अनुमिति-

[1] मात्मप्रत्यायकत्वाभावात्

## शेषतात्पर्यचन्द्रिका

त्वाङ्गीकारायोगात् । नापि, सुप्तो देवदत्तः दुःखरहितः सुप्तत्वात् तत्कारणरहितत्वाच्चेति विशिष्टात्मपक्षिका युक्ता । विशेषणतया अवस्थास्मरणावश्यंभावित्वात् । नापि देवदत्तः दुःखरहितः इति शुद्धात्मपक्षिका । यतो जाग्रतोऽपि पक्षत्वापत्त्या बाधार्थान्तरते स्याताम् । ननु इदानीं सुखकारणस्य स्रक्चन्दनभोगादेरिन्द्रियोपरमेणायोगेन सुखस्यानुत्पत्तिरिति चेन्मैवम् । स्वरूपसुखस्यैव सत्त्वात् । न च तदनुभावकाभावः, ईश्वरस्य तथात्वे च जाग्रत्यपि तदनुभवापत्तिरिति वाच्यम् । किं जाग्रत्यपि यावतः स्वरूपसुखस्यानुभव आपाद्यते, उत कस्यचित् ? नाद्यः । आसंसारमज्ञानावृतत्वेन तदयोगात् । न च सुप्तावपि तदभावापत्तिः । परमात्मरूपविशेषसम्बन्धेन आवरणसद्भावेऽपि कस्यचिदेवानुभवाङ्गीकारेण यावतोऽनुभवाभावेनेष्टत्वात् । न द्वितीयः । भारावरोहादौ तदङ्गीकारेणेष्टत्वात् । सुषुप्तौ रूपविशेषसम्बन्धस्यैव सुखविशेषव्यक्तिहेतुत्वाङ्गीकारेण[1] जाग्रत्प्रतिबन्धयोगाच्च । न च सात्त्विकानां स्वरूपसुखसद्भावेऽपि तामसानां तदभावेनानुभवायोग इति वाच्यम् । तेषां स्वरूपसुखाभावेऽपि प्राज्ञसन्निधानमहिम्ना तात्कालिकसुखोत्पत्तिसम्भवेन तदनुभवसम्भवात् । उपरतस्यापि मनसः प्राज्ञसन्निधानमहिम्ना उपादानत्वस्य, तत्साक्षिण एव तदनुभवसाधनत्वस्य च सम्भवात् । न च तत्साक्षिणः मिथ्यात्वप्रत्यायकत्वनैयत्यम् । अस्वरूपे स्वरूपत्वप्रत्यायकत्वेन तन्नैयत्योपपत्तेः । तदेवं परमात्मप्रवेशाभावे सुखानुभवायोगेन तच्छ्रुतिः प्रबलेति तद्विरोधान्नाडीश्रुतिरप्रमाणम् ॥

---

[1] रूपविशेषस्य व्यक्तिहेतु

## शेषतात्पर्यचन्द्रिका

ततश्च तत्सामान्यात् भक्तिश्रुतिरपि तथैवेति वा, नाडीस्थत्वमहिम्नोऽभावान्न निरतिशया भक्तिः कर्तव्येति वा पूर्वपक्षे फलफलिभावो बोद्धव्यः ॥

सिद्धान्तः

सिद्धान्तस्तु — अर्धं तावदवसितं भारस्य, त्वयैव परमात्मनि सुप्त्यनङ्गीकारे बाधकस्योक्तत्वात् । नाडीश्रुतेः नाडीष्वपि सुप्त्यङ्गीकार्यैव । न चैकस्य सुप्तिर्विरुद्धोभयत्र । नाडीस्थपरमात्मनि सुप्त्यङ्गीकारेणाविरोधात् । भवितव्यं हि श्रुतिद्वयस्यापि प्रामाण्येन । अपौरुषेयत्वात् । तच्च न समुच्चयेन समकक्ष्यतया नाडीपरमात्मनोः सुप्त्यधिकरणत्वस्वीकारेण निर्वहति । एकस्योभयत्र सुप्त्ययोगात् । नापि विकल्पसमुच्चयाभ्याम् । नित्यवल्लक्षणनिरपेक्षश्रवणयोरयोगात् । नापि नाड्याः विशेष्यत्वाश्रयणेन । साक्षाद्भगवत्सम्बन्धाभावेन सुखमात्रानुभवो न स्यात् । तथा च नाडीविशेषणकपरमात्माधिकरणत्वमेव सुप्तेर्वाच्यम् । अत एव '**व्रीहिभिर्यजेत**', '**यदाग्नेयोऽष्टाकपालो....भवति**' इति वाक्यद्वयप्रामाण्यनिर्वाहाय विकल्पसमुच्चयादिपक्षानाश्रयणेन व्रीहिप्रकृतिकपुरोडाशो द्रव्यमित्याश्रितम् — इति ॥

सूत्राक्षरार्थः

सूत्रार्थस्तु — तच्छब्देन पूर्वप्रकृतजाग्रत्स्वप्नौ विवक्षितौ । तथा च **तदभाव** इति सुप्तिरिति पर्यवस्यति । **नाडीषु** इत्यनन्तरम् **आत्मनी**ति सम्बन्धः । नेदं समानाधिकरणं, बाधात् । तथाच **स्थिते**[1] इति लभ्यते । **तथाविधोभय-**

1 अध्याहारः

## शेषतात्पर्यचन्द्रिका

**श्रुतेः** । परस्परनिरपेक्षतया प्रतीयमानयोरपि विशेषणविशेष्यभावो व्रीहि-पुरोडाशयोः प्रसिद्ध एवेति हशब्देनाहेति ॥

एतदधिकरणस्य जन्मादिसूत्रविवरणरूपत्वम्

तथा चादीदंशब्दयोर्नाडीस्थभगवद्रूपसंश्लेषोऽप्यर्थो ग्राह्य इति फलितम् ॥

टीकायां पूर्वपक्षन्यायविवरणव्याख्यानम्

टीकाक्षरार्थस्तु—**कालदुःखपृथग्भवाः** इत्यत्रोक्तदुःखन्यायम् एतद-धिकरणपूर्वपक्षसङ्गतत्वेनापादकसाध्यप्रदर्शनपूर्वकं विवृण्वत् **न च परमात्म-नोऽन्यत्रावस्थाने दुःखित्वप्राप्तेः नाडीषु सुप्तिर्न भवति** इति वाक्यं व्याचष्टे **परमात्मनोऽन्यत्रेति** ॥

टीकायां सिद्धान्तन्यायविवरणव्याख्यानम्

**अमानक्लृप्तिसन्मान**-इत्यादौ तृतीयोद्दिष्टम् **अमानक्लृप्तिन्यायं** चतु-र्थाधिकरणसिद्धान्तसङ्गतत्वेन तर्कपरतया विवृण्वत् **उभयस्वीकारोपपत्तौ मानस्य क्लृप्त्यकारणमित्यनवस्थितिदोषादतिप्रसङ्गात्** इति वाक्यं —मानस्य क्लृप्तिकरणं युक्तमिति वाक्याध्याहारम्, उभयस्वीकारोपपत्तावित्यस्या-वृत्तिं चाभिप्रेत्य व्याख्यातुमवतारयति **न चैकस्योभयत्रेति** ॥

अनेन, **मानस्य** श्रुतिद्वयस्य नाडीस्थपरमात्मनि सुप्तिरित्यभिप्राय-क्लृप्तिकरणं, श्रुतिद्वयस्यैवमभिप्रायकल्पनमिति यावत्, युक्तमेव; एवमङ्गी-

शेषतात्पर्यचन्द्रिका

कारे—**उभयस्वीकारोपपत्तौ** इति निमित्तसप्तमी—उभयत्र सुप्तिस्वीकारोपपत्तेरित्यर्थ उक्तो भवति ॥

उभयस्वीकारोपपत्तौ मानस्य क्लृप्त्यकारणम् इति वाक्यं वर्णकान्तरेण व्याख्यातुं शङ्कते **परमात्मन्येवेति**। स्यादयम् एकस्योभयत्र सुप्तिविरोधपरिहारः, यदि नाडीपरमात्मनोर्विशेषणविशेष्यभावः श्रुतिद्वयस्याभिप्राय इति कल्पनं स्यात्। तदेव नास्ति, प्रमाणाभावादिति भावः। **उभयस्वीकारोपपत्ता-विति**[1] वदता पक्षान्तरे तदनुपपत्तिः सूचितेत्यभिप्रेत्य व्याचष्टे **उभयविध श्रुतेरिति**[2] ॥

अनेन उभयविधश्रुतिप्रामाण्यान्यथानुपपत्तिरेव प्रमाणमिति फलितम् ॥

ननु मास्त्वेवमभिप्रायकल्पनम्; श्रुतिद्वयप्रामाण्यानुपपत्तिस्तु नानिष्टेत्याशङ्कायां तत्रातिप्रसङ्गप्रतिपादनमिति यथाश्रुतं समस्तं वाक्यं व्याचष्टे **एवं चाभ्युपगमेनेति**। अनेन **उभयस्वीकारोपपत्तौ** उभयत्र सुप्तिस्वीकारेणार्थव्यवस्थोपपत्तावपि, **मानस्य** नाडीश्रुतेस्सच्छ्रुतेश्च, नाडीस्थपरमात्मनि सुप्तिरित्यर्थक्लृप्त्य**कारणं** तथार्थव्यवस्थानभ्युपगमश्चेदिति यावत्, तथा **उभयस्वीकारोपपत्तौ** स्वीकारेण एवमभ्युपगमेन उभयस्य श्रुतिद्वयस्य प्रामाण्योपपत्तौ **मानस्य क्लृप्त्यकारणं** प्रामाण्यानभ्युपगमश्चेदिति यावत्, तर्हि इति अनेन प्रकारेण सर्वत्रापि व्रीहिपुरोडाशस्थलेऽप्यविशेषादेकस्य यागस्य व्रीहिसाध्यत्व-

[1] पपत्तेरिति [2] उभयश्रुतेरिति

## शेषतात्पर्यचन्द्रिका

पुरोडाशसाध्यत्वोभयस्वीकाराभावापत्त्या अर्थव्यवस्था न स्यादिति व्रीहिपुरोडाशवाक्ययोरप्यप्रामाण्यं स्यादित्यतिप्रसङ्गादित्यर्थ इति सूचितं भवति ॥

श्रुत्यनुसारेण सुप्तप्राप्यत्वमेतदधिकरणार्थः

ननु सूत्रानुसारात् सुप्त्यधिकरणत्वमहिम्नो वर्णनादिति सङ्गतिटीकया भवितव्यम्। न तु सुप्तप्राप्यत्वेतीत्याशङ्क्य **आसु तदा नाडीषु सृप्तो भवति** इति श्रुत्यनुसारेण तथोक्तमित्यभिप्रेत्य श्रौतं सृप्तपदं व्याचष्टे **सृप्तः प्राप्त** इति। सृप्लृ गताविति धातोरिति भावः ॥

इति तदभावाधिकरणम् ॥ ४ ॥

अथ प्रबोधाधिकरणम् ॥ ५ ॥

## ॥ ॐ अतः प्रबोधोऽस्मात् ॐ ॥ ८ ॥

**यतस्तस्मिन् सुप्तिः। 'एष एव सुप्तं प्रबोधयत्येतस्माज्जीव उत्तिष्ठत्येष प्रमातपै परम' इति कौण्डिन्यश्रुतिः॥८॥**

संगत्यादि

अत्रेश्वरप्राप्तिसाधनभक्त्यर्थं तस्य सुप्तप्रबोधकत्वमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः। भगवतः सुप्तप्रबोधकत्वमहिमाभावे न तस्मिन्निरतिशय-भक्तिरुत्पद्येत, अतोऽसौ वर्णनीयः। प्रकृतसुप्तप्रबोधो विषयः। भगवदधीनो न वेति सन्देहः। सर्वस्य तदधीनत्वोक्तिर्विशेषानुक्तिश्च संदेहबीजम्॥

पूर्वपक्षः

नेश्वरैकाधीनः प्रबोध इति पूर्वः पक्षः। प्रबोधकारणानां भेरीताडनादी-नामपि दर्शनात्। न च तेषामकारणत्वे हेतुरस्ति, येन जानीमस्तत्प्रतीतिर्भ्रान्ति-रिति। अतः परमात्मनः सुप्तप्रबोधकत्वाभावान्न महैश्वर्यमिति॥

सिद्धान्तः

सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे **अत इति**। सुप्तप्रबोधोऽप्यस्मात् **परमात्मन एव** भवति। जीवस्य तस्मिन्नेव सुप्तत्वस्य प्रागुक्तत्वात्। न हीश्वरेण स्वान्तर्निवेशितस्तत्प्रेरणामन्तरेणोद्बोद्धुं शक्नोतीति भावः। दृश्यन्ते भेरीताडना-दीनामपि प्रबोधहेतुत्वं तदनन्तरं प्रबोधदर्शनात्। अतः कथं भगवदेकाधीन इत्यत आह **एष इति**। सावधारणश्रुतिविरोधान्निमित्तमात्रविषयं प्रत्यक्षमिति भावः। अतः सुप्तप्रबोधकत्वेनातिमाहात्म्यवतो हरेर्भक्तिर्युक्तेति सिद्धम्॥८॥



Courtesy K Seetharama Rao Dasaprasada

श्रीमद्व्यासराजतीर्थाः

यावन्तो विषया हृता भुजबलं यावत्सपत्ना जिता
यावन्तश्च वदान्यता करसरोजाताश्रया यावती ।
यावन्त्यो धनसम्पदो गुणगणो यावांश्च यावद्यशः
तावत्कर्तुमियेष पूजनमसौ श्रीव्यासभिक्षोर्नृपः ॥

भो भो मत्सरकुत्सितान्सुमतयो दुर्वैदुपीगर्वितान्
आकाशादवतारभागिन इवाहंयून्समाढौक्य किं ॥
श्लाघाकम्पनमेकमेव शिरसः श्रीव्यासयोगीशितुः
मेरूणां शतमर्हति क्षितितले विद्यासु विद्यावताम् ॥

## शेषतात्पर्यचन्द्रिका

विवरणपेटिका

# ॥ ॐ अतः प्रबोधोऽस्मात् ॐ ॥ ८ ॥

सङ्गतिः

अत्र पूर्वोक्ता नाडीस्थपरमात्मनि सुप्तिर्न युक्ता, ईश्वरेण स्वान्तर्निवेशितस्यान्येन प्रबोधायुक्तेः इति पूर्वाधिकरणसिद्धां परमात्मनि सुप्तिमुपजीव्य प्रवर्तनाद्वा; यथा स्वप्नतिरोधानं जागरणं च ज्ञानकालयोरचेतनत्वेन तदधीनत्वायोगेन श्रुतत्वेन च भगवदधीनं, यथा वा नाडीस्थे परमात्मनि सुप्तिः तथाविधश्रुतिवशादेवाङ्गीकर्तव्या, एवं सुप्तिप्रबोधोऽपि तस्मादेवाङ्गीकर्तव्य इति अतिदेशेन प्रवर्तनाद्वा अनन्तरसङ्गतिः ॥

विषयः

नन्वत्र विषयो न लभ्यते सुप्तिप्रबोधः सुप्तिरेव नेति जागरणस्वप्नतिरोधानानामन्यतम एवेति तेषाञ्च जाग्रदधिकरणे स्वप्नाधिकरणे तिरोधानाधिकरणे च विचारितत्वादिति चेत्, अत्रोच्यते। नाडीस्थभगवद्रूपसंश्लेषः सुप्तिः। तद्विश्लेषः प्रबोधः। स च न पूर्वाधिकरणेषु विचारितः। तत्र विचारितानां जाग्रत्स्वप्नतदुच्छेदप्रतीतीनां दक्षिणाक्ष्यादिस्थानविशेषावस्थितिरूपाणां वा प्राज्ञविश्लेषात्मकत्वाभावात्[1] ॥

संशयः

अत एव तत्संश्लेषात्मकसुप्तिविचारानन्तरं तत्संगतत्वात् विश्लेषात्मकः सुप्तिप्रबोधः भगवतोऽन्यस्मादेव, उत भगवत एवेति विचार्यते। तदर्थं भेरीताडनादीनि तत्कारणं भवितुं योग्यानि न वेति चिन्तनीयम् ॥

1 विश्लेषकत्वाभावात्।

## शेषतात्पर्यचन्द्रिका

पूर्वपक्षः

तत्र—सुप्तेः[1] प्रबोधः भेरीताडनादिजन्य एव। एतदन्वयव्यतिरेकदर्शनात्। न चेश्वरोऽपि कारणमस्त्विति वाच्यम्। तेषु सत्सु ईश्वरव्यतिरेकेण प्रबोधविलम्बादर्शनात्। तथापि कल्पने कल्पनागौरवम्। न च जाग्रदाद्यधिकरणन्यायेन अन्यानवकाशः। स एव जागरिते स्थापयति इत्यादिनिरवकाशश्रुतिविरोधेन कालान्वयव्यतिरेकदर्शनरूपस्य प्रत्यक्षस्य भ्रान्तित्वकल्पनेऽपि इह अद्यापि स्पष्टप्रमाणानुपन्यासेन भेरीताडनाद्यन्वयव्यतिरेकदर्शनस्य भ्रान्तित्वायोगात्। अस्तु वा क्वचित्सुप्तप्रबोधे भेरीताडनादिकारणासंनिहिते ईश्वरो हेतुः। न तत्सन्निहितेऽपि प्रबोधे, कल्पनागौरवादिति -पूर्वः पक्षः॥

सिद्धान्तः

सिद्धान्तस्तु—

**सुप्तप्रबोधे सर्वत्र भगवान् कारणं भवेत्।**
**'एष एवे'ति वाक्येन नान्यत्कारणमिष्यते॥**

'य एष एव सुप्तं[2] प्रबोधयति' इति निरवकाशश्रुत्या क्वचिद्भेरीताडनादेः कारणत्वग्राहिप्रत्यक्षस्य भ्रान्तित्वात्। किं च यदि तद्विश्लेषरूपः प्रबोधोऽन्यकृतस्स्यात् तदविशेषात् तत्संश्लेषरूपः स्वापोऽप्यन्यकृत एव स्यात्। ईश्वरेण स्वान्तर्निवेशितश्चासौ साधनान्तरसहस्रेणापि तदिच्छामन्तरेण विश्लिष्यत इत्यस्यायोगादिति॥

---

[1] सुप्तिप्रबोधः [2] 'य एष सुप्तं' 'य एनं सुप्तं'

## शेषतात्पर्यचन्द्रिका

सूत्राक्षरार्थः

सूत्रार्थस्तु — यतः पूर्वाधिकरणे तत्संश्लेषात्मिका सुप्तिः तस्मिन्नेवेति साधिता, अतः तद्विश्लेषात्मकः **प्रबोधोऽप्यस्मादेव**। न हीश्वरेण स्वान्तर्निवेशितस्तत्प्रेरणामन्तरेणोद्बोद्धुं शक्नोतीति ॥

एतदधिकरणस्य जन्मादिसूत्रविवरणरूपत्वम्

तथा च जन्मादिसूत्रस्थस्य षष्ठ्यन्तस्य इदंशब्दस्य आदिशब्दस्य च न केवलमुक्त एवार्थः, किन्तु नाडीस्थभगवद्विश्लेषोऽप्यर्थ इति फलितम् ॥

अत्र उभयेषामधिकरणम्

अत्रोभयेऽपि **तदभावो नाडीष्वित्यादिद्विसूत्रीम्** एकमधिकरणं विधाय तत्राद्ये सूत्रे अपपाठायातचशब्दे दत्तदृष्टयः समुच्चयं सिद्धान्तयन्त इत्थं व्याचक्षते—

तत्रैताः सुपुप्तिविषयाः श्रुतयो भवन्ति — '**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीपु सुप्तो**[1] **भवति**' '**ताभिः प्रत्यवसृप्य पुरीतति शेते**' '**तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन**[2] **पश्यत्यथास्मिन् प्राण एवैकधा भवति**' '**य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते**' '**सता सोम्य**[3] **तदा सम्पन्नो भवति स्वमपीतो भवति**' '**प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्**' इत्याद्याः॥

---

[1] सृप्तो    [2] न किञ्चित्पश्यति    [3] सौम्य

शेषतात्पर्यचन्द्रिका

तत्र किं नाडीपुरीतत्[1]परमात्मानः विकल्पेन जीवस्य सुषुप्तिस्थानं किं वा समुच्चयेनेति सन्देहे,

प्रत्येकं सप्तमीश्रुत्या नैरपेक्ष्यप्रतीतितः
आधारत्वेन चैकार्थ्यान्नाड्यादीनां विकल्पनम् —

इति प्राप्ते,

समुच्चयं च स्वीकृत्य विकल्पाश्रयणाद्वरम्।
समुच्चयोऽस्तु सर्वत्र न विकल्पोऽष्टदोषतः ॥

न तावन्नैरपेक्ष्यं सप्तमीभिरवगमयितुं शक्यम्। ताभिः प्रत्यवसृप्येत्यादि सापेक्ष्यस्य श्रुतत्वात्। ताभिरिति पुरीतति चेति भिन्नविभक्तिनिर्देशात्, एकार्थत्वाभावेन व्रीहियववद्विकल्पायोगात्, नाडीपुरीततोः समुच्चय एवाङ्गीकार्यः। सति चैवं विकल्पनिबन्धनाष्टदोषासंस्पर्शो भवति। यद्यपि 'आसु तदा नाडीषु सुप्तो भवति' 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इत्यादौ नाडीब्रह्मणोरेकविभक्तिनिर्देशेन एकार्थत्वात् व्रीहियववद्विकल्प एव न्याय्यः। तथापि सुप्तिप्रकरणाम्नातेषु नाडीपुरीततोस्समुच्चयः, नाडीब्रह्मणोस्तु विकल्प इत्याश्रयणाद्वरं सर्वत्र समुच्चयाश्रयणम् ॥

यद्यपि व्रीहिभिर्यवैरिति चैकविभक्तिनिर्देशेन पुरोडाशनिर्वृत्तिरूपप्रयोजनैक्यमेव। 'आसु तदा' 'तस्मिञ्छेते' इति चैकविभक्तिनिर्देशेन सुप्तिनिर्वृत्तिरूपस्य वा आधाराधेयभावरूपस्य वा प्रयोजनस्यैक्यादेकार्थत्वमवगम्यत

[1] पुरि

शेषतात्पर्यचन्द्रिका

इति विकल्प एव न्याय्यः प्रतिभाति। तथाप्येकविभक्तिनिर्देशमात्रेण नैकार्थ्यं प्रत्येतुं शक्यम्। 'प्रासादे शेते', 'पर्यङ्के शेते' इत्येवमादिषु सत्यप्युभयत्र सप्तमीनिर्देशे प्रासादपर्यङ्कयोः पर्यङ्कधारणसुषुप्तधारणरूपप्रयोजनानेकत्वेन ऐकार्थ्यविकल्पयोरनाश्रयणादेकविभक्तिनिर्देशस्य ताभ्यां व्याप्त्यसिद्धेः। तद्वदेवेहापि समुच्चय एव न्याय्यः। सुप्तये ब्रह्म गच्छन् नाडीभिर्गच्छतीत्यङ्गीकारेण[1] नाडीनां करणत्वेन ब्रह्मवदाधारत्वायोगेन ऐकार्थ्याभावस्य स्फुटत्वाच्च। नाडीष्विति सप्तमी कथमिति चेत्, परम्परयाप्याधारत्वस्य स्थितत्वात्। यो हि गङ्गया सागरं गच्छति, गत एव स गङ्गायां भवति ॥

यद्वा ब्रह्मण्येव सुप्तिर्जीवस्य न नाडीषु। **नाडीषु सृप्तो भवति** इति चार्थवादः। **तं न कश्चन पाप्मा स्पृशति** इति ब्रह्मण इव, नाडीनां स्तुत्यवगमात्। यद्यपि नाड्यः, पुरीतत्, ब्रह्म चेतीमानि त्रीणि निरपेक्षाणि तुल्यवत् सुषुप्तिस्थानानि प्रतीयन्ते। तथापि नाडीपुरीततोः सुप्तेन नाधाराधेयभावः सम्बन्धः शक्यो वक्तुम्। जीवस्य ब्रह्माव्यतिरेकेण स्वमहिमप्रतिष्ठत्वात्। सप्तमी तु जीवोपाध्यन्तःकरणाद्याधारत्वेन नेतव्या। तर्हि ब्रह्मापि कथं सप्तमीनिर्दिष्टम्? तादात्म्याभिप्रायेणेति ब्रूमः। तथाच द्वारमात्रं नाड्यः पुरीतच्च, ब्रह्मैव त्वेकं सुप्तिस्थानमिति '**नाडीषु सुप्तो भवति**' '**पुरीतति शेते**' इति चार्थवाद एवेति युक्तम् ॥

अयुक्तं च नाडीषु सुप्तिरित्यङ्गीकरणम्। तत्र हि सुप्तस्य न **विशे**षाज्ञाने कारणमस्ति। व्यावहारिकभेदस्य भिद्यमानस्य च सत्त्वात्। **यत्र वा**

[1] गर्भनाडी

शेषतात्पर्यचन्द्रिका

**अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्** इति श्रुतेः। ब्रह्मणि तदङ्गीकारे तु नायमस्ति दोषः। ब्रह्मणि सुप्तिर्नाम तदैक्यमेव नान्यदित्युक्तम्। ब्रह्मणैक्यमापन्नस्त्वेकत्वान्न विजानातीति युक्तम्। **यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं[1] पश्येत्** इत्यादिश्रुतेः॥

प्रयोजनशून्यत्वाच्च न नाडीश्रुतिः स्वार्थे तात्पर्यं भजते। न हि नाड्यः पुरीतद्वा सुप्तिस्थानमित्यनेन विज्ञानेन किञ्चित्प्रयोजनमस्ति। ब्रह्मात्मकत्वावधारणस्वप्नजागरितव्यवहारविमुक्तत्वावधारणादेरेतत्साध्यत्वाभावात्। नापि फलवतो ब्रह्म सुप्तिस्थानमित्येतद्विज्ञानस्य अङ्गम्। ब्रह्मश्रुतिस्तु ब्रह्म सुप्तिस्थानमिति ज्ञानस्य ब्रह्मत्वावधारणादीन् प्रति साधनत्वेन सप्रयोजनत्वात् तत्र तात्पर्यं भजते॥

**सत आगम्य न विदुः सत आगच्छाम**[2] इति नित्यवदात्मनः प्रबोधस्य श्रुतत्वाच्च न नाड्यादिषु सुप्तिः। तथा सति नाड्याः पुरीततो वा प्रबोधः श्रूयेत। न कदाचिच्छ्रूयतेऽन्यतः प्रबोधः। तस्मात् आत्मैव सुप्तिस्थानमिति सिद्धान्त इति॥

सुषुप्तिस्थानविचारो व्यर्थः

तन्न। मन्मत इव माहात्म्यपर्यवसानाभावेन, प्रत्युत समुच्चयपक्षे नाड्यादिभिः ब्रह्मणः समप्राधान्यस्य प्रयाजादिवत् आपत्त्या, आस्याश्चिन्ताया वैयर्थ्यासङ्गत्योरपरिहारात्॥

[1] किं [2] मह

## शेषतात्पर्यचन्द्रिका

अत्रोक्तमाशङ्कापूर्वं भामत्याम्—किमतो यद्येवम्? एतदतो भवति। यदा नाड्यो वा पुरीतद्वा सुषुप्तस्थानं[1] तदा विपरीतग्रहणनिवृत्तावपि न जीवस्य परमात्मभाव[2] इति। अविद्यानिवृत्तावपि जीवस्य परमात्मभावाय कारणान्तरमपेक्षितव्यम्। तच्च कर्मैव, न तु तत्त्वज्ञानम्, विपरीतज्ञाननिवृत्तिमात्रेण तस्योपयोगात्। विपरीतज्ञाननिवृत्तेश्च विनापि[3] तत्त्वज्ञानं सुषुप्तावपि सम्भवात्। ततश्च कर्मणैवापवर्गः, न ज्ञानेन। यथाहुः **कर्मणैव तु[4] संसिद्धिमास्थिता जनकादयः** इति। अथ तु परमात्मैव नाडीपुरीतत्सृप्तिद्वारा सुषुप्तिस्थानम्[5], ततो विपरीतज्ञाननिवृत्तेरस्ति मात्रया परमात्मभावोपयोगः। तया[6] हि तावदेष जीवस्तदवस्थानो भवति केवलम्। तत्त्वज्ञानाभावेन समूलकाषमविद्याया अकाषात, जाग्रत्स्वप्नलक्षणं जीवस्य व्युत्थानं[7] भवति[8]। तस्मात् प्रयोजनवत्येषा विचारणेति—इति।

तन्न। **'विद्यैव तु निर्धारणात्' 'भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति'** इत्यादौ ज्ञानस्य मोक्षसाधनत्वं कर्मणस्तदभावश्चोक्त एवेति गतार्थत्वात्। किञ्च ब्रह्मभावो नापवर्गः। किन्तु स्वरूपसुखाभिव्यक्तिरित्यसकृदुक्तम्, वक्ष्यते च। तथा च ब्रह्मसम्बन्धमहिम्ना स्वरूपाभिव्यक्तेरिव सुषुम्नानाडीसम्बन्धमहिम्नैवापवर्गोपपत्तेः, नाड्यादौ सुप्त्यङ्गीकारेऽपि न विपरीतज्ञाननिवृत्त्यादेरपवर्गव्यभिचार इति ज्ञानस्यावश्यकत्वसिद्धेर्न तदर्थं ब्रह्मण्येव सुप्तिरिति समर्थनीयम्। यावदभिव्यक्त्यापत्तिस्तु, अखण्डदण्डायमानभावरूपाज्ञानस्य

[1] प्ति  [2] ब्रह्म  [3] विना  [4] हि  [5] सुप्ति
[6] तथा  [7] स्योत्थानं  [8] जीवस्य व्युत्थानम्।

## शेषतात्पर्यचन्द्रिका

तत्प्रतिबन्धकस्य यावद्यावन्निवृत्तिस्तावत्तावदभिव्यक्तिरिति ब्रह्मपक्षेऽप्याश्रयणीयत्वेन ब्रह्मपक्ष इव नाडीपक्षेऽपि परिहरणीया। अविद्यानिवृत्तिर्मोक्ष इति पक्षेऽपि[1], प्रकाशान्धकारयोरिव विद्याऽविद्ययोर्विरोधेन मोक्षे तदपेक्षाया एवौचित्येन कर्मणः प्रसक्त्यभावाच्च ॥

### असमप्रधानानां नाड्यादीनां समुच्चयायोगः

अत्रोक्तं भाष्ये—न च वयमिह तुल्यवन्नाड्यादिसमुच्चयं प्रतिपादयामः। न हि नाड्यः पुरीतद्वा सुप्तिस्थानमित्येतद्विज्ञानेन किञ्चित्प्रयोजनमस्तीत्यादि॥

तन्न। ब्रह्म साक्षात्सुप्तिस्थानम्, इतरे तु परम्परया इत्यभिप्राये पुरोडाशः साक्षात्, व्रीहयस्तु परम्परया साधनमिति तत्रापि समुच्चयव्यवहारः स्यात्। न स्याच्च समिदादिषु समप्रधानेषु समुच्चयव्यवहारः॥

### चशब्दस्य अपपाठायातत्वेन समुच्चयज्ञापकाभावः

समुच्चयस्य सिद्धान्तत्वे ज्ञापकस्याभावाच्च। मूलकोशेष्वदर्शनेन सूत्रे चशब्दस्यासिद्धेः। नाडीष्वात्मनीति योजनायां स्थित इत्यनुक्तावपि वाक्यद्वयप्रामाण्यनिर्वाहाय व्रीहिभिर्निर्वर्तितेन पुरोडाशेन यागं कुर्यादितिवत्, नाडीषु स्थिते परमात्मनि सुप्तिरित्यर्थलाभः प्रसिद्ध एवेति सूचनाय प्रयुक्तस्य हशब्दस्य सुपाठत्वनिश्चयेन, प्रकृतानुपयुक्तस्य प्रत्युत विरुद्धस्य चशब्दस्यापपाठत्वसिद्धेश्च ॥

---

[1] पक्षे तु

## शेषतात्पर्यचन्द्रिका

किञ्च चार्थे द्वन्द्व इति सूत्रे समुच्चयान्वाचयेतरेतरयोगसमाहार-भेदेन चार्थं चतुर्धा विभज्य, अनियतक्रमयौगपद्यानां तुल्यबलानामनेकेषां साधनानामेकक्रियासम्बन्धः समुच्चयो यथा ईश्वरं गुरुं च भजस्वेति। यदा त्वेकस्य प्राधान्यात्तदनुरोधेनेतरस्यान्वाचयनं क्रियते तदान्वाचयो[1] यथा वटो, भिक्षामट; गाञ्च पश्यसि चेदानयेति च। परस्परापेक्षाणां[2] साधनानाम् अवयवभेदेनानुमत एकक्रियासम्बन्ध इतरेतरयोगो यथा धवखदिरौ छिन्धीति। परस्परापेक्षाणां पदार्थानामवयवभेदतिरोधानेन सङ्घतरूपापन्नानामन्वयः समाहारो यथा पाणिपादं वादय, छत्रोपानहमित्यादि। तत्रोभयगतक्रियान्वयस्योद्देश्यत्वे समुच्चयः। एकगतस्यैवोद्देश्यत्वे त्वन्वाचयः। धर्मिप्राधान्ये विवक्षिते इतरेतरयोगः। साहित्यरूपधर्मप्राधान्ये तु समाहार इति निर्णीतम्॥

तत्र नाडीपुरीतद्ब्रह्मणां मध्ये नाडीप्रवेशः प्राथमिकः, पुरीतत्प्रवेशो द्वितीयः, ततो ब्रह्मप्रवेश इति क्रमस्य नियतत्वात्, नाडीपुरीततोः परम्परया सुप्त्याधारत्वेन ब्रह्मणः साक्षादेव तदाधारत्वेन तुल्यबलत्वाभावाच्च न समुच्चयः सम्भवति। नाप्यन्वाचयः। अन्वाचये हि, एकं सापेक्षं नेतरत्। गवानयनस्य भिक्षाटनेऽनपेक्षा, न भिक्षाटनस्य गवानयने। अदर्शनादिना गामनानयन्नपि भिक्षामटत्येव। अनटंस्तु भिक्षां, न गामानयतीति दर्शनात्। इह तु स्वपन् नाडीं पुरीततं वा परम्पराऽऽधारत्वेन, ब्रह्म तु साक्षादाधारत्वेनापेक्षत एवेति नाडीगमनब्रह्मगमनयोः परस्परापेक्षत्वेनान्यतरनिरपेक्षत्वस्या-

[1] तदन्वा [2] पेक्षया

शेषतात्पर्यचन्द्रिका

योगात्। विकल्पस्समुच्चयो वेत्यादिभाष्यस्थसंशयादिपर्यालोचनया समुच्चयस्यैवावगमाच्च। अत एव नेतरेतरयोगो नापि समाहारः॥

ततोऽपि चशब्दोऽपपाठायात एवेति स कथं ज्ञापकः?

सुषुप्तिः क्वेति विचारस्य पूर्वेण संगत्यभावः

यदप्यत्रोक्तं कल्पतरौ—

**जीवस्य स्वप्रभत्वाय स्वप्नमिथ्यात्वमीरितम्।**
**अथास्य ब्रह्मभावाय सुषुप्तिः क्वेति चिन्त्यते** इति—

तन्न। पूर्वाधिकरणैतदधिकरणयोः प्रतिपाद्यफलयोः प्रदर्शनेऽपि पूर्वेणास्य सङ्गत्यप्रदर्शनात्। यदि स्वयंज्योतिष्ट्वसिद्ध्यनन्तरं ब्रह्मभावः प्राप्येत स्यादपि तदा सङ्गतिः। न त्वेवम्। ब्रह्मभावस्य स्वतस्सिद्धत्वात्। स्वयंज्योतिष्ट्वसिद्ध्यधीनत्वाभावाच्च। सुषुप्तिः ब्रह्मण्येवेति पक्षेऽपि ब्रह्मभावस्यायोगाच्च। आधाराधेयभावस्य सप्तमीबोधितस्य भेदघटितत्वेन ब्रह्मभावविरोधात्। अन्यथा नाडीभावोऽपि सिद्ध्येत्॥

'तस्मिन् शेत' इत्यादौ तादात्म्ये सप्तम्ययोगः

एतेन—नाधाराधेयभावाभिप्रायेण तस्मिञ्छेते इत्यादौ सप्तमी, किन्तु तादात्म्याभिप्रायेणेति भाष्योक्तं—निरस्तम्। तादात्म्ये सप्तम्या अननुशासनात्। औपश्लेषिकसामीपिकवैषयिकाभिव्यापकानां **आधारोऽधिकरणम्** इतिसूत्रे आधारशब्दार्थत्वेन व्याख्यातानां मध्ये तादात्म्यस्याप्रवेशाच्च॥

## शेषतात्पर्यचन्द्रिका

आधारश्चेह क्रियाश्रयकर्तृकर्मान्यतराश्रयो विवक्षितः, न तु मुख्यः क्रियाश्रय एव। उदाहरणासङ्गतेः। यथा च गौण आश्रय आधारः तथोक्तं **साधकतमं करणम्** इतिसूत्रे तमब्ग्रहणेन। तदुक्तम्—

**कर्तृकर्मव्यवहितामसाक्षाद्धारणक्रियाम्।**
**उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्**— इति ॥

तथा चान्यत्र, सिद्धयोः कर्तृकर्मणोरन्यतरेण प्रादेशिकः सम्बन्ध उपश्लेषः, तत्र भवः औपश्लेषिकः आधारो यथा देवदत्तः कटे आस्ते, स्थाल्यामोदनं पचतीति। अत्र ह्यासनक्रियाश्रयो देवदत्तः कर्ता। पचिक्रियाश्रय ओदनः कर्म। तौ हि अवयवावयविभावाद्यभावेन कटस्थालीभ्यां पृथक्सिद्धावेव। अत एव च ताभ्यां तयोः प्रादेशिकः सम्बन्धः, न तिलतैलयोरिवाभिव्यापकः ॥

सामीप्यं सान्निध्यम्। तत्र भवस्सामीपिको यथा नद्यामास्ते घोषः। अत्रासनक्रियाश्रयस्य कर्तुर्घोषस्य नद्या सह संयोगाभावान्नौपश्लेषिकोऽयम्। नद्यास्तु सन्निधानस्य सत्त्वाद्घोषस्य नदी सामीपिक आधारो भवति ॥

विषयस्तु अनन्यत्र भावः। तत्र भवो वैषयिक आधारो यथा तर्के कुशलः। तर्कविषयं कौशलमस्यास्तीत्यर्थः। देवदत्तस्य तर्कादन्यत्र कौशलं नास्तीति भवति कौशलं प्रति तर्कस्य विषयत्वम्। यद्यप्यत्र भवनक्रियां प्रति कर्तृत्वेनाश्रयस्य कौशलस्य तर्केण संयोगासंभवात् तदाधारत्वं तस्य दुर्घटम्, तथापि

## शेषतात्पर्यचन्द्रिका

यदधीना यस्य स्थितिः स विनापि संयोगं तस्याश्रयो भवति, यथा प्रजाभिरसंयुक्तोऽपि राजा प्रजाऽऽश्रयः। तथात्रापि कौशलस्य तर्काधीनस्थितिकत्वाद्युक्तमस्य कौशलं प्रत्याधारभावः। यद्वा संयोगासम्भवे समवाय इव तदुभयासम्भवे विषयविषयिभावात्मकस्य स्वरूपसम्बन्धस्यावश्याङ्गीकार्यत्वेन तेन सम्बन्धेन युक्तस्तयोराधाराधेयभावः॥

अपृथग्देशयोः सकलावयवसम्बन्धोऽभिव्याप्तिः। तत्र भवः अभिव्यापक आधारो यथा सर्वस्मिन्नात्मा स्थितः, तिलेषु तैलमस्ति; सर्वमभिव्याप्य स्थितो विष्णुः, तिलमभिव्याप्य स्थितं तैलमित्यर्थः। यद्यप्यत्र स्थित्याश्रययोः विष्णुतैलयोः सर्वतिलाभ्यां संयोगोऽस्ति। तथापि देशविभागाभावात्संश्लेषव्यवहारो नास्तीत्यौपश्लेषिकात्पृथगेव॥

न चेह सुप्तिक्रियां प्रति कर्तृत्वेनाश्रयस्य जीवस्य ब्रह्म औपश्लेषिक आधारोऽभ्युपेयते। सुप्तिकाले च तादात्म्याङ्गीकारेण संयोगस्य बाधितत्वात्। अत एव न सामीपिक आधारः। केन किं सन्निहितमिति भेदघटितमूर्तित्वात्। जीवस्य निर्विषयत्वेन न वैषयिकोऽप्याधारः। यद्यपि जीवो ब्रह्मणोऽपृथग्देशः, सकलावयवसम्बन्धवांश्च, तथापि ब्रह्मणो व्यापकत्वेन जीवपृथग्देशत्वात्, नाभिव्यापकसम्बन्धः। जीवोऽपि व्यापक एवेति चेन्न। अन्तःकरणाद्युपाध्यवच्छिन्नो हि जीवः उपाधीनामव्यापकत्वात् घटमठाद्याकाश इव अव्यापक एव। अत एव **उत्क्रान्तिगत्यागतीनाम्** इति सूत्रमव्यापकतामाचष्टे। चिन्मात्रं व्यापकमिति चेत् किं ततः, यद्येवं जीवो ह्यत्राधेयतया श्रूयते न चिन्मात्रम्, तस्य ब्रह्मतयाऽऽधारत्वात्॥

## शेषतात्पर्यचन्द्रिका

एतेन तादात्म्यमेवाभिव्यापकशब्दोक्तमिति निरस्तम् । तयोरुक्तरीत्या विरुद्धधर्मिणोस्तादात्म्यानुपपत्तेश्च । सर्वविष्ण्वोस्तदनुपपत्त्योदाहरणायुक्तेश्च । न हि वियदादिप्रपञ्चस्य सर्वस्य जडस्य विशिष्टेन विष्णुनैक्यं दृष्टमिष्टं वा । अपृथग्देशानां देशकालादीनां व्यापकानामपि संयोगसम्भवेन सकलावयवसम्बन्धरूपाभिव्यापकाधारत्वस्य संयोगघटितमूर्तित्वे बाधकाभावाच्च ॥

तदेवं सङ्गतिप्रयोजनयोरभावो दुष्परिहरः ॥

संशयाकारस्य विकल्पासहत्वम्

संशयश्चायुक्तः । स किं भाष्यरीत्या किमेतानि नाड्यादीनि परस्परनिरपेक्षाणि भिन्नानि सुषुप्तिस्थानानि, आहोस्वित्परस्परापेक्षयैकं सुषुप्तिस्थानमित्याकारः; उत भामतीरीत्या किमेषां स्थानानां विकल्पः, आहोस्वित्समुच्चय इत्याकारः ? नाद्यः । समुच्चयेनैतानि नाड्यादीनि स्वापाय उपैति न विकल्पेनेत्यर्थ इति सिद्धान्तभाष्यविरोधात् । समुच्चयान्वाचयादिपरत्वात् कल्पितचशब्दविरोधाच्च । न हि चशब्देन परस्परापेक्षयैकं सुषुप्तिस्थानमित्यर्थप्रतीतिः संभवति । न द्वितीयः । संशयभाष्यविरोधात् । अनियतक्रमयौगपद्यानां तुल्यबलानामनेकेषाम् एकक्रियासम्बन्धो हि समुच्चयः ; सिद्धान्ते नाडीं प्रविश्याथ पुरीततं प्रविश्यानन्तरं सुप्तो जीवः ब्रह्म प्रविशतीत्यङ्गीकारेणैषां नियतक्रमयौगपद्यानामतुल्यबलानां समुच्चयासम्भवेन समुच्चयकोटिकस्य संशयस्यायोगाच्च ॥

प्रयोजनभेदात् विकल्पपूर्वपक्षायोगः

पूर्वपक्षोऽप्ययुक्तः । तथा हि—युक्तो व्रीहियवादौ पुरोडाशनिर्वर्तनरूपप्रयोजनैक्याद्विकल्पः । ब्रह्मभावरूपप्रयोजनस्य नाडीपुरीतद्भ्यामनिर्वर्तना-

## शेषतात्पर्यचन्द्रिका

त्सोऽनुपपन्नः। अत्रोक्तं वाचस्पतिना—सप्तमीश्रुत्या आयतनश्रुत्या वा एकनिलयनार्थाः परस्परानपेक्षाः नाड्यादयो विकल्पमर्हन्तीति—तन्न। ब्रह्मणि निलयनद्वारा ब्रह्मभावस्येह प्रयोजनत्वे तद्भेदाद्विकल्पायुक्तेः। पुरोडाशनिर्वृत्तिरूपमहाप्रयोजनैक्यवदिहापि महाप्रयोजनैक्यस्य वक्तव्यतया निलयनादिरूपावान्तरप्रयोजनैक्यकथनस्योपयोगाभावाच्च। अन्यथा व्रीहियवाभ्यामपि निर्मिते पुरोडाशे काठिन्याकाठिन्यादेः रूपभेदादेर्वावान्तरप्रयोजनभेदस्य सत्त्वेन विकल्पो न स्यात्॥

**नाडीभिः प्रत्यवसृप्य पुरीतति शेते** इत्यादिसमुच्चयश्रुतीनां गत्यनुक्तेर्दुर्बलश्चायं पूर्वः पक्षः॥

### अतुल्यबलानां समुच्चयसिद्धान्तायोगः

पुरोडाशद्वारेण साधनीभूतानां व्रीहीणां पुरोडाशेन समुच्चयव्यवहाराभावात्, परस्परं द्वारद्वारिभावानापन्नानां तुल्यबलानां समिदादीनामेव च समुच्चयव्यवहारदर्शनात्, हृदयस्थं ब्रह्म गन्तुर्नाडीपुरीततोर्मार्गमात्रत्वेन ब्रह्मणश्च साक्षादेवाधारत्वेन नाडीपुरीतद्ब्रह्मणामतुल्यबलत्वेन सापेक्षत्वेन च समुच्चयासम्भवस्योक्तत्वात्सिद्धान्तोऽप्ययुक्तः॥

### तदभावसूत्रव्याख्यापरीक्षा

एवं सूत्रार्थोऽपि। त्वन्मते पूर्वं स्वप्नस्यैव प्रकृतत्वेन तच्छब्देन तन्मात्रस्य परामर्शे तदभाव इत्यनेन जाग्रदवस्थाया अपि प्राप्त्या सुषुप्तिरि-

शेषतात्पर्यचन्द्रिका

त्यर्थायोगात् । मन्मते तु ‘ देहयोगाद्वासोऽपी ’त्यव्यवहितसूत्रे जाग्रदवस्थाया अपि प्रकृतत्वात् व्याख्यानं युक्तम् ॥

एतेन नाडीष्वित्यादिपदसन्निधानादौचित्याच्च सुषुप्तिरिति व्याख्यानं निरस्तम् । एतेन चकारात्पुरीतति चेति केषांचिद्व्याख्यानं निरस्तम् ॥

प्रबोधसूत्रव्याख्यापरीक्षा

यच्च द्वितीयस्य व्याख्यानं—यस्माच्चात्मैव सुषुप्तिस्थानम् अत एव च कारणात् नित्यवदेवास्मादात्मनः प्रबोधः स्वापाधिकारे शिष्यते **कुत एतदागात्** इति प्रश्नस्य[1] प्रतिवचनावसरे **‘यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनः सर्वे प्राणाः’** इति । **‘सत आगम्य न विदुः सत आगच्छाम[2]’** इति च । विकल्प्यमानेषु सुषुप्तिस्थानेषु कदाचिन्नाडीभ्यः प्रतिबुध्यते, कदाचित्पुरीततः, कदाचिन्मनसः[3] इत्याशिष्येतेति[4]—तन्न । समुच्चयपक्षे यस्मादात्मैव सुषुप्तिस्थानमित्यादिव्याख्यानायोगात् । **तदभावो नाडीषु तच्छ्रुतेः** इति सूत्रे तच्छ्रुतेरित्यनेनैव प्रबोधश्रुतेरपि ग्रहणसम्भवेनैतत्सूत्रवैयर्थ्यापाताच्च ॥

परीक्षाफलम्

अत एव सूत्रक्रमोऽप्ययुक्तः ॥

तस्मात्सर्वज्ञमुनिप्रणीतव्याख्यानमेव दोषगन्धविधुरमिति, सिद्धं तदेव शिरसा वहनीयं प्रेक्षावद्भिरिति ॥

[1] इत्यस्य  [2] मह  [3] न्विदात्मनः  [4] इत्यशासिष्यत्

## शेषतात्पर्यचन्द्रिका

टीकायां पूर्वपक्षन्यायविवरणस्य द्वेधा व्याख्यानम्

टीकाक्षरार्थस्तु—पञ्चमोद्दिष्टं पृथग्भवन्यायं भवत्यनेनेति भवः कारणं तदप्युपलक्षणमिति भावेन विवृण्वत् **न च प्रबोधस्य पृथगपि कारणदृष्टेः क्वचित्तदेव** इति वाक्यं यवागून्यायेन क्वचित्तदेवेत्यन्तिम-वाक्यव्याख्यानपूर्वं व्याचष्टे **नेश्वरैकाधीन इति**। सर्वप्रबोधे ईश्वरो न मुख्यं कारणमित्यर्थः। यद्वा प्रबोधमात्रे केवलमीश्वरो न कारणम्। किन्तु कारणान्तरासन्निहित एव प्रबोधे। तत्संनिहिते तु तदेव कारणमित्यर्थः। तथा च **पृथक्** ईश्वरात्पृथग्भूतानां कारणानाम्, ईशातिरिक्तानां कारणा-न्तरणामिति यावत्, **क्वचित्** क्वापि सर्वत्र **दृष्टेः** दर्शनात् प्रबोधमात्रस्य तदेव मुख्यकारणमस्तु नेश्वर इति वा; प्रबोधविशेषस्य **पृथगपि कारणदृष्टेः** भगवदितरेषां भेरीताडनादीनां कारणानां दर्शनात् तत्र तेषामेव कारण-त्वमस्तु; तदसन्निहितप्रबोधे तु ईश्वरः कारणमिति विवरणं द्वेधा व्याख्यातं भवति। गतार्थतां निराचष्टे **न च तेषामकारणत्व इति**॥

टीकायां सिद्धान्तन्यायविवरणव्याख्यानम्

सन्मानन्यायं तदाकारप्रदर्शनेन विवृण्वत् **'न ऋते त्वत्क्रियत' इति श्रुतेः तत्रापीशकृतत्वे सम्यङ्मानात्** इति वाक्यं भाष्येण सह अभिप्रायोक्त्या व्याचष्टे **सावधारणश्रुतीति**॥

अनेन **एष एव सुप्तं प्रबोधयति** इति कौण्डिन्यश्रुतिः अयोग-व्यवच्छेदनाद्यनेकार्थकैवकारघटितत्वात् सावकाशेति शङ्कानिरासाय विवरण-कृत् श्रुत्यन्तरमुदाजहारेति ज्ञातव्यम्॥

**इति प्रबोधाधिकरणम् ॥५॥**

अथ कर्मानुस्मृत्यधिकरणम् ॥ ६ ॥

ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥ ९ ॥

न च केषाञ्चित्स्वप्नादिकर्ता न तु सर्वेषामिति । 'एष ह्येव साधु कर्म कारयती'ति कर्मण्यवधारणात् ॥

'प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु ।
परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चन ॥'

इत्यनुसारिस्मृतेश्च ॥

'एष स्वप्नान् दर्शयति, एष प्रबोधयति । एष एव परम आनन्द' इति च श्रुतिः । 'आत्मानमेव लोकमुपासीत' इति च विधिः ॥ ९ ॥

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं सर्वावस्थानां तदधीनत्वमहिम्नो निरूपणादस्ति शास्त्रादिसङ्गतिः । सर्वावस्थानां भगवदनधीनत्वे न तस्मिन्निरतिशया भक्तिर्भवेत् । अतस्तन्निरूपणीयम् । प्रकृतावस्था एवात्र विषयः । किं सर्वजीवानां सार्वकालीना भगवदधीनाः, अथ केषाञ्चित्किञ्चित्कालीना इति सन्देहः । अवस्था भगवदधीना इत्युक्तस्योभयार्थसम्भवस्सन्देहबीजम् ॥

पूर्वपक्षः

न सर्वेषां सर्वकालीनावस्था भगवदधीनाः, किं नाम केषाञ्चित्किञ्चित्कालीना इति पूर्वःपक्षः । राजादीनां खण्डेशत्वदर्शनात् । न च लोकविल-

## तत्त्वप्रकाशिका

क्षणमीश्वरस्य सर्वप्रेरकत्वमभ्युपगन्तुं शक्यते, अतिप्रसङ्गात्। न चात्र प्रमाणमस्ति, येनादृष्टमपि कल्पयामः। अतः सर्वावस्थाप्रेरकत्वाभावेन न सर्वैश्वर्यं हरेरिति ॥

सिद्धान्तः

सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे **स एवेति**। सः परमात्मैव सर्वावस्थाप्रेरको न तु केषाञ्चित्कादाचित्कावस्थाप्रेरकः। **एष ह्येव** इति सर्वकर्मणां भगवदधीनत्वस्य श्रुतत्वात्। स्वप्नादिप्राप्तेश्च तदन्तर्भावात्। **प्रदर्शक** इति स्मृतेश्च। **एष स्वप्नान्** इति श्रुतेश्च। अवधारणस्य सर्वत्रान्वयेन विवक्षितसिद्धेः। **आत्मानमेवेति** परमात्मन एवोपास्यत्वविधानाच्च। अन्यस्यापि प्रेरकस्य सद्भावे अवधारणानुपपत्तेरिति भावः। चशब्दः पक्षान्तरनिषेधार्थः। स्फुटमभिमतार्थाभिधायकत्वमनुसारित्वम्। अतः सर्वावस्थाप्रेरके महामहिम्नि ईश्वरे भक्तिर्युक्तेति सिद्धम् ॥ ९ ॥

—:o:—

## शेषतात्पर्यचन्द्रिका

विवरणपेटिका

## ॥ ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥ ९ ॥

सङ्गतिसंशयौ

अत्र सामान्यतोऽवस्थाविचारानन्तरं विशेषविचारस्यावसर इति अनन्तरसङ्गतिः टीकायामेवोक्ता ॥

**संध्ये सृष्टिरित्यारभ्य** उक्ताः अवस्थाः किं कस्यचित् कदाचित् काश्चिदेव भगवदधीनाः, उत सर्वेषां सर्वदा सर्वा अपि। तदर्थं भगवति लोकोपमा आदर्तव्या, उत न। तदर्थं निरवकाशप्रमाणानि न सन्त्युत सन्तीति सन्देहः ॥

पूर्वपक्षः

**खण्डेश एव भगवान् लोकदृष्टान्ततो भवेत्।**
**अन्यभावादिसूत्रेषु बलवच्छ्रुतितोऽन्यथा ॥**

**स एव जागरिते स्थापयतीत्यादिप्रमाणानां पूर्वत्रोदाहृतानां** राजादिवत्खण्डेशत्वेऽपि तद्देशतत्कालतदवस्थानां स एव कर्तेत्युपपत्तेः, न लोकवैलक्षण्येनाखण्डेशत्वं वाच्यम्। **'अन्यभावव्यावृत्तेश्च,' 'प्रकृतैतावत्त्वं हि प्रतिषेधति,' 'श्रुतेस्तु शब्दमूलत्वात्'** इत्यादौ तत्तदधिकरणोदाहृत-निरवकाशप्रमाणेन लोकोपमात्यागेऽपि इह तथाविधप्रमाणाभावात् न तत्त्याग इति प्राप्ते —

## शेषतात्पर्यचन्द्रिका

### सिद्धान्तः

अभिधीयते—

**अत्रापि बलवच्छ्रुत्यैष ह्येवेत्यादिरूपया।**
**अखण्डेशत्वमीशस्य प्रत्येतव्यं बुभूषुभिः॥**

आकाङ्क्षाक्रमेण सूत्रे अनेकप्रमाणोपन्यासः

सूत्रार्थस्तु — देशकालान्तरे स एव प्रेरक इति भ्रमनिरासाय चेत्युक्तम्। नात्र पक्षान्तरं स्वीकर्तव्यमिति तस्यार्थः। कुतः? कर्मानुस्मृति-शब्दविधिभ्यः। **कर्मेति** तत्प्रतिपादकम् **एष ह्येव साधु कर्म कारयतीति** कर्मण्यवधारणं लक्ष्यते। अत्र च **साधु** इति क्रियाविशेषणम्, न **कर्म**-विशेषणम्। अत्र चशब्दसूचितपक्षान्तरव्यावृत्तिर्न प्रतीयत इत्यतः प्रमाणान्तरमाह **अनुस्मृतीति**। सा च **प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु** इत्यादिः। अत्र च स्वप्नादेः सर्वस्य अवस्थामात्रस्य सर्वदेत्यपि योज्यम्। नन्वथापि **'तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यते' 'स्यात्तत्र दृष्ट एवार्थः'** इत्यादिस्मृतिविरोधेन न निर्णय इत्यत आह **शब्देति**। स च **'एष स्वप्नान् दर्शयति', 'एष प्रबोधयति'** इत्यादिः। अन्यथा अल्पानन्दस्स्यादिति युक्ति-साहित्येन तत्रापि न निर्णयाभावः शङ्कनीयः। अत्र परमानन्दत्वमापेक्षिकमत आह **विधीति**। स च **आत्मानमेवेत्यादिः**। अत्रान्यस्येशस्य सत्त्वे अस्यै-वोपास्यत्वविधिरनुपपन्नः स्यादिति, अत्राप्यन्यथासिद्धिर्न शङ्कनीयेति हृदयम्॥ एवमाकाङ्क्षाक्रमेण प्रवृत्तेर्नानेकप्रमाणोपन्यासवैयर्थ्यमिति॥

## शेषतात्पर्यचन्द्रिका

अत्र उभयेषामधिकरणम्

अत्रोभयेऽप्याहु:—

आत्यन्तिकतयोत्सृष्टा सत्सम्पत्तिः पुरोदिता ।
अविद्याशेषतैतस्या अपवाद इहोच्यते ।।

इत्यमलानन्दरीत्या सुषुप्तौ जीवस्य आत्यन्तिकसत्सम्पत्तिरुत्सर्गतः पूर्वोक्ते-हापोद्यत इति आपवादिकी वा; अतः **प्रबोधोऽस्मात्** इत्यत्र सुषुप्त्यनन्तरं ब्रह्मणः प्रबोधस्मरणात् तदात्मन्येव सुषुप्तिरित्ययुक्तम्, तत्र ततः प्रबोधः सत्सम्पत्तिं न गमयति, सुषुप्तादन्यस्य प्रबोधसम्भवेन सुषुप्तस्य नाडीपुरीततो-ऽवस्थानसम्भवादितीहाक्षिप्यत इति आक्षेपिकी वा सङ्गतिः ॥

सुषुप्तौ ब्रह्मसम्पन्नो जीवः उत्थानकाले पुनः प्रतिबुध्यमानो यः सत्सम्पन्नः स वा अन्यो वा उत्तिष्ठतीत्यनियमः उत स एवेति नियमः इति संशये—समुद्रप्रासजलबिन्दोरेवोद्धरणं नान्यस्येति निर्धारणं यथा दुस्सम्पादं तथा ब्रह्मणि सम्पन्नस्यैव पुनरुत्थानं नान्यस्येति निर्धारणमपीति स वा अन्यो वोत्तिष्ठतीत्यनियम एव। अनुपपन्नश्च स एवोत्तिष्ठतीति नियमपक्षः । सुषुप्तौ ब्रह्मसम्पन्न इति पूर्वमुक्तम् । तत्सम्पत्तिश्च नोपाधेर्लयमन्तरा सम्भव-तीति जीवोपाधिलयेऽवश्यमङ्गीकार्ये विलीनोपाधिश्च जीवो नास्त्येवेति पुनः कथं तस्योत्थानम् ?

उपाधेर्लयतो जीव एकतां ब्रह्मणा गतः ।
नास्त्येव तत उत्थानमुदबिन्दोरिवाम्बुधेः ॥

—इति प्राप्तम् ॥

## शेषतात्पर्यचन्द्रिका

अत्रोच्यते—पूर्वं सामिकृतस्य दर्शपूर्णमासादिकर्मणः सुपुप्तोत्थितेन शेषानुष्ठानं, यःसुप्तः सोऽहं जागर्मीति प्रत्यभिज्ञानं च नान्योत्थानेऽवकल्पते। **त इह व्याघ्रो वा सिंहो वा वराहो वा** इत्यारभ्य **यद्यद्भवन्ति तत्तदा**[1] **भवन्ति** इति श्रुतिश्च व्याघ्रादिशरीरे सुप्तस्य पुनरुत्थाने व्याघ्रादिभावं पुनः व्युत्पादयन्ती सुप्तस्यैवोत्थानं प्रतिपादयति। अन्योत्थाने कर्मविद्याविधि-वैयर्थ्यम्। तयोर्मोक्षार्थत्वात् सुपुप्तिमात्रेण मोक्षप्रसङ्गात्। तस्मात्सुपुप्त एवोत्तिष्ठतीति सिद्धे अनाद्यविद्यावस्थानं जीवस्य कल्प्यते, अन्तःकरण-स्थूलशरीराध्यासादेर्जीवकल्पकस्य तदानीमभावात्। **सति संपद्य न विदुरिति** श्रुतिश्च सुपुप्तस्याज्ञानं गमयति॥

**सुपुप्तस्य प्रबुद्धत्वे कर्मादिभिरवस्थिते।**
**अनाद्यविद्याऽविच्छेदः सुपुप्तावपि कल्प्यते**— इति॥

तत्र सङ्गतिस्तावदयुक्ता

तत्र। **तदभावो नाडीष्वित्यत्र** जीवस्यात्यन्तिकसत्सम्पत्त्यनुक्तेरिह तदपवादासम्भवात्। ब्रह्मज्ञानेनैवाविद्यानिवृत्तिर्नान्येन, निवृत्तायामेवाविद्यायाम् आत्यन्तिकसत्सम्पत्तिरूपमोक्षो नान्यथेति बहुष्वधिकरणेषु प्रपञ्चितत्वेन, सुषुप्तेश्च पामरादिसाधारण्येन, तदानीं ब्रह्मज्ञानाभावस्य निश्चितत्वेन आत्यन्तिक-सत्सम्पत्तेरर्थतोऽपि सिद्ध्ययोगाच्च। न हि प्रमाणान्तरविरुद्धस्यार्थतः सिद्धिर्दृष्टा। तथा सति यागस्य श्रुत्युक्तसाधनभावस्य तदनुपपत्त्यैव

[1] तदा

शेषतात्पर्यचन्द्रिका

कालान्तरभावित्वस्याप्यर्थतः सिद्धिसम्भवेऽपूर्वकल्पना न स्यात् । **सत आगम्य न विदुः सत आगच्छाम** इति प्रबोधवाक्ये हि सुप्तस्यैव प्रकृतत्वेन सुषुप्तादन्यस्य प्रबोधासम्भवेनाक्षेपिकी संगतिरप्ययुक्ता ॥

संशयोऽप्ययुक्तः

तस्मात्स एवेश्वरो वा अन्यो वा जीवः प्रतिबुध्यते इति पूर्वपक्षोपसंहारे, एतेनेश्वरस्योत्थानं प्रत्युक्तम्, नित्यनिवृत्ताविद्यत्वात् इति सिद्धान्तोपसंहारे च भाषणात्तदनुसारेण तथैव संशयप्रदर्शनं न्याय्यमिति संशयोऽप्ययुक्तः ॥

अत्रोक्तं वाचस्पतिना—ईश्वरो वेति संभावनामात्रेणोपन्यासः[1] । न हि तस्य नित्यशुद्धबुद्धमुक्तस्वभावस्याविद्याकृतव्युत्थानसम्भवः । अत एव विमर्शावसरे तस्यानुपन्यास इति—तन्न । जीवस्यापि त्वन्मते व्यापकतया कल्पितस्याप्याकाशादिवत्कस्माच्चित्तद्व्युत्थानायोगेन जीवेऽपि संभावनामात्रत्वात् । किञ्चात्र यदीश्वरशब्देन मायावच्छिन्नं विशिष्टं चैतन्यमुच्यते तदा नित्यशुद्धत्वाद्यभावेनाविद्याकृतव्युत्थाननिश्चय एव । जीववद्विलुप्तज्ञानाद्यभावेन स्वसामर्थ्येनैव व्युत्थानात् । महोदधिमग्नस्येव जीवस्य तदयोगाज्जीव एव संभावनामात्रं, न निश्चय इत्यापाताच्च । यदि शुद्धं ब्रह्मोच्यते तत्र व्युत्थानसंभावनापि नेति दुर्वारोऽग्रिमभाष्यविरोधः ॥

1 संभव

## शेषतात्पर्यचन्द्रिका

पूर्वाधिकरणसिद्धचैतन्यैक्यं विस्मृत्य पूर्वपक्षायोगः

तदनन्यत्वाद्यधिकरणेषु चैतन्यैक्यस्यासकृदुक्तत्वेन तद्विरुद्धभेदमाश्रित्य पूर्वपक्षासम्भवाच्च । यदत्रोक्तं भामत्यां—यद्यपीश्वरादभिन्नो जीवस्तथापि उपाध्यवच्छेदेन भेदं विवक्षित्वा अधिकरणारम्भः[1] स एवेतीति—तदप्ययुक्तम् । आरोपितभेदमाश्रित्य पूर्वपक्षस्यातिफल्गुत्वात् ॥

किञ्चात्र सुप्तौ यावदुपाधिनाशाङ्गीकारेण पूर्वः पक्षः, उत तदनङ्गीकारेण ? आद्ये त्वौपाधिकभेदविवक्षया पूर्वपक्षायोगः । द्वितीये तु विनष्टोपाधित्वात्तदानीं सत्सम्पन्नो जीवो नास्त्येवेत्यादिपूर्वपक्षायोगः ॥

एतेन—उपाधेर्लयतो जीव एकतां ब्रह्मणा गतः ।
नास्त्येव तत उत्थानमुदबिन्दोरिवाम्बुधेः ॥

—इति निरस्तम् ॥

जीवशब्दविवक्षितः कः ?

किञ्च यद्यत्र जीवशब्देनाविद्यान्तःकरणाद्यवच्छिन्नं चैतन्यमुच्यते तदा तस्य ब्रह्मणैकीभावानुपपत्तिः । यदा तु चैतन्यमात्रं तदा नास्त्येवेत्यनुपपत्तिः । दृष्टान्तासङ्गतिश्च । न ह्यम्बुधौ प्राप्त उदबिन्दुर्नास्त्येव । तथा सति पुनरुद्धरणे स एव जलबिन्दुर्भवतीति दुःसम्पादमिति पूर्वपक्षभाष्यविरोधात् । सुषुप्तौ जीवनाशे स्वात्मविनाशाय यत्नायोगेन पूर्वपक्षमान्द्याच्च ॥

अनाद्युपाधेः लयायोगेन जीवानुत्थाने बीजाभावः

किञ्च न तावज्जीवकल्पकः स्थूलशरीराध्यासः, इन्द्रियसंपर्कः, अन्तःकरणं चेत्येवमादय एव आगन्तुका उपाधयः । भावरूपाज्ञानस्याप्य-

[1] अधिकरणान्तरा

## शेषतात्पर्यचन्द्रिका

नादेः चरमवृत्त्येकनाश्यत्वमसकृत्साधितम् । तेन जीवोपाधीनां विनाशात् जीवस्यापि विनाश इति पूर्वपक्षो न युक्तः । न ह्यनादेर्भावरूपस्याज्ञानस्य ब्रह्मसाक्षात्कारैकनिवर्त्यस्य सुषुप्तिः शरीराध्यासादेरिव निवर्तिका सम्भवति । अत एव — अत्र च भ्रमातिरिक्तभावरूपाज्ञानं नास्तीति मन्वानस्य पूर्वः पक्षः इति — अमलानन्दाद्युक्तमयुक्तम् । प्रपञ्चकल्पकत्वेनातिप्रसिद्धस्याज्ञानस्यापलापस्यायुक्तत्वात् ॥

अनियमपूर्वपक्षस्य जीवनाशरूपयुक्त्या विरोधः

उपाधेर्लयतो जीवो नास्त्येवेति सिद्धान्त्यभिमतनियमदूषणेन अन्य एवेति नियमस्यैव प्राप्त्या अनियमपूर्वपक्षायोगाच्च ॥

सिद्धान्तयुक्तीनाम् अप्रयोजकता

एवं सिद्धान्तोऽप्ययुक्तः । कर्मानुस्मृतिशब्दविधीनां सुप्तशरीरे प्रविष्टस्य अघटितघटनापटीयसा अज्ञानेन शरीरैक्यमात्रेणोपपत्तेः ॥

अनाद्यविद्याकल्पनाया अनवसरता

किं च यद्यत्रान्तःकरणस्थूलशरीराध्यासादेर्जीवकल्पकस्य सुषुप्तावात्यन्तिकनिवृत्तिमभ्युपेत्य सिद्धान्तः प्रवर्तते तदानुभवविरोधः । अत एव सुषुप्तस्य देहे शस्त्राद्यभिघातेषु झडित्युत्थानं दृश्यते । प्रवाहतोऽनादेः प्राज्ञसंपर्कादिना बहुतरानभिव्यक्तावप्यात्यन्तिकनिवृत्त्ययोगश्च । यदि च तदनङ्गीकारेण सिद्धान्तः तदा ‘अनाद्यविद्यावस्थानं जीवस्य कल्प्यते । तदानीं जीवकल्पकस्यान्यस्याभावादि’ति स्ववचनविरोधः ॥

## शेषतात्पर्यचन्द्रिका

जीवव्यापकत्वमते शरीरान्तरे व्यवहारलोपाप्रसङ्गः

अत्रोक्तं भाष्ये—अन्योत्थानपक्षे यदि शरीरान्तरे व्यवहरमाणो जीव उत्तिष्ठेत् तत्रत्यव्यवहारलोपप्रसङ्गः। अथ शरीरान्तरेऽपि व्यवहारमकुर्वाणः सुप्त एवोत्तिष्ठेत् तदा सुप्तस्यैव पुनरुत्थानात् अन्योत्थानपक्षो न युक्तः। यो हि यस्मिञ्छरीरे सुप्तः स तस्मिन्नोत्तिष्ठति, अन्यस्मिंस्तु शरीरे स उत्तिष्ठतीति कल्पनायाः को लाभः स्यात्। अथ मुक्त उत्तिष्ठेत् अन्तवान् मोक्ष आपद्येत। निवृत्ताविद्यस्य मुक्तस्य पुनरुत्थानमनुपपन्नम्—इत्यादि ॥

तदप्ययुक्तम्। त्वत्सिद्धान्ते जीवस्य व्यपकत्वेन शरीरान्तरेऽपि व्यवहारलोपाप्रसक्तेः। जीवव्यापकत्वसिद्धान्तरक्षणाय तत्कल्पकोपाधीनामपि व्यापकत्वस्याकामेनापि स्वीकार्यत्वात्। अन्यथा सयुक्तिकं जीवव्यापकत्वप्रतिपादनं द्वितीये न स्यात्। योगवशात्सौभर्यादीनामिव अज्ञानवशात् अनेकेष्वपि शरीरेषु व्यवहारोपपत्तिश्च। विमतं शरीरं यज्ञदत्तस्य भोगायतनं शरीरत्वात् यज्ञदत्तशरीरवत् इत्यादिस्वोक्तिबलेन तथैवावगमाच्च ॥

देहैक्यमात्रेण अकृताभ्यागमाभावोपपत्तिः

एतेन—अकृताभ्यागमकृतविप्रणाशौ च दुर्निवारावन्योत्थानपक्षे स्यातामिति—निरस्तम्। सुप्तेः प्राक् जीवकृतकर्मणः वैश्वानरेष्ट्यादेरिव सुप्त्यनन्तरं तच्छरीरप्रविष्टजीवान्तरकृतप्रायत्वात्। तत्र यदि पितृकृतमपि जातेष्ट्यादिकं पुत्रेण देहान्तरस्थेन कृतप्रायं तदा सुतरां तद्देहस्थेन कृतप्रायमेव ॥

## शेषतात्पर्यचन्द्रिका

सुप्तस्य जलबिन्दुवैषम्यानुपपत्तिः

एतेन — विवेककारणाभावात् जलबिन्दोरनुद्धरणम्; इह तु कर्माविद्यादिकारणभावात् सति सम्पन्नो जीव एवोत्थातुमर्हति। दृश्यते च दुर्विवेचयोरपि क्षीरोदकयोः संसृष्टयोर्हंसेन विवेचनमिति— निरस्तम् ॥

विवेको यदि भेदः तदा भेदकारणकर्माविद्यादेरिव जलबिन्दोरपि भेदकारणमायादेः सत्त्वेन वैषम्याभावात्। अम्बुधिजलसम्पर्कमात्रेण दुर्ज्ञेयोऽपि भेदः स्वकारणवानेव स्वीकार्यः। अन्यथा क्षीरोदकयोः संसृष्टयोर्हंसेन विवेचनं दृश्यत इति स्वोक्तिविरोधः। यदि विवेको भेदज्ञानं तदा तत्कारणाभावः जलबिन्दोरिव सुप्तस्याप्यस्तीति कथं वैषम्यम्? यस्तु सुप्तं विनष्टमेव मन्यते स कथं भेदकारणं तज्ज्ञानकारणं वाङ्गीकुर्यात्?

अनाद्यविद्याङ्गीकारे सुप्तौ सदभेदाप्राप्तेः

जाग्रत्सुषुप्तयोः वैषम्यानुपपत्तिः

किञ्च सुषुप्तो जीवः सदभेदमाप्तो न वा? नाद्यः। सुषुप्तावपि अविद्यालक्षणोपाधिसद्भावात्। अविद्याया अपि विनाशाङ्गीकारे 'अनाद्यविद्यावस्थानं जीवस्य कल्प्यते। अन्तःकरणस्थूलशरीराध्यासादेः जीवकल्पकस्य तदानीमभावात्। **सति संपद्य न विदुरिति** श्रुतिश्च सुषुप्तस्याज्ञानं गमयति' इत्यादिस्ववचनविरोधः। द्वितीये तु जाग्रत्समानधर्मत्वापत्तिः ॥

एतेन—अपि च न जीवो नाम कश्चित्परस्मादन्यो विद्यते, यो जलबिन्दुरिव जलराशेः सतो विविच्येत। सदेव तूपाधिसंपर्कात् जीव इत्यु-

## शेषतात्पर्यचन्द्रिका

पचर्यंत इत्यसकृत्प्रपञ्चितम् । एवं हि सति यावत् एकोपाधिगता बन्धानुवृत्तिस्तावत् एकजीवव्यवहारः । उपाध्यन्तरगतायां तु बन्धानुवृत्तौ जीवान्तरव्यवहारः । स एवायमुपाधिः स्वापप्रबोधयोरपि बीजाङ्कुरन्यायेनेत्यतः स एव जीवः प्रतिबुध्यते—इति भाष्योक्तं निरस्तम् ॥

किञ्च सुषुप्तौ सदभेदमाप्तस्य पुनरुत्थानं न सम्भवतीति वदन्तं प्रति किमनेनोक्तं स्यात् ? अन्तःकरणाद्युपाधिविलयेऽपि सुषुप्तौ भ्रमतत्संस्कारादेः सत्त्वेन महाकाशात् घटाकाशो यावद्घटमनुवर्तते यथा तथा यावदुपाधि जीवोऽप्यनुवर्तत इति पुनरुत्थानं भवतीत्यनेनोच्यत इति चेत् , भ्रमसंस्काराद्युपाधिसम्बन्धेऽङ्गीक्रियमाणे सुषुप्तौ ब्रह्मैक्यानुपपत्तिः । अन्यथा जाग्रत्यपि तथाऽऽपत्तिः । न च जाग्रति उपाध्युद्भवः, सुषुप्तौ तु तदनुद्भव इति वैषम्यमिति वाच्यम् । अनुद्भूतोपाधिसम्बन्धवतोऽप्यभेदानुपपत्तेः । अन्यथा मूर्च्छादावपि स्थूलशरीराध्यासादेरनुद्भूतत्वेन तदापत्तिः[1] । भावरूपाज्ञानलक्षणोपाधेर्जाग्रतीव सुषुप्तावप्यभिभवाननुभवाच्च । न किञ्चिदवेदिषमिति स्मरणेन **सति सम्पद्य न विदुः** इति श्रुत्या च अनभिभवप्रतीतेश्च ॥

एतेन—जाग्रति भूयसी ह्यज्ञानस्यानुवृत्तिः, सुषुप्तौ त्वेकदेशेन—इति निरस्तम् । निरंशस्याविद्याशब्दविदितस्याज्ञानस्यैकदेशायोगाच्च । जाग्रत्यज्ञानमल्पम्, सुप्तौ तु भूय एवेति सर्वानुभवसिद्धमिति तद्वैपरीत्यायोगाच्च ॥

[1] तथाऽऽपत्तिः

## शेषतात्पर्यचन्द्रिका

सौत्र 'स एव तु' भागव्याख्यापरीक्षा

सूत्रार्थोऽप्ययुक्त एव। तच्छब्देन आत्मनि इति पूर्वसूत्रे सप्तम्यन्तेन प्रकृतस्यात्मन एव परामर्शसम्भवे समभिव्याहारादिना प्रकृतसुषुप्तजीवपरामर्शायोगात्। स एवेत्यत्र एवकारेणैव पूर्वपक्षव्यावृत्तिसम्भवे पक्षान्तरव्यावर्तकापपाठकल्पिततुशब्दवैयर्थ्याच्च ॥

कर्मानुस्मृतिशब्दविधिभ्य[1] इति हेत्वंशस्य 'कर्मशेषानुष्ठानं कर्मशब्देनोच्यते' इति विवरणं लक्षणाप्रसङ्गादेवायुक्तम्। स्मृतिमात्रेणैवान्योत्थाननिवारणसम्भवे अनुशब्दो व्यर्थः ॥

मन्मते तु वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम्' 'कामादितरत्र तत्र चायतनादिभ्यः' 'प्राणभृत उपदधाति, सृष्टीरुपदधाति' इत्यादौ वृत्रहननप्रकाशकपदघटिते, वृद्धिप्रकाशकपदघटिते, आयतनपदघटिते च मन्त्रे, प्राणभृच्छब्दघटितमन्त्रोपधेयेष्टकासु च वार्त्रघ्न्यादिपदानां प्रयोगेण बहुलेन निरूढलक्षणात्वावगमात् कर्मशब्दस्य कर्मण्यवधारणघटितश्रुतिपरत्वे न दोषः। अनुशब्दश्च अनुसारित्वं स्मृतेराहेति न व्यर्थः॥

सौत्र 'कर्म' 'अनुस्मृति' पदयोः व्याख्यापरीक्षा

अत्रोक्तं भामत्याम्—यद्धि द्व्यहादिनिर्वर्तनीयम् एकस्य पुंसश्चोदितं कर्म तस्य पूर्वेद्युरनुष्ठितस्य अस्ति स्मृतिरिति वक्तव्ये अनुः प्रत्यभिज्ञानसूचनार्थः[1]। अत एव सोऽहमस्मीति च आत्मानुस्मरणं नात्मान्तरोत्थानेऽवकल्पत इत्युक्तं भाष्ये—इति ॥

---

[1] प्रत्यभिज्ञानार्थः

## शेषतात्पर्यचन्द्रिका

तन्न। अनुस्मृतेरपि स्मृतिशब्देन ग्रहणसम्भवे कर्मस्मृतेरपि उक्तरीत्या हेतुत्वसम्भवेऽपि तद्व्यावर्तनाय अनुपयोगस्यायुक्तत्वात् ॥

### सौत्र 'शब्द' पदव्याख्यापरीक्षा

शब्देभ्यश्च तस्यैवोत्थानमवगम्यते। तथा हि, 'पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव' 'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' 'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तदा भवन्ति' इत्येवमादयः शब्दाः स्वापप्रबोधाधिकारे पठिताः नात्मान्तरोत्थाने सामञ्जस्यमीयुः इति—तृतीयहेतुव्याख्यानमप्ययुक्तम्। त्वन्मते ब्रह्मणः संसाराङ्गीकारेण तदपेक्षया बुद्धान्ताय जाग्रदवस्थायै, प्रतियोनि अक्ष्यादिस्थानं, पुनः पुनः गच्छतीत्युक्तिसम्भवेन जीवान्तरोत्थानपक्षेऽपि सामञ्जस्यसम्भवात्। उत्थितस्य जीवान्तरस्य सुप्तजीवान्तरात् व्यक्त्यन्तरत्वेऽपि तदनुस्यूतचिन्मात्राव्यतिरेकात् पुनः पुनः द्रवतीत्युक्तिसम्भवाच्च। त इह व्याघ्रो वेत्यादिश्रुतिस्तु न प्रकृतार्थसाधिका। 'सुषुप्तेः प्राक् यद्यद्भवन्ति व्याघ्रादिजन्मानुभवन्ति, तदा सुषुप्तेरुत्थानानन्तरमपि, तद्भवन्ति व्याघ्रादिजन्मजातमनुभवन्ति। न हि सुषुप्तस्य व्याघ्रादेरुत्थानानन्तरं व्याघ्रादिजन्मप्रहाणमस्ति। जीवान्तरोत्थाने तु व्याघ्रादिजन्मप्रहाणेन जन्मान्तरप्राप्तिरपि श्रूयेते'ति व्याख्यानेन प्रकृतसङ्गतिर्भविष्यतीति चेत्, सुप्तजीवकर्मनिर्मितव्याघ्रादिशरीरप्रापककर्मान्तरवतो जीवान्तरस्य

## शेषतात्पर्यचन्द्रिका

व्याघ्रादित्वप्राप्तिसम्भवात् । दृष्टा चान्यार्जितस्याप्यन्येन[1] भुक्तिः, **सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति** श्रुतौ । **'सति सम्पद्य न विदुः सति सम्पत्स्यामहे, सत आगम्य न विदुः सत आगच्छामहे** इति पूर्ववाक्योक्तं ब्रह्माधारत्वादिना स्वात्मानमजानतां निन्दार्थं प्रवृत्ते **त इह व्याघ्रो वा सिंहो वा** इत्यादिवाक्ये तच्छब्देन ब्रह्माज्ञानिनो निर्दिश्य भगवदज्ञानापराधात् व्याघ्रादितिर्यग्जन्मजातम् अनुभवन्ती'ति व्याख्यानस्यैव युक्तत्वाच्च । अन्यथा मनुष्ययोनेः प्राधान्येन तदतिक्रमेण व्याघ्रादित्वेन कीर्तनायोगात् ॥

सौत्र 'विधिभ्यः' पदव्याख्यानपरीक्षा

यच्च—कर्मविद्याविधिभ्यश्चैवमेवावगम्यते ; अन्यथा हि कर्मविद्याविधयोऽनर्थकाः स्युः, सुषुप्तिमात्रेणैव मोक्षसम्भवात् इति चतुर्थहेतुव्याख्यानम्—तदपि न । त्वन्मते ब्रह्मण एकजीवभावापगमेऽपि जीवान्तरत्वानपगमात् विधिसार्थक्यसम्भवात् । सति सम्पन्नस्य मुक्तिः सम्यङ्नेति सम्यङ्मुक्तिसिद्ध्यर्थं निर्गुणोपास्तिविधेरिव कर्मादिविधेरपि सार्थक्योपपत्तेश्च ॥

परीक्षाफलम्

तदेवं परव्याख्यानस्य निर्वोढुमशक्यतया सर्वज्ञमुनिकृतव्याख्यानमेव दोषगन्धवैधुर्यात् शिरसा वहनीयं सूरिभिरिति सिद्धम् ॥

टीकायां पूर्वपक्षन्यायविवरणव्याख्यानम्

अत्र पृथग्भवन्न्यायमेव पूर्वपक्षोपपादकत्वेन विवृण्वत् **न च राजादीनां पृथग्दर्शनादीशान्तरकल्पना** इति वाक्यं व्याचष्टे **राजादीनां खण्डेशत्व-**

1 ष्यनेन

शेषतात्पर्यचन्द्रिका

**दर्शनादिति**। तथा च न्यायमालायां विवरणे च पृथगिति भावप्रधानः। **भवशब्दश्च** भवत्यनेन वस्तुनिर्धारणमिति दर्शनपरः। तथा च पृथक्त्वदर्शनादिति सिद्धयति। तस्य तात्पर्यं खण्डेशत्वदर्शनादितीति ज्ञातव्यम् ॥

टीकायां सिद्धान्तविवरणभाष्ययोः व्याख्यानम्

**सन्मानन्यायमेतदधिकरणसिद्धान्तोपपादकतयापि विवृण्वन्** —

**'देशकालविशेषेऽपि स्वप्नादीनां स एव हि।**
**तिरस्कर्ता च कर्ता च न खण्डेशः स राजवत्'**

**इति श्रुतिमानात्** इति वाक्यं भाष्येण सहैव व्याचष्टे **स परमात्मैवेति** ॥

विवरणे श्रुत्युदाहरणकृत्यम्

**आत्मानमेव लोकमुपासीत** इति भाष्योदाहृतविधेरेवकारस्य अनेकार्थत्वेन सावकाशत्वात् विवरणे निरवकाशश्रुत्युदाहरणमिति ध्येयम् ॥

संक्षेपभाष्ये संध्यादिषडधिकरणतात्पर्यसूचनम्

अत्र षण्णामधिकरणानां, **सर्वदेशेषु कालेषु स एकः परमेश्वरः। सर्वावस्थाप्रेरकश्चेति** संक्षेपभाष्येण तात्पर्यमुक्तं वेदितव्यम् ॥

षण्णां विवरणपेटिकान्तर्भावः

अत्र जन्मादिसूत्रे **यत** इति पञ्चम्युक्तं कारणत्वं न राजादिवत्सखण्डेशत्वरूपं, किन्तु लोकविलक्षणमेवाखण्डेशत्वरूपमिति विवरणं फलितम् ॥

**इति कर्मानुस्मृत्यधिकरणम् ॥६॥**

॥ अथ सम्पत्त्यधिकरणम् (मुग्धप्राप्त्यधिकरणम्) ॥ ७ ॥

## ॥ ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ ॥ १० ॥

मोहावस्थायां परमेश्वरेऽर्धप्राप्तिर्जीवस्य ॥

'हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति ।
समीपस्थस्तथा स्वप्नं स्वपित्यस्मिँल्लयं व्रजन् ॥
यत एवं त्रयोऽवस्था मोहस्तु परिशेषतः ।
अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेः ॥

इति वाराहे ॥

सोऽपि तत एवेति सिद्धम् ॥

'मूर्च्छा प्रबोधनं चैव यत एव प्रवर्तते ।
स ईशः परमो ज्ञेयः परमानन्दलक्षणः ॥'

इति कौर्मे ॥ १० ॥

---

### तत्त्वप्रकाशिका

सङ्गत्यादि

सर्वावस्थानां तद्बोधानां चेश्वराधीनत्वे सिद्धे अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं तस्य अवान्तरावस्थासंस्थितजीवप्राप्यत्वनिरूपणादस्ति शास्त्रादिसङ्गतिः । अन्यथा निरतिशयैश्वर्याभावेन न तत्र भक्तिरुत्पद्यत इति निरूपणीयम् । अवस्थाविचारप्रसक्तो मोहोऽत्र विषयः । किं जीवस्येश्वरे, तदन्यत्र वा भवतीति सन्देहः । द्विविधावस्थादर्शनं च सन्देहबीजम् ॥

## तत्त्वप्रकाशिका

पूर्वपक्षः

न मोहो भगवदितरत्र जीवस्येति पूर्वः पक्षः । जाग्रत्स्वप्नयोः पृथगवस्थात्वात् । अन्यथा तत्संकीर्णतापातात् । न चैवं सुप्तिसंकरप्रसङ्गो दोषः । समानधर्मतया तत्संकरस्य गुणत्वात् । अतः परमात्मन्येव मोहो जीवस्येति ॥

सिद्धान्तः

सिद्धान्तयत्सूत्रमुपन्यस्य प्रतिज्ञांशं तावद्व्याचष्टे **मुग्ध इति** । हेत्वंशं व्याख्यातुं समस्तसूत्रार्थे स्मृतिमुदाहरति **हृदयस्थादिति** । मोहे तावत् परमात्मविदूरत्वसामीप्यप्रवेशार्धप्रवेशाः प्रसक्ताः । न तावत् त्रयः कल्पाः मोहे सम्भवन्ति । जाग्रदाद्यवस्थाधर्मत्वात् । एवं च प्रसक्तप्रतिषेधेऽन्यस्याप्रसङ्गात् परिशिष्टोऽर्धप्रवेश एव मोहे जीवस्य ज्ञायत इति भावः । मोहस्य अवस्थात्रयातिरेकित्वे भवेदेतत् । तदेव कुत इत्यत आह **दुःखेति** । न तावत्सुप्त्यन्तर्भावो मोहस्य । दुःखानुसन्धानात् । नापि जाग्रत्स्वप्नान्तर्भावः । दुःखात्मकालाद्यतिरिक्तविषयादर्शनादिति भावः । नातिदूरसामीप्यं चिरं नास्तीत्यप्रसङ्गः ॥

मोहेऽर्धप्राप्तिसमर्थनाय परिशेषे प्रकारान्तरप्रदर्शनं चैतत् । **न मोहे** समग्रप्राप्तिः । दुःखानुसन्धानात् । नाप्यप्राप्तिरेव । अन्यार्थादर्शनात् । अतः परिशेषादर्धप्राप्तिरिति । दूरस्थः अक्षिस्थः । समीपस्थः कण्ठदेशस्थः । **दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजस** इत्यादेः । **सर्वत्र सामीप्य-**

### तत्त्वप्रकाशिका

मेवेत्यत उक्तं **हृदयस्थादिति** । त्रयःतिस्रः । दूरस्थत्वादित्रयः प्रकाराः यत एवमवस्थात्रये विनियुक्ताः, अतो मोहोऽवस्थेति वा ॥

मोहे अवस्थानमेव चिन्त्यते, तस्येश्वराधीनता कुतो न चिन्त्यते मोहकारणानां पृथगपि दर्शनादित्यत आह **सोऽपीति** । कर्मानुस्मृत्यादिनैव मोहस्यापि भगवदधीनत्वं सिद्धमित्यतो न चिन्त्यत इत्यर्थः । बाह्यकारणदर्शनं निमित्तविषयम्, अन्यथा विशेषस्मृतिविरोधादिति भावेन तामुदाहरति **मूर्च्छेति** अत एव सार्थकोऽयं विचारः । अनिश्चितस्वरूपस्येश्वराधीनताया दुर्ज्ञानत्वात् । अतो मोहावस्थाया अपि भगवदधीनत्वान्मुग्धप्राप्यत्वाच्च महामाहात्म्ये तत्र भक्तिरुपपन्नेति सिद्धम् ॥ १० ॥

—:o:—

## शेषतात्पर्यचन्द्रिका

विवरणपेटिका

## ॥ ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ ॥ १० ॥

अनन्तरसङ्गतिः

यथा पूर्वत्र 'एष ह्येव साधु कर्म कारयति' 'आत्मानमेव लोकमुपासीत' इत्यादिपक्षान्तरनिरासकप्रमाणादखण्डेशत्वमङ्गीकृतं, तथा अन्यार्थादर्शनरूपादप्राप्त्यादिपक्षान्तरनिरासकात्प्रमाणात् समग्रप्राप्तिरेव, अत एवावस्थान्तरत्वाभावोऽपीति शङ्कनाद्वा, सामान्यतो भगवत्प्राप्तिसमर्थनानन्तरं तद्विशेषार्धप्राप्तिश्चिन्त्यत इति वा, कर्मानुस्मृत्यादिनैव जाग्रदादितिसृणां स्वतन्त्रावस्थानां, तद्बोधानाञ्च भगवदधीनत्वमिव सुषुप्त्यवान्तरावस्थायास्तद्बोधस्य च भगवदधीनत्वमित्यतिदेशनाद्वानन्तरसङ्गतिः ॥

मोहस्य अवस्थान्तरत्वचिन्ता

मोहावस्था किं पदार्थान्तरं न भवत्युत भवतीति चिन्तनीयम्। तदर्थं सा किं जीवस्य अक्षिकण्ठेश्वराणामन्यतमे भवत्युत तदन्यत्रेति ॥

टीकायामपीयमेव चिन्ताभिप्रेता। अन्यथा सिद्धान्तेऽपीश्वरे प्रवेशस्य अक्ष्यादौ प्रवेशाभावस्य वाङ्गीकृतत्वेन 'ईश्वरे तदन्यत्र वे' त्यनयोः पूर्वपक्षसिद्धान्तकोटित्वानुपपत्तेः। अक्षणि कण्ठे वेति कोटिद्वयं दुर्बलमेवेति न चातुष्कोटिक एव संशयः प्रदर्शितः। न त्वनभिप्रेतत्वात्। नाप्यप्राप्तिरेव, अन्यार्थादर्शनादिति स्वयमेव पक्षद्वयदूषणात् ॥

## शेषतात्पर्यचन्द्रिका

त्रिविधः पूर्वःपक्षः

तत्र मोहो जाग्रदवस्थैव न तु पदार्थान्तरम्, दक्षिणाक्षिस्थितिरूपो वा। स्वप्नसुषुप्तिभ्यां पृथगवस्थात्वात्। मोहो न स्वप्नः, जाग्रद्दुःखानुभवात्। नापि सुषुप्तिः सुखाननुभवात्। ततः परिशेषाज्जाग्रदेवेति—प्रथमः पक्षः॥

मोहः स्वप्नः, कण्ठदेशस्थितिरूपो वा। जाग्रत्सुषुप्तिभ्यां पृथगवस्थात्वात्। बाह्यार्थज्ञानाभावान्न जाग्रदवस्था। नापि सुप्तिः। सुखाननुभवात्। ततः परिशेषात् स्वप्न एवेति— द्वितीयः॥

इदं च पूर्वपक्षद्वयं **मोहे ब्रह्मप्राप्तिरेव, पृथगवस्थात्वादिति** न्यायविवरणेऽब्रह्मप्राप्तिरेवेति पदविभागेन गम्यते॥

**मोहः सुप्त्यतिरिक्तो न, भगवत्प्राप्तिरेव वा।**
**जाग्रत्स्वप्नपृथक्त्वेन परिशेषत इष्यताम्॥**
न च **मोहो न सुप्तिरूपस्स्याज्जाग्रदादिपृथक्त्वतः।**
**परिशेषादिति न चेदुक्तं सर्वं न चेष्यताम्॥**

इति वाच्यम्। भगवत्प्राप्तिरूपत्वानङ्गीकारे अक्षिकण्ठस्थितिरूपत्वापत्त्या जाग्रत्स्वप्नसाङ्कर्यप्रसङ्गेन पृथगवस्थात्वहेतूच्छित्तिलक्षणबाधकतर्कवदिह तदभावात् सुप्तिसाङ्कर्यस्य समानधर्मतया गुणत्वेनानिष्टत्वाभावात् तर्कस्याभासत्वादिति। एवञ्च मोहस्य सुप्त्याद्यतिरिक्तत्वाभावेन तत्स्थजीवप्राप्यत्वातिरिक्तं माहात्म्यं न सेत्स्यतीति न तत्रातिशयेन भक्तिः कर्तव्येति—तृतीयः॥

शेषतात्पर्यचन्द्रिका

सिद्धान्तः

अत्र ब्रूमः—

**मोहोऽवस्थात्रयाद्भिन्नो दुःखमात्रप्रतिस्मृतेः ।**
**परिशेषाद्धृदिस्थात्तु हरेरन्यत्र सेत्स्यति ॥**

तथा हि मोहो जीवस्य न तावदक्षणि सम्पत्तिः । नापि कण्ठे । दुःखात्मकालाद्यतिरिक्तविषयादर्शनात् । नापि हृदिस्थहरौ । दुःखानुसन्धानात् । ततश्चैवमवस्थान्तरत्वनिश्चयादर्थात्तत्स्थजीवप्राप्यत्वलक्षणमाहात्म्यं सुप्त्यधिकरणसिद्धादन्यदेव सिद्ध्यति ॥

अन्तर्भेदाधिकरणतया मोहस्य अवान्तरावस्थात्वचिन्ता

एवं मोहस्यावस्थान्तरत्वे सिद्धेऽवान्तरावस्थात्वसिद्ध्यर्थमिदमधिकरणमसमाप्यैवान्तर्भेदाधिकरणतया किञ्चिच्चिन्त्यते । स किं मोहः स्वतन्त्रावस्था, उत अवान्तरावस्थेति । तदर्थं स किम् अक्षिकण्ठेश्वराणाम् अन्यतमान्यस्मिन्नेव भवति, उत तदन्यस्मिन्नपीति । यद्यक्ष्णः कण्ठादीश्वराच्चान्यत्रैव तदा तेष्वन्तर्भावासम्भवात् स्वतन्त्रावस्थात्वमेव। यदि तदन्यत्रापि तदा तेष्वन्तर्भावसम्भव इत्यवान्तरावस्थात्वम् । ईश्वरादन्यत्र मोहो जीवस्येति पूर्वोक्तेरुभयथा सम्भवः सन्देहबीजम् ॥

पूर्वपक्षः

तत्र पूर्वः पक्षः—

**मोहः स्वतन्त्रावस्था स्याद्दुःखमात्रप्रतिस्मृतेः ।**
**हरेरन्यत्र मोहोऽस्य न हरौ क्वचिदिष्यते ॥**

शेषतात्पर्यचन्द्रिका

हरेरन्यत्रैव तावन्मोहोऽङ्गीकार्यः। हरावपि चेद्दुःखमात्रस्मृत्यनुपपत्तिः। अत एव नाक्षणि, न कण्ठे। ततः परिशेषात्स्वतन्त्रावस्थात्वम्। न च बाह्याज्ञानादिसाधर्म्येण तेष्वन्तर्भावः। अप्रयोजकत्वात्। अन्यथा गुणादीनां षण्णां निर्गुणत्वसाम्येन स्वतन्त्रपदार्थान्तरत्वं न स्यात्। अस्य कुत्रान्तर्भाव इति विचिकित्सायां विनिगमनाविरहाच्च। न च विभाजकोपाधेरसम्भवः। नातिदूरसामीप्यस्य सम्भवादिति ॥

सिद्धान्तः

सिद्धान्तस्तु—

**परिशेषात्तु मोहस्य सुप्त्यन्तर्भावसम्भवः।**
**अन्तरङ्गेण धर्मेण ह्यन्तर्भावो विधीयते ॥**

न मोहे भगवति समग्रप्राप्तिः। दुःखानुसन्धानात्। नाप्यप्राप्तिरेव। अन्यार्थादर्शनात्। अतःपरिशेषादर्धप्राप्तिः॥

न च नातिदूरसामीप्याख्यधर्मान्तरेणान्यथासिद्धिः। चिरकालीनो हि मोहः। दिनद्वयपर्यन्तमपि मूर्च्छादर्शनात्। अक्षिकण्ठमध्यावस्थितिरूपं नातिदूरसामीप्यं तु चिरकालीनं[1] न भवति। अक्ष्णो निर्गमनानन्तरं कण्ठं प्रति गन्तुं विलम्बायोगात्। न हि प्रयोज्यं चिरकालीनं, प्रयोजकं तद्विपरीतमिति युक्तम्, व्याहतेः। न च नातिदूरसामीप्यमपि चिरकालीनं कल्पनीयम्, गौरवात्। दुःखमात्रप्रतिस्मृतीतरार्थादर्शनयोश्च अर्धप्राप्त्येव तेन निर्वाहा-

[1] चिरकालं

## शेषतात्पर्यचन्द्रिका

योगाच्च। अर्धनिद्रितस्य बाह्यान्तरज्ञानयोः सत्त्वाच्च। अर्धप्रवेशे तु परमात्मनार्धमन्तर्निवेशितत्वात् सुप्ताविव न बाह्यं जानाति, बहिश्चार्धं निष्कासितत्वात् जाग्रदादाविव किञ्चिद्बाह्यं जानाति चेति भवति तेन तयोर्निर्वाहः ॥

न चैतावता सुप्त्यत्यन्ताभेदः। तद्विरुद्धानां दुःखमात्रप्रतिस्मृत्यादीनां धर्मान्तराणां सत्त्वात्। अन्यथा अनुष्णाशीतस्पर्शनित्यानित्यसदसदादीनां शीताद्यत्यन्ताभेदोऽपि स्यात्। अत एव **'वायुर्वै क्षेपिष्ठा देवता' 'ऊर्जोऽवरुद्ध्यै' 'तेन ह्यन्नं क्रियते'** इत्यादीनामानर्थक्यप्रतियोगित्वरूपसामान्यधर्मसङ्करेऽपि विधिप्रतियोगित्वहेतुप्रतियोगित्वरूपधर्मान्तरासाङ्कर्येण अधिकरणान्तरारम्भवत् भगवत्प्राप्तिरूपसाधारणधर्मेण साङ्कर्येऽपि समग्रप्राप्त्यर्धप्राप्तिरूपविशेषधर्मासाङ्कर्येण इहाप्यधिकरणारम्भो नायुक्तः ॥

ननु जीवस्याणोर्निरंशस्यार्धप्राप्तिरेवायुक्ता। नैवम्। निरंशस्यापीशशक्त्या कृत्स्नप्रसक्त्यादिदोषपरिहारायैकदेशेन प्रवृत्त्यादिवत् इहाप्यर्धप्राप्तिसम्भवात्। एतेन निरंशमपि जीवं स्वशक्त्या बहिश्चान्तश्चार्धं निवेशयतीत्युक्तौ समग्रप्रवेशादधिकमाहात्म्यलाभेन[1] 'नेदं निरतिशयैश्वर्यरूपमि'ति निरस्तम् ॥

ततश्च परिशेषादर्धप्राप्तिसिद्धौ सुप्त्यन्तर्भाव एव न्याय्यः। प्रवेशे अर्धप्राप्तेरन्तरङ्गत्वात्। एतेन विनिगमनाविरहो निरस्तः। अत एव गुणादीनां षण्णां निर्गुणत्वसाम्येनेत्यादि निरस्तम्। अन्तर्भावोऽत्यन्तसादृश्ये

---

[1] लाभे

## शेषतात्पर्यचन्द्रिका

भवति। न तु सादृश्यमात्रेण। आत्मनि चेतनत्वसामान्येन परमात्मन इव, नित्यत्वसाम्येनाकाशादीनाम् अन्तर्भावादर्शनात्। एतेन सङ्गतिटीकावाक्यं नायुक्तम्। अर्धप्राप्तिसाधनस्यैवावान्तरावस्थात्वसाधनरूपत्वात्। तस्मादवान्तरावस्थासंस्थितजीवप्राप्यत्वं सिद्धम् ॥

अन्तर्भेदाधिकरणतया मोहस्य भगवदधीनत्वचिन्ता

मोहस्य भगवदधीनत्वसिद्ध्यर्थमिदमसमाप्यैव पुनश्चिन्त्यते—मोहः, तत्प्रसङ्गसन्निधापिततत्प्रबोधश्च किमभिघाताद्यौषधाद्यधीनौ उत भगवदधीनाविति ॥

पूर्वपक्षः

**ईशेतरस्यास्वातन्त्र्येऽप्युक्ते प्रत्यक्षलालसः।**
**मोहादेरन्यथोत्पत्तिं मन्द आशङ्कते पुनः—**

अन्याधीनावेव, कारणानां पृथगपि दर्शनात्। न च तेषामचेतनतया स्वातन्त्र्याभावः। प्रहर्तॄणां, भिषजां च चेतनत्वात्। न च चेतनानामपि अस्वातन्त्र्यमुक्तमिति वाच्यम्। सत्यमुक्तम्। प्रहर्तृभिषजोस्तत्कर्तृत्वेन प्रत्यक्षस्य बहुत्वात्। बहूनां बाधने विशिष्य प्रमाणादर्शनादिति ॥

सिद्धान्तः

सिद्धान्तस्तु—

**'मूर्च्छा प्रबोधनं चैवे'त्यादिवाक्याद्भ्रमत्वतः।**
**प्रत्यक्षस्य बहुत्वेऽपि नेष्टसिद्धिर्भविष्यति ॥**

शेषतात्पर्यचन्द्रिका

यतो मोहे भगवत्यर्धप्राप्तिः समर्थिता, अतो भगवदधीनत्वं मोहप्रबोधयोः परिशेषात्। मोहो ह्यर्धप्राप्तिरित्युक्तम्। न हि कश्चिदपि भगवति एनं तत्प्रेरणामन्तरेण प्रवेशयितुं तदन्तर्निगूहितुम् उत्कष्टुं वा ईष्टे। न चैवं बाह्यकारणदर्शनविरोधः। मूर्च्छा प्रबोधनं चैव इत्यादिकौर्म[1]वचनविरोधेन स्वातन्त्र्यांशे तस्य भ्रमत्वनिश्चयात् इति॥

एतच्चिन्तायाः टीकानुमतत्वम्

टीकायां मोहे अवस्थानमेव चिन्त्यते इत्यादिवाक्यं नान्तर्भेदाधिकरणत्वेनापि भगवदधीनत्वं न चिन्तनीयमित्यभिप्रायम्। तथा सति बाह्यकारणदर्शनरूपविशेषाशङ्कायाः निराकरणाय मूर्च्छा प्रबोधनमित्यादिभाष्योदाहृतस्मृतेस्तदवतारटीकायाश्चायोगात्। अनिश्चितस्वरूपस्येश्वराधीनताया अपि दुर्ज्ञानत्वात् इत्यादिटीकयापि भगवदधीनत्वस्यापीह साध्यत्वावगमाच्च। किन्तु मुखतः प्रथमतो वा न चिन्त्यत इत्येतदभिप्रायम्॥

सूत्राक्षरार्थः

सूत्रार्थस्तु—मुग्ध इति भावे कर्तरि कर्मणि च। तदभाव इत्यत आत्मनीति, तृतीयान्ततया वा विपरिणामेन वर्तते। मुग्ध इत्यावृत्तं, षष्ठ्यन्तं वा। ततश्च मोहे जीवस्य पारिशेष्यात् यः समप्रसंपत्त्यादिना सुप्त्याद्यभेदः पूर्वपक्षिणाऽऽक्षिप्तः स न युज्यते। कुतः? यतः परिशेषात् मुग्धे मोहे जीवे जीवस्य वा आत्मना आत्मनि वा अर्धसम्पत्तिरेव। ततश्चावस्थान्तरत्वं

[1] कूर्मे

## शेषतात्पर्यचन्द्रिका

निश्चीयते। यद्वा अर्धसम्पत्तिर्यतः साधिता अतः परिशेषात् मोहस्यावान्तरावस्थात्वं सिध्यति। यद्वा मोहे यतो भगवत्यर्धप्राप्तिः समर्थिता, अतः मोहस्य भगवदधीनत्वं सिध्यतीति ॥

अत्र परैरभिमतम् अधिकरणशरीरम्

अन्ये तु—तिस्रस्तावदवस्थाः सशरीरजीवस्य प्रसिद्धाः, जागरितं स्वप्नः सुषुप्तमिति। चतुर्थी च शरीरादपसृप्तिः। मूर्च्छा च क्वचिद् व्यवह्रियते। सा किं चतसृणामेवावस्थानामन्यतमा उत पञ्चममवस्थान्तरमिति संशये—

चतसृणामेव अन्यतमावस्था; न तु पञ्चमी काचिदवस्था जीवस्य श्रुतौ स्मृतौ वा प्रसिद्धास्ति। यद्यपि विशेषज्ञानाभावात् मूर्च्छा जाग्रत्स्वप्नाभ्यां भिद्यते। पुनरुत्थानाच्च मरणावस्थायाः। तथापि सुप्तिरेव मूर्च्छा। विशेषज्ञानाभावाविशेषात्। चिरानुच्छ्वासवेपथुप्रभृतयस्तु[1] सुप्तेरेवावान्तरप्रभेदाः। तद्यथा कश्चित्सुप्तोत्थितः प्राह—सुखमहमस्वाप्सम्, लघूनि मे गात्राणि, प्रसन्नं मे मन इति। कश्चित्पुनः—दुःखमेवाहमस्वाप्सम्, गुरूणि मे गात्राणि, भ्रमत्यनवस्थितं मे मन इति। न चैतावता सुप्तेर्भिद्यते[2]। तथा विकारान्तरेऽपि मूर्च्छा न सुप्तेर्भिद्यते। तस्माल्लोकप्रसिद्ध्यभावान्नेयं पञ्चम्यवस्थेति प्राप्ते—

उच्यते। यद्यपि विशेषज्ञानोपशमेन मोहसुप्तयोस्साम्यम्। तथापि नैक्यम्। न हि विशेषविज्ञान[3]सद्भावमात्रेण स्वप्नजागरयोरभेदः। बाह्येन्द्रियव्यापारभावाभावाभ्यां[4] तु भेदे अनयोः[5] सुप्तमोहयोरपि प्रयोजनभेदात् कारण-

---

[1] प्रभृतयः  [2] सुप्ति  [3] विशेषज्ञान  [4] राव्यापाराभ्यां  [5] तयोः

## शेषतात्पर्यचन्द्रिका

भेदाल्लक्षणभेदाच्च भेदः। श्रमापनुत्त्यर्था हि ब्रह्मणा संपत्तिः सुप्तिः। शरीरत्यागार्था ब्रह्मणा सम्पत्तिर्मोहः। मुसलसंपातादिनिमित्तत्वान्मोहस्य। श्रमादिनिमित्तत्वाच्च सुषुप्तस्य[6]। करालमुखनेत्रादिलक्षणत्वान्मोहस्य। सुपुप्तस्य[7] संप्रसन्नवदनत्वादिलक्षणत्वात्। सुपुप्तस्य त्ववान्तरभेदेऽपि निमित्तप्रयोजनलक्षणाभेदादेकत्वम्। तस्मात्सुप्तमोहावस्थयोर्ब्रह्मणा सम्पत्तावपि सुप्ते यादृशी संपत्तिः न तादृशी मोह इत्यर्धसम्पत्तिर्युक्ता। तथा च,

> ब्रह्मभावाविशेषेऽपि लक्षणान्यत्वतो यथा।
> स्वप्नान्मृतेर्भिदा मुग्धेस्तथा लक्षणभेदतः—इति ॥

उक्तविचारस्य सङ्गत्यभावः

तन्न। स्यादिदं यदि स्वप्नसुपुप्त्यादिवच्चतुर्थी काचनावस्था सूचिता स्यात्। न चैवम्। असूचितायां चतुर्थ्यां कोऽवकाशः पञ्चम्याः। किञ्च यदि मूर्च्छा अवस्थान्तरं तर्हीदमधिकरणम् अवस्थाद्वयविचारानन्तरं सङ्गतं स एव तु कर्मेत्यतः प्राक्तनं तृतीयं स्यात्। मूर्च्छित एव पुनरुत्तिष्ठति उतान्य इति संशयस्य सुप्तपुरुष इव मूर्च्छितपुरुषेऽपि संभवेन स एवेत्यस्य एतदानन्तर्यमेव च युक्तम्। त्वन्मते मूर्च्छायाः मन्मत इवावान्तरावस्थात्वाभावेन प्रधानावस्थात्वव्यावृत्तये व्यवधानस्यायोगाच्च। स्वप्नादिवत्स्वतन्त्रमोहावस्थाया निरूपणानन्तरमेव तासु विशेषचिन्तायाः उचितत्वाच्च ॥

---

[6]-[7] सुप्तस्य

## शेषतात्पर्यचन्द्रिका

एतेन—पूर्वत्र 'सोऽहमस्मी'ति प्रत्यभिज्ञानात् सुप्तप्रतिबुद्धैक्यमुक्तम्, तर्हि विशेषज्ञानाभावप्रत्यभिज्ञानात् सुषुप्तिरेव मुग्धिरिति शङ्कनात्संगतिलाभेन व्यवधानं युक्तमित्यमलानन्दोक्तं—निरस्तम् । अवश्यवक्तव्यस्य मुग्धप्रतिबुद्धैक्यस्यावचनापत्तेः। सोऽहमस्मीत्यस्यानुभवस्य प्रत्यभिज्ञानत्वेऽपि न किञ्चिदवेदिषमिति विशेषज्ञानाभावस्मृतेः प्रत्यभिज्ञानत्वाभावाच्च । भाष्यभामत्योर्विशेषज्ञानाभावस्य च पूर्वपक्षहेतोरभिधानात् प्रत्यभिज्ञापर्यन्तधावनायोगाच्च ॥

पूर्वपक्षयुक्तेः दुर्बलत्वम्

किञ्चात्र यदि मूर्च्छा सुप्तिरेव विशेषज्ञानाभावादिति पूर्वः पक्षः, तदा मृतौ व्यभिचारः । यदि च पुनरुत्थानवत्त्वादिति तदा स्वप्नादौ व्यभिचारः । विशेषज्ञानहीनत्वे सति पुनरुत्थानवत्त्वादिति विशिष्टो हेतुरित्यमलानन्दमतमप्ययुक्तम् । इषुकारावस्थायां व्यभिचारात् । इषुकारो हि जाग्रदपीष्वासक्तमनस्कतया नान्यविषयान् वीक्षते इत्यादिवद्भाष्यादेव तदानीमिषुकारस्य विशेषज्ञानहीनत्वावगमात् । इष्वन्यविषयविशेषज्ञानाभावेऽपि इषुविषयकविशेषज्ञानमस्तीति चेन्न। मुग्धेऽप्यहमिति विशेषज्ञानसद्भावेन हेतोरसिद्ध्यापातात् । तदा ब्रह्मत्वमात्रस्य ज्ञानरूपस्य विशेषज्ञानवत्त्वं नास्तीति चेन्न । कालान्धतमसाज्ञानादेरौत्तरिकानुस्मृतिसिद्धस्य विशेषज्ञानस्यावश्यंभावात् । यथाह भाष्यकारः—मुग्धस्तु लब्धसंज्ञो ब्रवीति, अन्धे तमस्येतावन्तं कालं प्रक्षिप्तोऽभवम्, न किञ्चिन्मया विदितमितीति ॥

## शेषतात्पर्यचन्द्रिका

अत एव मूर्च्छा मरणमेव सर्वेन्द्रियव्यापारोपरतेः इति वेदान्तदीपोक्तः केषाञ्चित्पूर्वपक्षोऽप्ययुक्तः। मूर्च्छितस्य प्राणोष्मादेरनुभूयमानतया तदपह्नवेन पूर्वपक्षानुत्थानात् ॥

### अन्तरङ्गधर्मैक्येन मोहसुषुप्त्योः भेदायोगः

सिद्धान्तोऽप्ययुक्तः। स यदि मूर्च्छायाः अवान्तरावस्थात्वाभ्युपगमेन प्रवर्तते तदा भाष्यभामत्यादिविरोधः। यदि च स्वतन्त्रावस्थात्वाभ्युपगमेन तदा सौत्रः परिशेषोऽसिद्धः। सुषुप्तावन्तर्भावसम्भवात्। यदत्रोक्तं भामत्याम्— प्रयोजनभेदात्कारणभेदाल्लक्षणभेदाच्च मोहसुषुप्त्योर्भेदः। विशेषज्ञानाभाव-साम्यमात्रेण तस्य तत्रान्तर्भावे विशेषज्ञानसाम्यमात्रेण स्वप्नजागरयोरपि[1] स स्यादिति—तन्न। बाह्यव्यापारोपरमानुपरमाभ्यां प्रसिद्धाभ्याम् अवस्थान्तरत्वे अन्तरङ्गप्रयोजकाभ्यां स्वप्नजागरितयोर्भेदेऽपि इह ब्रह्माभिव्यक्तिहेतुत्वेनान्तरङ्ग-भूतेन विशेषज्ञानाभावेन सुप्त्यन्तर्भावस्यैव न्याय्यत्वात्। अन्यथा सुप्तेष्वेव सुखानुभवदुःखानुभवयोर्विरुद्धयोरनुभवस्य त्वयैवाङ्गीकारेण सुप्तिरपि भिद्येत ॥

### सुप्तेः निमित्तप्रयोजनलक्षणाभेदासिद्धिः

अत्रोक्तं वाचस्पतिना—सुषुप्तस्य त्ववान्तरभेदेऽपि निमित्तप्रयोजन-लक्षणाभेदादेकत्वम्, मोहसुषुप्तयोस्तु तद्भेदाद्भेद इति—तन्न। सुप्तेर्निमित्त-प्रयोजनलक्षणानामभेदासिद्धेः[2]। दुःखमेवाहमस्वाप्सम्, गुरूणि मे गात्राणि इत्यादिविरुद्धानुभवस्यैवायोगात्। किञ्च यस्तु सुखमहमस्वाप्समित्याद्यनुस्मरति

[1] रितयोरपि
[2] मभेदे दुःख

## शेषतात्पर्यचन्द्रिका

तदीयसुप्तेः श्रमापनुत्तिः प्रयोजनम् । यस्तु पुनर्दुःखमेवाहमस्वाप्समित्यनु-[1] स्मरति तदीयसुप्तेः श्रमोत्पत्तिः प्रयोजनम् । एवं प्रसन्नवदनत्वादयोऽपि धर्मास्तयोर्भिद्यन्त एव। अत एव निमित्तभेदोऽप्यूह्यः । न हि दुःखानुसंधात्रन-नुसंधात्रोः सुप्तौ निमित्तं प्रयोजनं लक्षणञ्चैकमिति वक्तुं युक्तम् । तथा च लक्षणादिभेदेऽपि सुप्त्यन्तरस्य सुप्त्यवस्थात इवाविशेषान्मोहस्यापि भेदो न स्यात् । अन्यथा क्रोधावस्थाया अपि जाग्रदवस्थातो भेदः स्यात् । तत्रापि शान्तावस्थाधर्मप्रसन्नवदनत्वादिविरुद्धकराळवदनत्वादिक्रोधावस्थाधर्माणां बहू-नामुपलम्भात् ॥

### अन्तरङ्गधर्मैक्यस्यैवान्तर्भावप्रयोजकत्वम्

अत एव मुग्धिः सुप्तिर्न भवति कराळवदनत्वादिलक्षणत्वात् क्रोधाव-स्थावदिति निरस्तम्। मुग्धिः सुप्तिर्भवत्येव तदन्तरङ्गधर्मवत्त्वात् सुषुप्तिवत्[2] । इह विशेषज्ञानाभावो हि सुप्तेरन्तरङ्गम् । ब्रह्माभिव्यक्तिहेतुत्वात् । न चैतावता साम्यम् । अन्तरङ्गधर्मसाम्यस्य अन्तर्भावप्रयोजकतया अनुसर्तव्यत्वात् । अन्यथा ब्राह्मणेषु परिव्राजकानां, कुरुषु पाण्डवानां, गोषु बलीवर्दानां, तेजसि सुवर्णस्य, आलोकाभावे तमसश्च अन्तर्भावो न स्यात्। तेष्वपि शिखित्व-मुण्डित्वादीनां बहूनां विषमाणां धर्माणामुपलम्भात् । एतेन विशेषज्ञानहीनत्वस्य मृतावपि संभवाद्व्यभिचार इति निरस्तम्। अन्तर्भावप्रयोजकान्तरङ्गधर्मैक्यस्यैव विवक्षितत्वेन मृतौ तदभावात् ॥

[1] प्सं स्वमित्यनु [2] सुप्तिवत्

## शेषतात्पर्यचन्द्रिका

मोहस्य मरणार्थत्वायोगः

एतेन मरणायार्धसम्पत्तिर्मोह इति सिद्धान्त इति वेदान्तदीपोक्तः केषाञ्चित्सिद्धान्तोऽप्ययुक्तः। तत्र हि मरणायेति चतुर्थ्या शरीरत्यागार्था ब्रह्मणा सम्पत्तिर्मोह इत्युक्तं स्यात्। तच्चायुक्तम्। मूर्च्छितस्यापि पुनरुज्जीवनदर्शनेन तदा ब्रह्मसम्पत्तेः शरीरत्यागार्थत्वाभावात् ॥

यदत्रोक्तं—यद्यपि सत्यपि मोहे, न मरणम्, तथापि असति मोहे न मरणमिति मरणार्थो मोहो भवेदेवेति—तदपि न। न देहं बुबुधे गतम् इत्यादौ मोहेन विनापि मरणदर्शनात्। अनायासेन मृतानां तदभावाच्च। तत्रापि किञ्चित्कल्पनं प्रमाणशून्यम्। किञ्चैवम् अव्यभिचारनिश्चयकृतिसाध्यत्वज्ञानयोरपि, अन्वयव्यभिचारदर्शनेऽपि व्यतिरेकव्यभिचारादर्शनेन, व्याप्तिनिश्चयप्रवृत्ती प्रति हेतुत्वापत्त्या [1]अन्वयव्यभिचारस्यापि कारणत्वविरोधित्वेन 'तथाप्यसति मोहे न मरणमि'त्यङ्गीकृत्य अन्वयव्यभिचारं, परिहारायोगात् ॥

निरंशचैतन्येनार्धसंपत्त्ययोगः

त्वन्मते चैतन्यस्य निरंशत्वेन समग्रार्धादिव्यवहारायोगेन अर्धसम्पत्तिरिति सौत्रलक्षणस्यायुक्तेश्च। सुषुप्तिमोहावस्थयोः ब्रह्मणा सम्पत्तावपि सुप्ते यादृशी सम्पत्तिः न तादृशी मोह इति अर्धसम्पत्तिः सूत्रकृदुक्ता युक्तेति चेत् वार्तमेतत्। मन्मते अणोरपि जीवस्य अचिन्त्याद्भुतशक्त्या ब्रह्मणा

---

[1] प्रमाणशून्यम्। अन्वयव्यभिचारस्यापि

## शेषतात्पर्यचन्द्रिका

अर्धस्य निगरणम् अन्यार्धस्य बहिरवस्थापनमित्येवंरूपायाः अर्धसम्पत्तेः, सामस्त्येन निगरणरूपायाश्च समग्रसम्पत्तेः यादृक्तादृक्शब्दाभ्यामभिधानसम्भवेऽपि त्वन्मते विशेषलेशशून्येन ब्रह्मणा सम्पत्तिर्नाभिधातुं शक्यते। सामान्यवैषम्याभ्यामर्धत्वं सम्भवतीति चेत् न। पारिभाषिकत्वापातात्। जाग्रत्स्वप्नयोरपि विशेषज्ञानबाह्यज्ञानाभ्यां सामान्यवैषम्ययोः सद्भावेन तयोरप्यर्धप्राप्त्यापत्तेश्च ॥

सन्ध्यादिचतुरधिकरण्या त्वंपदार्थशोधनासंभवः

न स्थानतोऽपीत्यस्मात् प्राक् त्वंपदार्थो विधित्सितः इति वदतः मुग्धादिस्वरूपस्यैव प्रतिपादनाच्चतुरधिकरणीप्रमेयसङ्ग्रहविरोधाच्च ॥

अत्रोक्तं न्यायमालायां भारतीतीर्थेन — तदेवमधिकरणचतुष्टयेन त्वंपदार्थः शोधितः। तत्र स्वप्नसृष्टिमिथ्यात्वेन सुखदुःखकर्तृत्वाद्यवभासेऽपि जीवोऽसङ्ग एवेति शोधितम्। सुषुप्तौ ब्रह्मैक्येन तदेवासङ्गत्वमनुभावितम्। तस्यैव पुनः[1]प्रतिबोधनेन अनित्यत्वाशङ्का निराकृता। मूर्च्छाविचारेण[2] श्वासादिसर्वव्यवहारलोपेऽपि मरणे जीवविनाशो नाशङ्कनीय इति दर्शितमिति ॥

तन्न—जीवासङ्गत्वे स्वप्नमिथ्यात्वप्रतिपादनस्योपयोगादर्शनादित्युक्तत्वात्। अन्यथा जाग्रन्मिथ्यात्वप्रतिपादनस्यापि कथंचिदसङ्गत्वे उपयोगं सम्पाद्य तदनन्यत्वाद्यधिकरणमत्रैव निवेशनीयं स्यात्। गतार्थत्वं वा स्यात् ॥

[1] प्रबोधेन—प्रतिबोधेन [2] मूर्च्छाधिकरणे

## शेषतात्पर्यचन्द्रिका

द्वितीयाधिकरणे जीवासङ्गत्वे अनुभवस्य प्रमाणीकृतत्वेनासङ्गत्वमेव शोधितम्; न तु त्वंपदार्थो जीवः। तद्द्वारा जीवोऽपि शोधित इति चेत्तर्ह्येवं समस्तमेवेदं शास्त्रं त्वंपदार्थशोधनायेति स्यात्। तथा हि सति सर्वेषां वेदान्तानां ब्रह्मणि तात्पर्यं त्वयोच्यमानं भज्येत। विशिष्य चतुरधिकरणस्य जीवशोधकत्वोक्त्ययोगाच्च। किञ्च सुषुप्तौ ब्रह्मैक्येऽप्यसङ्गत्वस्यानुभवः कुतः? यावता ब्रह्मैक्यस्याप्यनुभवस्तव नेष्टः। ऐक्यस्य ब्रह्मस्वरूपस्य ब्रह्मस्वरूपानुभवविषयत्वे कर्तृकर्मभावविरोधात्। अत एव विशेषज्ञानाभावोऽङ्गीकृतः। सति चैवं का प्रत्याशा असङ्गत्वानुभवे?

तृतीयेऽप्यनित्यत्वशङ्का किं जीवविषयिणी अपाक्रियते, ब्रह्मविषयिणी वा? नाद्यः। त्वन्मतेऽपि[1] नश्वराहङ्कारादिना संवलितचैतन्यस्य जीवत्वेन, अहंकारादिनाशेन विशिष्टजीवनाशस्याभ्युपगतत्वेन तदपाकरणायोगात्। न द्वितीयः। सुप्तेर्जीवधर्मत्वेन तन्निबन्धनानित्यत्वशङ्काया जीवे उचितत्वेऽपि, अतद्धर्मे ब्रह्मण्यनौचित्यात्। किञ्चैवं सति इदं तत्पदार्थशोधनमेवेति चतुरधिकरण्या बहिरेव स्यात्॥

अत एव मूर्च्छाधिकरणप्रमेयसङ्ग्रहोऽप्यनुपपन्नः॥

तथा च,

आद्येऽधिकरणे स्वप्नमिथ्यात्वं प्रतिपादितम्।
द्वितीये ब्रह्मणि लयस्तृतीये चोत्थितिः पुनः॥

---

[1] त्वन्मते विनश्वरा

## शेषतात्पर्यचन्द्रिका

**चतुर्थे चार्थसंप्राप्तिरिति किं केन सङ्गतम् ?**
**तस्मात्सूत्रकृतो नैतद्व्याख्याने सङ्गतं मनः ॥**

सूत्रार्थायोगः

अत एव सूत्रार्थोऽप्ययुक्तः । मद्रीत्या मुख्याया एव अर्थसंपत्तेर्योगेऽपि पारिभाषिक्यास्तस्याः सूत्रकृदभिमतत्वायोगात् ॥

एतदधिकरणस्य अद्वैतप्रतिकूलत्वम्

एवं ब्रह्मणाऽर्थसम्पत्तिकथनेन भेदस्यैव प्राप्ततया अस्याधिकरणस्याद्वैतप्रतिकूलतादिकमूह्यम् ॥

संगतिटीकाभिप्रायः

टीकाक्षरार्थस्तु— ननु मोहस्येश्वराधीनत्वं तस्य जीवप्राप्यत्वं चेत्यादि स एव चेत्यतः पूर्वमेव चिन्तनीयम् । अवस्थानिरूपणप्रसङ्गात् । इह चिन्तने सङ्गत्यभावश्चेत्यत आह **सर्वावस्थानां तद्बोधानां चेति** । स्वतन्त्राणामिति शेषः । मोहो नाम न स्वतन्त्रावस्थितिरिति वक्ष्यते । स यदि प्राङ्निरूप्यते तदा स्वतन्त्रावस्था विज्ञायेत । स एव चेत्यनेन व्यवधाने तु स्वतन्त्रावस्थात्वबुद्धिर्निवर्तते । तन्निरूपणानन्तरमेव चैतन्निरूपणस्यावसर इति च विज्ञायते । तत इदं प्राङ्निरूपितमिति भावः ॥

एतच्चाय त्रिपर्वा विचार इति भावेन टीकायाम् एतत्प्रतिपाद्योक्तिः

अत्रार्थवादाधिकरणभावार्थाधिकरणादिष्विव, परमते रंहतिनय इव च अनेकपर्वा विचार इत्यभिप्रेत्यैतदधिकरणप्रतिपाद्यान्याह **अवान्तरावस्था-**

## शेषतात्पर्यचन्द्रिका

**संस्थितेति**। अवस्थात्वावान्तरत्वयोर्मोहे, भगवतः तत्स्थितजीवप्राप्यत्वात्मकतन्नियामकत्वस्य च निरूपणमत्र क्रियत इत्यर्थः। तेन मोहस्यावान्तरावस्थात्वं न क्वापि व्युत्पादितमिति चोद्यं निरस्तम्। ननु सूत्रे नैतानि प्रतिपाद्यानि दृश्यन्त इत्यतो न वयं मुखत एव तेषां प्रतिपाद्यतामाचक्ष्महे। किं त्वर्थादित्यभिप्रायेण विषयमाह **मोहोऽत्र विषय इति**॥

संशयटीकायाः पर्वत्रयसाधारण्येन प्रवृत्तिः

अत्र त्रिपर्वाणं विचारं मनसि निधाय साधारण्येन संशयं दर्शयति **किं जीवस्येश्वरे तदन्यत्र वा भवतीति सन्देह इति**। ईश्वर इत्यक्षिकण्ठयोरुपलक्षणम्। ततश्चाक्षणि वा कण्ठे वेश्वरे वा तदन्यत्र वेति चतुष्कोटिकोऽवस्थान्तरत्वसाधके पर्वणि संशयः। यथाश्रुते त्वक्षिकण्ठयोरव्याप्तिर्न स्यात्। अवान्तरावस्थात्वसाधके पर्वणि ईश्वर एव वा, समग्रप्राप्तिरिति यावत्, तदन्यत्रापि वा, अर्धप्राप्तिरिति यावदिति संशयः। भगवदधीनत्वसाधके तृतीये पर्वणि सिद्धान्तकोट्यादिः—तत ईश्वराधीन इति पर्यवस्यति—अत एव तदन्यत्र वेति, तदनधीनो वेति पूर्वपक्षकोट्यन्तश्च संशयः। तृतीयसाधारण्यार्थमेव समग्रप्राप्तिरुतार्धप्राप्तिरित्यादिरूपेण संशये दर्शयितव्येऽपि तिरोहितोऽस्मिन्निति द्रष्टव्यम्॥

पूर्वपक्षटीकान्यायविवरणयोः पर्वत्रयसाधारण्येन प्रवृत्तिः

अत्र पृथग्भवन्यायं विवृण्वन् **न च मोहे ब्रह्मप्राप्तिरेव, पृथगवस्थात्वादिति वाच्यम्** इति वाक्यमपि साधारणमिति भावेन तथैव पूर्वपक्ष-

शेषतात्पर्यचन्द्रिका

माह **न मोहो भगवदितरत्र जीवस्येति पूर्वः पक्ष इति** । अक्षिकण्ठयो-रप्युपलक्षणम् । अक्ष्णोऽन्यत्र नेति प्रथमः, कण्ठादन्यत्र नेति द्वितीयः, भगवदितरत्र नेति तृतीय इति प्रथमे पर्वणि त्रयः पूर्वपक्षाः । एतदर्थं **मोहे ब्रह्मप्राप्तिरेवेति** विवरणम् अब्रह्मप्राप्तिरिति छेदेनापि व्याख्येयम् । अब्रह्म-शब्देनाक्षिकण्ठयोः प्रत्यायनसम्भवात् । मोहो भगवादितरत्रापि न, अर्धप्राप्ति-र्नेति यावदिति द्वितीयपर्वणि पूर्वः पक्षः । भगवदितरत्र मोहो जीवस्य, न तु भगवति; तदधीनः, न तदधीन इति यावदिति तृतीये पूर्वः पक्षः । एतदर्थं मोहे ब्रह्मणः प्राप्तिरेव नास्ति कारणत्वेन, किं त्वभिघातादीनामेव कारणत्वेन प्राप्तिरित्येवं विवरणं व्याख्येयम् । अन्यथा मोहो भगवतीत्यवक्रोक्तिसम्भवे टीकायां वक्रोक्तिरनुपपन्ना स्यादिति ध्येयम् ॥

पर्वत्रयसाधारण्येन विवरणोक्तं हेतुं प्रथमपर्वणि पूर्वपक्षद्वयसम्बन्धित्वे-नोक्तरीत्या शिष्य एव निश्चिनोतीति मन्वानः तृतीयपूर्वपक्षसम्बन्धित्वेन स्वयं विवृणोति **जाग्रत्स्वप्नयोः पृथगवस्थात्वादिति** । सकाशान्मोहस्येति शेषः । यदि भगवतोऽन्यत्राक्षणि कण्ठे वा मोहस्तर्हि मोहस्य जाग्रत्स्वप्नाभ्यां पृथक्त्वं न स्यात् । तत्संकीर्णतापातादित्यर्थः । यदि भगवति मोहस्तदा तत्पृथक्त्वाभावरूपसुप्तिसांकर्यं स्यादिति प्रतितर्कमङ्गवैगुण्येन निराह **न चैवमिति** । उपलक्षणं चैतत् । उक्तरीत्या नार्धप्राप्तिः, नापि मोहो भगवदधीन इति च द्रष्टव्यम् ॥

एवमुपपादितं पूर्वपक्षजातमेकोक्त्योपसंहरति **अतः परमात्मन्येव मोहो जीवस्येति** । परमात्मन्येव मोहः । उपलक्षणमेतत् । अक्षण्येव, कण्ठ

शेषतात्पर्यचन्द्रिका

**एव;** नान्यत्र। अतः सुषुप्त्याद्यभेदः। ततः पदार्थान्तरत्वाभावेन तत्प्राप्यत्वं **न** माहात्म्यान्तरम्। किं च जीवस्य मोहः परमात्मनि प्रवेश एव। सामस्त्येनैव; नार्धतः। ततः स्वतन्त्रावस्थात्वमेव। किञ्च परमात्मन्यर्धसम्पत्तिरूपो **मोहो** जीवस्यैवाधीनो न भगवत इत्यर्थः॥

टीकायां वर्णकत्रयसिद्धान्तपरतया भाष्यविवरणव्याख्या

**सन्मानन्यायं** विवृण्वत् **परिशेषमानादर्धप्राप्तित्वावगमात्** इति वाक्यं प्रथमवर्णकसिद्धान्तसाधकत्वेन विवृणोति **मोहे तावदिति।** **परिशिष्टोऽर्धप्रवेश एवेति** विवरणानुसारेणोक्तम्। वस्तुतस्त्वन्यत्र प्रवेश एव मोह इत्यर्थः। ततश्चावस्थान्तरत्वसिद्धिः। द्वितीयवर्णकसिद्धान्तसाधकत्वेनापि[1] भाष्यविवरणे व्याचष्टे **मोहे अर्धप्राप्तिसमर्थनायेति।** तृतीयवर्णकसिद्धान्तं साधयितुमभ्यधिकाशङ्कां निराह **बाह्यकारणदर्शनमिति।** वर्णकत्रयार्थमुपसंहरति **अत इति।** अवस्थान्तरत्वादवान्तरावस्थात्वाच्चेत्यपि ग्राह्यम्॥

एतदधिकरणस्य जन्मादिसूत्रविवरणरूपत्वम्

अनेन न केवलं जाग्रदाद्यवस्थात्रयस्य जन्मादि भगवतः किन्तु मोहावस्थाया अपीति वा, जन्मादिसूत्रोक्ता स्थितिः न केवलं समग्रप्राप्तिरेव किन्त्वर्धप्राप्तिरपीति वा, न केवलं जाग्रदादेर्नियन्ता किन्तु मोहस्यापीति वा जन्मादिसूत्रं विवृतं भवति॥

संक्षेपभाष्यस्यैतदधिकरणार्थसूचकत्वम्

अत एव **सर्वावस्थाप्रेरकश्चेति** संक्षेपभाष्यमेतदधिकरणतात्पर्यपरमपि व्याख्येयम्॥

**इति सम्पत्त्यधिकरणम्॥ ७॥**

[1] पूर्वपक्षं विशदयन्नेव द्वितीय

अथ नस्थानतोऽप्यधिकरणम् (स्थानभेदाधिकरणम्) ॥ ८ ॥

स्थानापेक्षया परमात्मनो भेदादनुग्राह्यानुग्राहकभाव इत्यत आह—

॥ ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ॥ ११ ॥

स्थानापेक्षयापि परमात्मनो न भिन्नं रूपम्। 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' इति श्रुतिः ॥

'एकरूपः परो विष्णुः सर्वत्रापि न संशयः ।
ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयते ॥' इति मात्स्ये ॥

'प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः' इति च भागवते ॥ ११ ॥

---

तत्त्वप्रकाशिका

संगत्यादि

अत्रेश्वरप्राप्तिसाधनभक्त्यर्थं तस्य सर्वत्र निर्दोषाशेषसद्गुणत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः। स्वगततारतम्ये न तत्र निरतिशया भक्तिर्जायत इति तत्प्रतिषेधद्व्यम्। सर्वावस्थाप्रेरकत्वेन प्रकृतः परमात्मा विषयः। प्रतिशरीरं जाग्रदादिस्थानेषु स्थितः किमन्योन्यं भिन्न उताभिन्न इति सन्देहः। घटादीनां भिन्नत्वदर्शनमाकाशादीनामभिन्नत्वदर्शनं च सन्देहबीजम् ॥

स्थानभेदेन विश्वादीनां मिथो भेद इति पूर्वपक्षः

पूर्वपक्षयति **स्थानेति**। सर्वशरीरेषु जाग्रदादिस्थानेषु च स्थितो विश्वादिरूपो हरिरन्योन्यं भिन्न एव। भिन्नस्थानत्वात् घटादिवत्। न चाका-

## तत्त्वप्रकाशिका

शादिवदुपपत्तिरिति वाच्यम्। किमीश्वरोऽवयवी पाणिपादाद्यवयवैरनेकस्थान उत समग्ररूपेण वा? नाद्यः। विश्वादीनां **सप्ताङ्ग एकोनविंशतिमुखः** इत्यादिना प्रत्येकं रूपश्रवणात्। द्वितीयेऽसङ्गतो दृष्टान्तः। अतः अस्त्येव विश्वादीनां भेदः। तथा च भिन्नानां गुणादितारतम्यादनुग्राह्यानुग्राहकभावदर्शनाच्च तत्प्रसङ्गः। एवञ्च निरतिशयैश्वर्याभावान्न तत्र भक्तिर्युक्तेति भावः॥

नेति सिद्धान्तः

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **अत इति**। न तत्र तत्रास्थितो हरिर्मिथो भिन्नः। न च भिन्नस्थानतानुमानविरोधः। **सर्वेषु भूतेषु इति** श्रुतिविरोधेन बाधितविषयत्वादिति भावः। सर्वेषु भूतेषु चक्षुरादिस्थानेषु एतमेकमेव पूर्णगुणमाचक्षत इत्यर्थः। एकैकदेशतोऽनेकस्थानगतत्वं परस्यासिद्धं श्रुतिविरुद्धं चेति भावेनोभयत्वमित्यनुक्त्वा **उभयलिङ्गमित्युक्तम्**। तद्व्याख्यानं **भिन्नं रूपमिति**। **लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव चेति** वचनात्। समग्ररूपेणानेकस्थानगतत्वं कथमुपपद्यते हरेःअन्यत्राहृष्टत्वादित्यत आह **एकेति**। सूर्यदृष्टान्तं स्पष्टयन्नुक्तार्थे स्मृत्यन्तरञ्चाह **प्रतिदृशमिति**। प्रतिदृशं प्रेरकत्वेनैश्वर्यवशान्नैकधा स्थितमर्कं यथा एकमेव समधिगच्छन्ति तथा भूतानां प्रतिहृदयं सामग्र्येणैश्वर्यबलादनेकधा स्थितमीश्वरम् एकं समधिगतोऽस्मीत्यर्थः। मां प्रति मां प्रतीति बहुधा स्थितमिति वा॥११॥

॥ ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ ॥ १२ ॥

'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।

प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः ॥'—इति भेदवचनान्नेति चेन्न ।

'एष त आत्मान्तर्याम्यमृतः ।' 'अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ।' 'अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानि च ।' 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनमि'ति प्रत्येकमभेदवचनात् ॥ १२ ॥

तत्त्वप्रकाशिका

भेदश्रुतिबलेनेश्वररूपाणां न भेदो वक्तव्यः

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे **नेति** । न विश्वादीनामभेदो वाच्यः । विश्वतैजसयोर्द्विविधबन्धवत्त्वेन प्राज्ञस्यैकबन्धवत्त्वेन तुरीयस्याबन्धवत्त्वेन भेदव्यपदेशात् । तथा चानुग्राह्यादिभाव इति भावः । कार्यभ्रमरूपजाग्रद्बद्धो विश्वः । तत्कारणभ्रमरूपस्वप्नबद्धस्तैजसः । तत्कारणाज्ञानरूपसुप्तिबद्धः प्राज्ञः । कार्यकारणाकारेण द्वावपि बन्धौ तुरीये न स्त इत्यर्थः ॥

परिहारांशं व्याचष्टे **नेति** । नैतच्छ्रुतिबलेनेश्वररूपाणां भेदो वक्तव्यः । पृथिव्यन्तर्याम्येव तवान्तर्यामीत्यादिना यश्चायमस्यां पृथिव्यां पुरुषो यश्चायमध्यात्ममयमेव स इत्यादिना च अयं मूलरूप्येव बहवो हरय इति च

॥ ॐ अपि चैवमेके ॐ ॥ १३ ॥

एवम् अभेदेनैव चशब्दादनन्तरूपत्वं च एके शाखिनः पठन्ति,

'अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।

अकारो विदितो येन स मुनिर्नेतरो जनः' इति ।

अभेदेऽपि भेदव्यपदेशः स्थानभेदादैश्वर्ययोगाच्च युज्यते ।

ब्रह्मतर्के च—

'बद्धो बन्धादिसाक्षित्वाद्भिन्नो भिन्नेषु संस्थितेः ।

निर्दोषाद्वयरूपोऽपि कथ्यते परमेश्वरः' इति ॥ १३ ॥

---

तत्त्वप्रकाशिका

भगवद्रूपाणां प्रत्येकं परस्परं मूलरूपेण चाभेदवचनादित्यर्थः । अपूर्वमनपरम् आद्यन्तशून्यम् । नान्तर्बहिरन्यद्यस्य तत् अनन्तरमबाह्यम् । ब्रह्मेत्यनुवादः । सर्वानुभूः सर्वज्ञः । प्रत्येकमित्यादरं सूचयति । तेन च एतच्छ्रुतीनां बलवत्त्वम् ॥ १२ ॥

निरवकाशाभेदश्रुत्यनुसारेण भेदश्रुतिर्नेया

नैतच्छ्रुतिबाधो भेदश्रुतेः । तासां कतिपयरूपविषयत्वस्यापि संभवात् । अन्तिमश्रुतौ च स्फुटमभेदाप्रतीतेः । अतो भेदश्रुतिबलाद्विश्वादीनां भेद एवेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे अपीति । विश्वाद्यनन्तरूपाणामभेदेन पठितत्वान्न भेदश्रुतिमालम्ब्य तद्भेदो ग्राह्य इत्यर्थः । चशब्दात्समुच्चितमिति शेषः । अमात्रो भिन्नांशशून्यः । पुनरनन्तांशः । द्वैतस्योपशमो मिथ्याज्ञानोपशमकर्ता । ॐ इत्याक्रियमाण ॐकारः । अभेदेन सद्वैवेश्वररूपाणां बहुत्वस्य पठितत्वाच्च

## तत्त्वप्रकाशिका

न भेदश्रुतिरभेदविरोधिनीति वा। तर्हि का गतिर्भेदव्यपदेशस्येत्यत आह **अभेदेऽपीति**। अक्ष्यादिस्थितो बद्धोऽन्यत्राबद्ध उच्यत इति भावः। अभिन्नेऽपि भेदव्यपदेशोऽचिन्त्यैश्वर्यादित्युक्तम् **अनन्योऽप्यन्यशब्देनेति**। अभिन्नस्य स्थानभेदोऽपि कुत इत्यत आह **ऐश्वर्येति**। निर्दोषस्य हरेर्बन्धः कथमित्याशङ्कां परिहर्तुमुक्तार्थे स्मृतिसम्मतिमाह **ब्रह्मतर्के चेति**। निर्दोषोऽपि बद्धः, अद्वयरूपोऽपि भिन्नः कथ्यत इत्यर्थः। अतो हरेः स्वगतभेदशून्यस्य सर्वत्र पूर्णगुणत्वाद्युक्ता तत्र भक्तिरिति सिद्धम् ॥ १३ ॥

—:o:—

## शेषतात्पर्यचन्द्रिका

### समर्थनपेटिका

## ॥ ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ॥ ११ ॥

ब्रह्मशब्दार्थसमर्थनपरा इयं पेटिका

सप्ताधिकरण्या विवरणपेटिकया द्वितीयसूत्रस्थजन्मादिकारणत्वं विवृतम्। आद्यसूत्रस्थब्रह्मशब्दो न विवरणमपेक्षते। निर्दोषाशेषगुणवाचित्वेन प्रसिद्धत्वात्। किन्तु स्वार्थस्यान्यत्रासंभाव्यमानत्वात्[1] वादिविवादाच्च समर्थनमपेक्षते। तदर्थमियं त्रयोदशाधिकरण्यात्मकोत्तरपेटिका आरभ्यते। एतेन भक्त्यर्थं भगवन्महिमोक्तिरिति भाष्यदिशा माहात्म्यप्रतिपादकत्वाविशेषात् कथमनयोः पेटिकयोर्भेद इति चोद्यं निरस्तम् ॥

निरतिशयभक्ति-भक्तिमात्रोत्पादकत्वेन विवरणसमर्थनपेटिकयो र्भेद इत्येकः पक्षः

किञ्च सप्ताधिकरण्यां प्रतिपादितं स्वप्नस्रष्टृत्वादिमाहात्म्यं न भक्तिसामान्योत्पत्तावुपयुक्तम्। स्वप्नस्रष्टृत्वादीनामभावेऽपि जाग्रत्स्रष्टृत्वरूपमाहात्म्यवति भगवति, बहुकर्मकर्तरि पितरि पुत्रस्येव अधिकारिणो भक्त्युत्पादोपपत्तेः। किन्तु एतदप्रतिपादने माहात्म्याधिक्यालाभेन निरतिशयभक्तिर्नोत्पद्यत इति निरतिशयभक्त्युत्पत्तावेवोपयुक्तम्। अत एव सप्ताधिकरणीटीकायां प्रत्यधिकरणं निरतिशयभक्तिविषय एव पूर्वपक्षसिद्धान्तयोरुपसंहारः, न पादारम्भविषयः। अत एव च निरतिशयमाहात्म्यवर्णनरूपत्वात्सप्ताधिकरण्याः प्राथम्यम्। माहात्म्यं विषयः भक्तिश्च फलमिति विशेषोऽपि स्पष्ट एव ॥

---

1 त्रासंभवात्

शेषतात्पर्यचन्द्रिका

त्रयोदशाधिकरण्यां तु मुखतः प्रतिपाद्यम् अभेदाप्राकृतरूपादि भक्त्युत्पत्तावेवोपयुक्तम्। स्वगततारतम्ये निःशरीरे हेयशरीरादौ च स्नेहमात्रस्याप्यनुत्पादात्। उत्पादे वा दृढतरममतादिरूपबलवत्कारणैरेव। न त्वेवमेव। अत एवात्र टीकायां प्रत्यधिकरणं भक्तिमात्रविषयः पूर्वपक्षसिद्धान्तयोरुपसंहारः, पादारम्भप्रतिक्षेपः समाधानञ्च फलं प्रतीयते ॥

एतेन त्रयोदशाधिकरण्यां भक्तेरेव विषयत्वेऽधिकरणानां प्रयोजनं न लभ्यते इति परास्तम् ॥

एतेन दोषाभावप्राकृतशरीराभावादीनां निरतिशयमाहात्म्यरूपत्वेन पेटिकाभेदो न युक्त इति प्रत्युक्तम्। तदविवक्षणेन भक्तिसामान्यसमर्थनार्थत्वतदभावाभ्यामेव भेदोपपत्तेः ॥

अस्मिन्पक्षे पेटिकयोः पौर्वापर्यम्

तर्हि भक्तिसामान्यसमर्थनानन्तरमेव तद्विशेषसमर्थनावसर इति द्वितीयपेटिकायाः प्राथम्यं स्यादिति चेत्, निरतिशयभक्तेरन्तरङ्गत्वेन बहिरङ्गादन्तरङ्गस्य पूर्वनिरूपणं न्यायप्राप्तमेवेत्यदोषः ॥

भक्त्युत्पाद-प्रतिबन्धकनिरासाभ्यां भेद इति अपरः पक्षः

यद्वा भक्त्युत्पादः पूर्वपेटिकायाः फलम्। अस्यान्तु पेटिकायां भक्त्युत्पत्तिप्रतिबन्धकधर्मनिरासः फलम्। तथा हि दोषस्य तावद्भक्तिप्रतिबन्धकत्वं सिद्धम्। न हि दोषिणि भक्तिरुत्पद्यमाना क्वचिद्दृष्टा। अतश्च[1] नस्थाननये भेदद्वारा अनुमाद्यत्वादिनिरासाभेदप्रतिपादनद्वारा दोषसामान्यं निरस्तम्।

[1] अन्ततश्च

## शेषतात्पर्यचन्द्रिका

द्वितीयनये भक्तिप्रतिबन्धकशरीराभावप्राकृतशरीरादेः निरासः क्रियते। प्राकृतशरीराभावस्याप्राकृतशरीरस्य च प्रतिपादनात्। उत्तरनये जीवेशयोः भेदप्रतिपादनेन भक्तिप्रतिबन्धकाभेदो निरसिष्यते। एवमम्बुनये प्रयोजनसमर्थनेन भक्तिप्रतिबन्धकप्रयोजनाभावस्य निरासः। वृद्धिह्रासनये फलस्य भक्त्यननुसारित्वं निरस्यते। तद्धि भक्तौ प्रतिबन्धकम्। फलस्यान्यानुसारित्वेन अन्यस्यैवानुष्ठेयत्वप्राप्त्या भक्तेस्तदभावप्रसङ्गात्। पालकत्वनयेऽपि अपालकत्वस्य प्रतिबन्धकस्य निरासः। अत एव तत्र भाष्ये **सृष्टिसंहारकर्तृत्वमेवास्य, न पालकत्वमि**त्युक्तम्। टीकायां च **पालकत्वगुणाभावे** इति तस्य प्रतिबन्धकत्वमुक्तम्। अव्यक्तनयेऽपि प्रतिबन्धकीभूतव्यक्तत्वस्य, अहिकुण्डलनये प्रतिबन्धकस्य गुणित्वाभावस्य, अलौकिकनये लौकिकत्वस्य निरासः। तद्धि घटादौ प्रतिबन्धकं दृष्टम्। सप्तदशे नये भगवदानन्दस्य बिम्बत्वाभावो निराक्रियते। स च लौकिकत्वापादकतया भक्तिप्रतिबन्धक एव। अष्टादशे तु ध्यानकाले प्रतीतस्य भ्रमत्वं निरस्यते। तद्धि व्यक्तदोषित्वाद्यापादकतया भक्तिप्रतिबन्धकम्। उपान्तेऽपि औपाधिकेश्वरत्वस्य निरासः। औपाधिकेश्वरे च कथञ्चित् स्नेहमात्रसम्भवेऽपि न भक्तिर्भवतीति तदपि प्रतिबन्धकम्। अन्त्ये कर्मणः फलदातृत्वस्य निरासः। तद्धीश्वरस्यैव अपालकत्वेन प्रतिबन्धकमिति टीकायामेव व्यक्तमित्याद्यूह्यम्॥

पक्षद्वयेऽपि टीकाविरोधपरिहारः

अत्र **स्वगततारतम्ये न तस्मिन्निरतिशया भक्तिर्जायते** इति टीका तु तारतम्ये दोषप्राप्त्या दोषिणि भक्तिरेवानुपपन्ना, सुतरां निरतिशया

## शेषतात्पर्यचन्द्रिका

भक्तिरित्येवंपरा योज्या। अन्यथा निरतिशयमाहात्म्यपराद्यपेटिकायामेवेदं संगतं स्यात् ॥

अत एव भक्तिस्वरूपमात्रस्य कर्तव्यत्वसमर्थनपरत्वलाभाय **सर्वावस्थाप्रेरकत्वेन प्रकृतः परमात्मा विषयः** इत्यत्र टीकापि न मुख्यविषयपरा; किन्तु यदर्थं महिमा निरूपितः सा भक्तिरेव विषयः, कर्तव्या उत न कर्तव्या इति सन्देहः, तदर्थं प्रकृतः परमात्मा भिन्नः उत अभिन्नः इति चिन्तामभिप्रेत्य अवान्तरविषयपरा। अत एव अरूपाधिकरणे सूत्रानुसारात्प्रकरणाच्च परमात्मा विषय इति वक्तव्येऽपि **यदर्थं महिमा निरूपितः** इति प्रसक्तिमापाद्य **सा भक्तिरेव विषय** इत्युक्त्वा **व्यर्थोऽयं पादारम्भ** इति पूर्वपक्षोपसंहारः करिष्यते। तेन—भक्तिरपि न मुख्यविषयः। किन्तु पादारम्भ एव। स कर्तव्यो न वा, तदर्थं भक्तिः कर्तव्या न वा, तदर्थं भगवान् सौन्दर्यशाली न वेत्यादिचिन्तयाधिकरणं व्याख्ययेम्। अस्माभिस्तु गौरवभयात् क्वचिच्चिन्तया चारितार्थ्याच्च न पादारम्भादौ चिन्ता प्रदर्श्यत इति—सूचितम्। एवमुत्तरत्राप्यापादसमाप्ति ज्ञातव्यम् ॥

अनन्तरसङ्गतिः

समनन्तराधिकरणे परिशेषस्योक्तावेव स्थानभेदस्योपस्थित्या भगवति भेदशङ्कनाद्वा, पूर्वोक्तः स्थानभेदघटितः परिशेष एव न युक्तः, भगवद्भेदापादकत्वादिति शङ्कनाद्वा अनन्तरसङ्गतिः ॥

## शेषतात्पर्यचन्द्रिका

श्रुतियुक्तानुमानेन विश्वादीनां मिथो भेदसिद्धिरिति पूर्वः पक्षः

तत्र तावद्विश्वादिरूपी भगवान् भिन्न एव, भिन्नस्थानस्थितत्वात् । घटादिवत् । न चाकाशे घटमठादिभिन्नस्थानस्थितत्वेऽपि भेदादर्शनाद्व्यभिचार इति वाच्यम् । सामस्त्येन भिन्नस्थानस्थितत्वस्य हेतूकरणात् । न चेदमाकाशेऽस्ति । आकाशो हि घटमेकदेशेन, तदेकदेशान्तरेण मठं च व्याप्नोति । न तु सामस्त्येन । अन्यथा विभुत्वव्याहतेः । न च हेतुरसिद्धः । विश्वादीनां **सप्ताङ्ग एकोनविंशतिमुखः** इत्यादिना प्रत्येकं समस्ताङ्गसम्पत्त्यैव अक्ष्यादिभिन्नस्थानस्थितत्वसिद्धेः ॥

न च **सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते** इति श्रुत्या **एकरूपः परो विष्णुः सर्वत्रापि न संशयः** इति स्मृत्या च बाध इति वाच्यम् । जीवब्रह्मैक्यश्रुतिवदुपपत्तेः ॥

न केवलानुमानस्य श्रुतिबाधकता

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः ॥**

इति भेदश्रुतेः । अत्र हि कार्यशब्देन भ्रमः, कारणशब्देन अज्ञानमुच्यते । तदुभयबद्धौ विश्वस्तैजसश्च । जाग्रदवस्थायाम् अज्ञानस्य स्वस्वरूपादौ तत्कार्यस्य स्वातन्त्र्यभ्रमस्य च सत्त्वात् । स्वप्नावस्थायाञ्च बाह्यपदार्थाज्ञानस्य तज्जन्यस्थौल्यादिभ्रमस्य च सत्त्वात् । तत्रापि विश्वः अज्ञानकार्यभ्रमरूपजाग्रद्बद्धः । तैजसस्तु अज्ञानकार्यजाग्रद्रूपभ्रमकार्यगजादि-

शेषतात्पर्यचन्द्रिका

स्थौल्यभ्रमात्मकस्वप्नबद्धः । भ्रमात् भ्रमान्तरस्यापि बहुलं जन्मोपलब्धेः। ततश्च विश्वतैजसयोः अज्ञानरूपकारणबद्धत्वांशेऽविशेषेऽपि कार्यबद्धत्वांशे अज्ञानकार्यबद्धत्वं विश्वे, अज्ञानकार्यकार्यबद्धत्वं तैजसे इत्यवान्तरविशेषः । यद्वा यदा स्वप्नादुत्थितिर्जीवस्य तदा भ्रमरूपस्वप्नः जाग्रद्बन्धस्य कारणमिति अज्ञानजन्यस्वाप्नभ्रमजन्यभ्रमरूपजाग्रद्बन्धवान्विश्वः । तैजसस्तु अज्ञानजन्यभ्रमरूपस्वप्नबन्धवानिति विशेषः । तत्कारणरूपाज्ञानात्मकसुप्तिबद्धः प्राज्ञः । कार्यकारणोभयबन्धः कारणमात्रबन्धश्चेतीमौ बन्धौ द्वावपि तुरीये न स्त इति प्रतीतेः । तथा च विरुद्धधर्माधिकरणत्वेन भेदस्यैव प्राप्तिः । अन्यथा जीवपरमात्मनोरपि तदसिद्धेः । एकस्यैवानन्तरूपत्वापत्तेः गौरवाच्च ॥

तदेवं विश्वादीनां परस्परं मूलरूपेण च भेदसिद्धेः विमता विश्वादयः गुणतारतम्यवन्तः, भिन्नत्वात् देवदत्तयज्ञदत्तादिवत्; एवम् अनुग्राह्यानुग्राहकभाववन्तः, गुणतारतम्यवत्त्वादिति गुणतारतम्यमनुग्राह्यानुग्राहकत्वं च सिध्यति । ततश्च गुणतारतम्यान्तर्गतम् एकस्य गुणहीनत्वम् अनुग्राह्यत्वरूपदोषवत्वं च स्यादिति भेदगुणहानिदोषाणामपि प्राप्त्या पूर्वोक्तगुणपूर्णत्वं निर्दोषत्वं च न सिध्यति ॥

पूर्वपक्षसंग्रहः

कार्यकारणबन्धादेर्विश्वादीनां प्रतीतितः ।
भेदो गुणानां हानिश्च दोषित्वं स्यादवारितम् ॥

इति पूर्वपक्षः ॥

## शेषतात्पर्यचन्द्रिका

उक्तानुमानस्याप्रयोजकता

न तत्र तत्र स्थितो हरिः मिथो भिन्नः। अत एव नापूर्णगुणः, न दोषी च; मानाभावात्। न च भिन्नस्थानत्वं मानम्। अप्रयोजकत्वात्। स्थानानां भेदः, तस्याभेद एवेति आकाशादिवद्व्यवस्थोपपत्तेः। अन्यथा **'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' 'नेह नानास्ति किञ्चन'** इत्यादिश्रुत्या **'एकरूपः परो विष्णुः सर्वत्रापि न संशयः'** इतिस्मृत्या च बाधापत्तेः। अत्र हि **सर्वेषु भूतेषु** इत्यसङ्कुचद्वृत्तिसर्वशब्दस्य एतमित्येकवचनस्य ब्रह्मशब्दस्य च स्वारस्येन चक्षुरादिस्थानकत्वस्य एकत्वस्य पूर्णगुणत्वस्य च प्रतीतिः। अतो विमतो हरिः अभिन्नः तथा श्रुतत्वात् इति प्रयोगविरोधश्च॥

नन्वाकाशादिवत् एकैकदेशतो अनेकस्थानस्थत्वं यद्यपि भेदं विनाप्युपपद्यते। तथापि न तादृशं हेतूकृतमस्माभिः। किन्तु सामस्त्येनानेकस्थानस्थितत्वमेव। ततश्च नेदं भेदं विनोपपद्यत इति चेन्न। प्रतिचक्षुः प्रेरकत्वेन शिरःपाण्यादियावदङ्गसाकल्येन स्थितेऽपि सूर्ये देवे भेदाभावेनाप्रयोजकताऽपरिहारात्। तत्राभेदघटकस्यैश्वर्यांशस्याङ्गीकारे[1] सुतरामीश्वरे आत्मनि चैवमित्यादिन्यायेन तत्सिद्धेः। **सर्वेषु भूतेषु** इति श्रुत्यैव हेतुसाध्याभावसामानाधिकरण्यप्रतीत्या व्याप्त्यसिद्धेश्च। न च **सर्वेषु भूतेषु** इत्यंशेन एकैकदेशतोऽनेकस्थानस्थितत्वम् **एतमेव** इत्यंशेन अभिन्नत्वं

[1] स्यैश्वर्यस्या

## शेषतात्पर्यचन्द्रिका

चोच्यत इति तयोरेव सामानाधिकरण्यं प्रतीयते, न तु समग्ररूपेणानेकस्थानस्थितत्वमिति वाच्यम् । संकोचे कारणाभावात् । **एकरूपः परः** इत्यादिस्मृत्यैव सम्यग्व्याख्यातत्वाच्च । एतदेवाभिप्रेत्य सूत्रकृता **सर्वेषु भूतेषु** इति श्रुतिव्याख्यानस्य न स्थानतोऽप्युभयत्वमित्येतावतैव सम्भवेऽप्युभयलिङ्गमित्युक्तम् ॥

अचिन्त्यशक्तिनिबन्धनस्थानभेदप्रयुक्तः विश्वादीनां भेदव्यपदेशः

यच्चोक्तं----विश्वादीनां मध्ये विश्वस्य कार्यकारणबद्धत्वेन, तैजसस्य कार्यकार्यबद्धत्वेन, प्राज्ञस्य कारणमात्रबद्धत्वेन, तुरीयस्य बन्धमात्रराहित्येन च परस्परं भेदादिरावश्यक इति—

अत्रोच्यते—उक्तबद्धत्वाबद्धत्वादेरसिद्ध्या भेदाद्यसिद्धिः । **कार्यकारणबद्धौ तौ** इत्यादिमाण्डूकवाक्यन्तु बन्धादिसाक्षित्वाभिप्रायं बन्धकत्वाद्यभिप्रायं वेत्यन्यदेतत् । अन्यथा **एष त आत्मान्तर्याम्यमृत** इति पृथिव्यन्तर्यामिजीवान्तर्यामिणोः, **यश्चायमस्यां पृथिव्यां पुरुषो यश्चायमध्यात्ममयमेव सः** इत्यादिना च पृथिवीजीवान्तर्यामिभ्यां मूलरूपस्य, **अयं वै हरय** इत्यादिना च भगवद्रूपाणां परस्परं मूलरूपेण चाभेदोक्तिविरोधात् । न चात्र पृथिवीजीवादिकतिपयान्तर्गतरूपाणामभेदवचनेऽपि विश्वादीनामभेदवचनाभावः । **अयं वै हरय** इत्यादिश्रुत्यनुसारेण **स यश्चायं पुरुषे यश्चासावादित्ये** इत्यत्रेव अत्राप्युपलक्षणतया प्रवृत्तेः । विश्वादीनामेव प्रकरणे **अनन्तमात्रः** इत्यनन्तरूपत्वस्य प्रमितत्वाच्च । एतेन कल्पनागौरवं निरस्तम् । नन्वेवं भेदव्याप्य-

## शेषतात्पर्यचन्द्रिका

बद्धत्वादिव्यपदेशः कथमिति चेन्न। उक्तप्रमाणात् भगवद्रूपाणामभेदे सिद्धे अक्ष्यादिस्थानभेदनिबन्धनो भेदव्यपदेशो गौण इत्यङ्गीकारात् ॥

द्वासुपर्णेत्यादिरपि उक्तन्यायेन भेदव्यपदेशपरेति शङ्कानिरासः

नन्वेवं जीवब्रह्मणोरप्यभेदे सिद्धे द्वा सुपर्णेत्यादिभेदव्यपदेशः स्थानभेदनिबन्धनो गौण इत्यपि स्यादिति चेन्न। यतोऽयं परिहारः भगवद्रूपेष्वेवावकल्पते। अद्भुतसामर्थ्यवत्त्वात्। अभिन्नोऽपि सामस्त्येन रूपेणानेकस्थानेषु वर्तत इत्यस्य सामर्थ्यसापेक्षत्वात्। जीवविषये तु अल्पशक्तित्वादेरनुभवसिद्धत्वेन भेदाभावे स्थानभेदस्यैव विवक्षितस्यायोगात्। न च जीवस्यापि तादृशी शक्तिः ईश्वराभिन्नत्वादेव सेत्स्यतीति वाच्यम्। अन्योन्याश्रयात्। ईश्वरे शक्तिसिद्धिस्तु जीवभेदमनपेक्ष्यैव परास्य शक्तिः इत्यादिश्रुतिसिद्धेति वैषम्यम्। ईश्वर एव स्वगतया अचिन्त्यशक्त्या स्वाभिन्नमपि जीवं स्थानभेदशालिनं मत्स्यादीनिव करोतीति चेत्, मत्स्याद्यभेदे बाधकाभावेन तत्र तदुपपत्तावपि अल्पशक्तित्वेन अनुभवसिद्धजीवाभेदे अल्पशक्तिप्राप्त्या अचिन्त्यशक्तेरेवाभावापातात् ॥

अचिन्त्यशक्तिरपि स्वघातुकं न घटयति, सन्निपातलक्षणन्यायात्

न चाचिन्त्यशक्तिरेव सर्वदोषानाभासीकरिष्यतीति वाच्यम्। स्वाव्याघातकदोषाभासीकरणशक्तित्वेऽपि स्वव्याघातकदोषाभासत्वायोगात्। न हि घटको घटक इत्येतावता स्वोच्छेदकमपि घटयति। अत एव जीवब्रह्मभेदं निमित्तीकृत्य प्रवृत्ता शक्तिरीश्वरे न भेदं घातयति। सन्निपातलक्षणो

शेषतात्पर्यचन्द्रिका

विधिरनिमित्तं तद्विघातस्येतिन्यायात् । अन्यथा शतानि, सहस्राणि, शाकटौ, पद्धतौ, इयेष, उवोष इत्यादौ असं विभक्तिमाश्रित्य प्रवर्तमानो नपुंसकस्य झलचः इति नुम्विधिरपि ष्णान्ता षट् इति षट्संज्ञाद्वारा षड्भ्यो लुक् इति लुका बहुवचनविभक्तिं, तथा अच्च घेरिति प्राप्तो घेरकारादेशः सप्तमीविभक्तिनिमित्तकः अजाद्यतष्टाप् इत्यदन्तत्वात् टाबूनिमित्तं भवन् सप्तमीविभक्तिं, तथा णलमार्धधातुकं निमित्तीकृत्य प्रवृत्तः लघूपधगुणः इजादेश्च गुरुमतोऽनृच्छ इति गुरुमत्वसम्पादकतया आमो निमित्तं भवन् आम इति लुग्द्वारा णलं च घातयेत् । स्पष्टं चैतत् कृन्मेजन्तसूत्रभाष्यकैयटयोः ॥

सिद्धान्तसंग्रहः

स्थानभेदेऽप्यभेदः स्यात् स्थानिनोऽद्भुतशक्तितः ।
बद्धत्वादिकमस्यैव गुणवाची न चान्यथा ॥

इति सिद्धान्तः ॥

'न स्थान' सूत्रार्थः

सूत्रार्थस्तु—स्थानशब्दः तत्कृतभेदोपलक्षकः । स्थानभेदेऽपीति सप्तम्यर्थे तसिः । तेन पूर्वपक्षाशयोद्घाटनं कृतं वेदितव्यम् । भिन्नं रूपं परस्य नास्ति । तथा च पूर्वसूत्रादनुवर्तमानात्मपदविशेषणेनाचिन्त्याद्भुतशक्तिसूचनात् अपिपदोक्ता अप्रयोजकता स्फुटीकृता भवति । न केवलमक्ष्यादिस्थानभेदेन भेदशङ्कायामिदमुत्तरम्, किन्तु सर्वत्र बद्धत्वादिना भेददोषापूर्णत्वादिशङ्कायामपीति च अपेरर्थः । हिः अत्र लाघवाय सर्वत्रेत्यर्थतो गृहीतायाः

शेषतात्पर्यचन्द्रिका

**सर्वेषु भूतेषु** इति श्रुतेः, सर्वशब्दघटितायाः **एकरूपः परो विष्णुः सर्वत्रापि** इति स्मृतेश्च प्रसिद्धिं सूचयति । ततश्च सर्वत्रावस्थितस्य स्थानभेदो न भेदमावहति । अचिन्त्यशक्तिमति स्थानभेदस्याप्रयोजकत्वात् । तथा वचनसद्भावाच्च, न सम्भावनामात्रमेतदिति भावः । शेषं सुगमम् ॥

'अपि चैवमेके' सूत्रसार्थक्यं तृतीयतौचित्यं च

अनन्तरूपत्वे मानोक्त्या कल्पनागौरवपरिहारार्थमपि प्रवृत्तेर्न तृतीयवैयर्थ्यं योगविभागश्चेति ध्येयम् ॥

यद्यपि सामान्यप्रमाणं विशेषप्रमाणं चोक्त्वा बाधकमुद्धरणीयमिति द्वितीयतृतीययोः विनिमयो युक्तः । तथापि एवम् अभेदेन सह ईश्वररूपाणां पठितत्वाच्चेत्युक्तिसौकर्याय व्यत्ययो ज्ञातव्यः ॥

टीकायां पूर्वपक्षन्यायविवरणव्याख्यानम्

टीकाक्षरार्थस्तु—**स्थानभेदन्यायं** साध्यप्रदर्शनेन विवृण्वत् **न च स्थानभेदाद्विष्णोरपि भेदः** इति वाक्यं सिद्धसाधनपरिहाराय भाष्येण सहैव व्याचष्टे **सर्वशरीरेषु जाग्रदादिस्थानेष्वित्यादिना** । **घटादिवदिति** दृष्टान्तकथनेन अपिशब्दार्थः सूचितो भवति । **एतेनैव** सूत्रस्थापिशब्दो भिन्नक्रमः परस्येत्यनेन सम्बध्यत इत्युक्तं भवति ॥

टीकायां सिद्धान्तन्यायविवरणव्याख्यानम्

व्यवस्थान्यायम् आकारप्रदर्शनेन सप्रमाणं विवृण्वत् **'अयमेव सः' 'नेह नानास्ति किञ्चन' इत्यादिश्रुतिबलात् स्थानानां भेदः तस्याभेद**

## शेषतात्पर्यचन्द्रिका

**एवेति व्यवस्थोपपत्तेः** इति वाक्यम् **अयमेव सः** इति श्रुतेः पूर्वांशोदाहरणपूर्वकं व्याचष्टे **यश्चायमस्यां पृथिव्यां पुरुषो यश्चायमध्यात्ममित्यादिना** । अनेन **प्रत्येकमभेदवचनादिति** भाष्यं **तस्याभेद एवेति** विवरणरीत्या भेदाभाववचनादित्यपि व्याख्येयम् । अन्यथा भेदाभेदप्रसङ्गात् । अत एव विवरणे **अयमेव स** इति श्रुतिनिर्देशेनैवाभेदसिद्धावपि **नेह नानेति** श्रुतिं निरदिक्षत् । बाधकत्वेनाभिहिताया भेदश्रुतेः प्रबलाभेदश्रुत्या बाधोक्तौ तस्याः कतिपयरूपविषयत्वे सर्वरूपविषयकश्रुत्युदाहरणेन निरस्त एव का तर्हि भेदश्रुतेर्गतिरिति शङ्कोदयात् तदनुसारेण तृतीयव्याख्यावसर एव भाष्ये अभेदेऽपीत्यादिना भेदश्रुतेर्गत्युक्तिरिति ध्येयम् ॥

### संक्षेपभाष्ये एतदधिकरणार्थोक्तिः

**सर्वरूपेष्वभेदवान्परमेश्वरः** इति संक्षेपभाष्येणैतदधिकरणतात्पर्यमुक्तं वेदितव्यम् ॥

### एतदधिकरणसिद्धान्तफलम्

अत्राद्यसूत्रे द्वितीये चाध्याये प्रस्तावितगुणपूर्णत्वनिर्दोषत्वसमर्थनम् ॥

**॥ इति नस्थानतोऽप्यधिकरणम् ॥ ८ ॥**

—:o:—

॥ अथारूपाधिकरणम् ॥ ९. ॥

रूपवत्त्वादनित्यत्वमित्यतो वक्ति—

॥ ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ॥ १४ ॥

## तत्त्वप्रकाशिका

सङ्गत्यादि

अत्रेश्वरप्राप्तिसाधनभक्त्यर्थं तस्याप्राकृतरूपसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथाऽनित्यत्वादिप्राप्त्या न तत्र भक्तिरुत्पद्यत इति तत्समर्थनीयमेव । यदर्थं महिमा निरूपितः सा भक्तिरेवात्र विषयः । विष्णौ युक्ता न वेति सन्देहः । साधनतयोक्तेषु युक्तायुक्तदर्शनं सन्देहबीजम् ॥

भगवति रूपभावाभावयोः भक्त्युत्पादायोग इति पूर्वपक्षः

पूर्वपक्षयति **रूपवत्त्वादिति** । न युक्तैव भगवद्भक्तिः । तथाहि । किमसौ रूपवान्न वा ? नाद्यः । रूपवत्त्वादनित्यत्वप्रसङ्गात्, यज्ञदत्तादिवत् । अनित्यशरीरे च न भक्तिरुत्पद्यते । '**अरूपमव्ययं**' '**तदरूपमनामयम्**' इत्यादिश्रुत्यप्रामाण्यं च स्यात् । न द्वितीयः । '**रुक्मवर्णं कर्तारम्**' '**आदित्यवर्णम्**' इत्यादिश्रुतेर्वैयर्थ्यापातात् । सौन्दर्यसौलक्षण्याद्यभावापाताच्च । सौन्दर्यादिशून्ये च भक्त्ययोगात् । तदेवमुभयथापि भक्तेरनुपपन्नत्वाद्व्यर्थोऽयं पाद इति भावः ॥

भगवतः अरूपत्वमिति सिद्धान्तः

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **अत इति** । कर्तव्यैव परमात्मनि भक्तिः । ब्रह्मणो रूपवत्त्वाभावेनानित्यत्वाभावादरूपत्वश्रुत्यवैयर्थ्याच्च । अरूपत्वं

प्रकृत्यादिप्रवर्तकत्वेन तदुत्तमत्वान्नैव रूपवद् ब्रह्म। हिशब्दात् "अस्थूलमनणु' इत्यादिश्रुतेश्च ॥

'भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो मतः।
अरूपवानतः प्रोक्तः क्व तदव्यक्ततः परे॥'—इति मात्स्ये ॥१४॥

॥ ॐ प्रकाशवच्चावैयर्थ्यम् ॐ ॥ १५ ॥

'यदा पश्यः पश्यते रुक्मवर्णं' 'श्यामाच्छबलं प्रपद्ये'

---

तत्त्वप्रकाशिका

कुतः? रूपं हि भवत् प्राकृतं भौतिकं वा भवेत्। न च तत् ब्रह्मणि संभवति। तस्य प्रकृत्यादिप्रवर्तकत्वात्। न हि स्वाधीनं स्वात्मानं बध्नातीति भावः। प्रधानत्वादित्यस्योत्तमत्वादिति व्याख्यानम्। उत्तमत्वप्रकारप्रदर्शनं प्रवर्तकत्वेनेति। ननु ब्रह्मणः प्रकृत्यादिसामर्थ्येन बन्धाभावेऽपि स्वेच्छादिनिमित्तेन रूपं किं न स्यादित्यत आह **हिशब्दादिति**। सूचिताया इति शेषः। **सूत्रार्थे** स्मृतिं चाह **भौतिकानीति**। परः प्रवर्तकत्वेनोत्तमः। अव्यक्ततः **परे तत्** आव्यक्तिकं च रूपं क्वेत्यर्थः। कैमुत्यं वा ॥ १४ ॥

अरूपत्वश्रुतेः विलक्षणरूपतापरत्वम्

ब्रह्मणो रूपाभावे रूपित्वश्रुतिवैयर्थ्यं सौन्दर्याद्यभावश्चेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे **प्रकाशवच्चेति**। न अरूपित्वेऽपि ब्रह्मणो रुक्मवर्णादिश्रुतिवैयर्थ्यं सौन्दर्याद्यभावश्च। रूपवत्त्वाद्ब्रह्मणः। न च तर्हि तस्यानित्यत्वम्-

'सुवर्णज्योतिः' इत्यादिश्रुतीनां च न वैयर्थ्यम् । विलक्षणरूपवत्त्वात्[1] । यथा चक्षुरादिप्रकाशे विद्यमानेऽपि वैलक्षण्यादप्रकाशादिव्यवहारः ॥ १५ ॥

॥ ॐ आह च तन्मात्रम् ॐ ॥ १६ ॥

वैलक्षण्यं चोच्यते रूपस्य विज्ञानानन्दमात्रत्वम् 'ऐकात्म्यप्रत्ययसारम्' इति ।

---

तत्त्वप्रकाशिका

रूपश्रुतिवैयर्थ्यं चेति वाच्यम् । तद्रूपस्यानित्यत्वव्यासप्राकृतभौतिकरूपविलक्षणत्वेनानित्यत्वाद्यप्रसङ्गादिति भावः । ननु विलक्षणरूपत्वे कथमरूपित्वश्रुत्यवैयर्थ्यमित्यत आह यथेति । यथा गृहान्तः नयनादिप्रकाशे विद्यमानेऽपि नास्ति प्रकाश इति व्यवहारो भवति, चक्षुरादिप्रकाशस्य लौकिकप्रकाशवैलक्षण्यात् तथा रूपित्वेऽपि ब्रह्मणो विलक्षणरूपित्वादरूपित्वश्रुत्यवैयर्थ्यमिति भावः । न चैवं रूपशब्दस्य प्राकृतादावेव व्युत्पन्नत्वेन रूपित्वश्रुतिवैयर्थ्यम् । अप्रसिद्धप्रकाशेऽपि परमात्मनि आत्मैवास्य ज्योतिरिति प्रकाशशब्दप्रवृत्तेः ॥ १५ ॥

ब्रह्मणोऽप्राकृतरूपत्वं श्रुतिसिद्धम्

कथं ब्रह्मणो विलक्षणरूपत्वं, येनानित्यत्वादिदोषाभावः, सर्वरूपाणां प्रकृत्याद्यात्मकत्वनियमादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे आह चेति । न वैलक्षण्यानिरुक्तिर्ब्रह्मरूपस्य, ज्ञानानन्दाद्यात्मकत्ववैलक्षण्यस्य ऐकात्म्ये-

---

[1] रूपत्वात्

'आनन्दमात्रमजरं पुराणमेकं सन्तं वहुधा दृश्यमानम् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्॥'

इति चतुर्वेदशिखायाम् ॥ १६ ॥

॥ ॐ दर्शयति चाथो अपि स्मर्यते ॐ ॥ १७ ॥

दर्शयति चानन्दरूपत्वं 'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाती'ति ।

'शुद्धस्फटिकसंकाशं वासुदेवं निरञ्जनम् ।
चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेः ॥'

इति च मात्स्ये ॥ १७॥

---

तत्त्वप्रकाशिका

त्यादिश्रुतिसिद्धत्वादिति भावः। प्रधानात्मभाव एव स्वरूपं यस्य तदैकात्म्यम् । प्रत्ययसारं ज्ञानरूपम् । 'तद्गुणसारत्वादि'ति प्रकृतौ ज्ञानानन्दौ तद्ग्रहणेन गृह्येते ॥ १६ ॥

ब्रह्मणो ज्ञानानन्दाद्यात्मकत्वमपि श्रुतिसिद्धम्

नन्वेतच्छ्रुत्योर्ज्ञानानन्दाद्यात्मकत्वमेव ब्रह्मणः श्रूयते । न त्वानन्दादेर्ब्रह्मरूपत्वम् । अतो रूपित्वश्रुतेर्वैयर्थ्यं सौन्दर्याद्यभावश्चापरिहृत इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे दर्शयति चेति । न ज्ञानानन्दयोः ब्रह्मरूपत्वाश्रवणं येन श्रुतिवैयर्थ्यादिदोषः; यतः तद्विज्ञानेनेति श्रुतिरानन्दस्य ब्रह्मरूपत्वं च दर्शयति, अथ ज्ञानस्यापि ब्रह्मरूपत्वं शुद्धस्फटिकसंकाशमिति स्मर्यत इति भावः । अतो ज्ञानानन्दादिसुन्दरतरविग्रहे हरौ भक्तिर्युक्तेति युक्तं तन्महिमवर्णनमिति सिद्धम् ॥ १७ ॥

शेषतात्पर्यचन्द्रिका

समर्थनपेटिका

## ॥ ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ॥ १४ ॥

पेटिकानन्तरसङ्गतौ

अस्यापि प्रथमद्वितीयोक्तमाहात्म्यविवेचनपराद्यपेटिकायां वर्णितस्य माहात्म्यस्य निरतिशयभक्त्युत्पादनफलस्य रूपवत्त्वारूपवत्त्वयोर्विरोधेन श्रुत्यप्रामाण्यप्राप्त्या भगवत्ययोगेन न भक्तिसामान्यमेवोदेतुमर्हम्। सुतरां निरतिशयभक्तिः। तथा च फलाभावात्पादो व्यर्थ इत्याक्षेपे तत्समर्थनार्थत्वात्समर्थनपेटिकायामन्तर्भावः। पूर्वोक्तमभिन्नरूपत्वमाक्षिप्य समाधीयते इति सङ्गतिः॥

अरूपाधिकरणशरीरम्

फलभूता भक्तिर्विषयः। उत्पादयितुं शक्या न वा; तदर्थं रूपवत्त्वेऽनित्यत्वमापद्यते न वेति चिन्त्यते॥

तत्र,

शरीरे स्यादनित्यत्वं न चेत्सौन्दर्यहीनता।
पक्षद्वयेऽप्यभजनं पादश्च स्यादनर्थकः॥

न भगवति भक्तिरुत्पादयितुं शक्या। शरीरवत्त्वेऽनित्यत्वापत्तेः। तदभावे च सौन्दर्याद्यभावात्। पुत्रादौ स्नेहमात्रस्य ममतादिनिबन्धनस्य दर्शनेऽपि भक्तेरदर्शनात् इति—पूर्वःपक्षः॥

शरीराङ्गीकृतौ नैव दोषः प्रकृतिवर्जनात्।
प्राकृतं हि शरीरं स्यादनित्यत्वेन सङ्गतम्॥

शेषतात्पर्यचन्द्रिका

न च तस्मिन्नङ्गीकृतस्य शरीरस्य शरीरत्वादेवानित्यत्वम्। प्राकृतत्वभौतिकत्वयोरुपाधित्वात्। भगवतः प्रकृतिप्रवर्तकत्वेन तदुत्तमत्वान्न तदीयं शरीरं प्राकृतं भौतिकञ्चेति हि साधनाव्यापकतेति—सिद्धान्तः ॥

'अरूप'सूत्रार्थः

सूत्राक्षरार्थस्तु—तत्तु ब्रह्म रूपशब्दितशरीररहितमेव। न कथञ्चिदपि सशरीरम, येन अनित्यत्वादिप्राप्त्या भक्तिर्न कर्तव्या स्यादिति शेषः। कुतः? तत्प्रधानत्वात्, प्रकृतिभूताभ्यामुत्तमत्वादिति एवार्थविवरणम्। अस्थूलमनण्वित्यादिश्रुतिसिद्धं च तत् ॥

'प्रकाशवत्' सूत्रार्थः

द्वितीये,रूपाङ्गीकारात्—रुक्मवर्णादिश्रुतीनामिति शेषः—अवैयर्थ्यम् अप्रामाण्याभावः। न केवलमरूपश्रुतेरेवाप्रामाण्याभावः, किन्तु रुक्मवर्णादिश्रुतेरपीति चार्थः। न केवलमरूपित्वाङ्गीकारेणैव श्रुत्यप्रमाण्यपरिहारः, किन्तु रूपित्वाङ्गीकारेणेति वा चार्थः। नन्वेवं श्रुतौ अरूपित्वव्यवहारो न युक्त इत्यत आह प्रकाशवदिति। गृहान्तः नयनादिप्रकाशो विद्यमानो दीपादिवदतिस्फुटत्वाभावेन नास्तीति व्यवह्रियमाणो दृष्टो यथा तथैवेत्यर्थः। नन्वेवमलौकिके शरीरे व्युत्पत्तिग्रहो न स्यादित्यस्यापीदमेवोत्तरम् प्रकाशवदिति। अप्रसिद्धप्रकाशोऽपि हरौ 'आत्मैवास्य ज्योतिः' 'सुवर्णज्योतिः' इत्यादौ यथा प्रकाशशब्दो व्युत्पन्नोऽस्ति तथैवेत्यर्थः। सूत्रद्वयं तु स्पष्टार्थम् ॥

## शेषतात्पर्यचन्द्रिका

सूत्रक्रमः

तत्क्रमस्तु—रूपवत्त्वादनित्यत्वं[1] ब्रह्मण इति परकीयप्रयोगे हेतोरसिद्धिः प्रथमसूत्रे व्युत्पादिता। तर्हि श्रुतिविरोध इति शङ्का द्वितीयसूत्रे रूपित्वाङ्गीकारेण परिहृता। तत्र च प्राप्तविरोधपरिहारः सदृष्टान्तं प्रकाशवदित्यंशेन विहितः। तत्र च वैलक्षण्याभावशङ्कायां तृतीयं सूत्रं ज्ञानानन्दात्मकशरीरवत्त्वपरम्। तत्रान्यथासिद्धिशङ्कायां चतुर्थं सूत्रम् ॥

ईश्वरशरीरानित्यताशङ्कापरिहारकत्वेन 'आह च' सूत्रयोजनम्

यद्यपि चात्र तृतीयं व्यर्थम्। प्राकृतदेहविलक्षणत्वस्य चतुर्थेनैव प्रतिपादनात्। तथापि देहस्य ज्ञानानन्दाद्यात्मकत्वेऽप्यनित्यत्वं किं न स्यादिति शङ्कायां न हि नित्यभगवदात्मकमनित्यं भवतीति सूचयितुं देहस्य भगवन्मात्रत्वप्रतिपादनमावश्यकमिति न तृतीयवैयर्थ्यम्। तेन भगवन्मात्रं भगवत्स्वरूपाभिन्नं शरीरमाह **आनन्दमात्रमजरमिति** श्रुतिरिति **आह च तन्मात्रमि**ति तृतीयस्य सूत्रस्य योजनान्तरमप्युन्नेयम् ॥

भगवतो विलक्षणरूपत्वे सामान्यप्रमाणपरत्वेन 'आह च' इत्यस्य तृतीयता

भाष्यटीकयोस्तु अस्य चतुर्थत्वनिवारणाय शरीरस्य ज्ञानानन्दात्मकत्वरूपवैलक्षण्यसामान्यप्रमाणनिरूपणपरतया तृतीयं व्याख्यातम्। चतुर्थं च विशेषप्रमाणपरमिति तदनन्तरमेव सङ्गतम्। अत एव योगविभागोऽपि युक्त इति सर्वमनवद्यम् ॥

---

[1] रूपित्वा

## शेषतात्पर्यचन्द्रिका

टीकायां पूर्वपक्षन्यायविवरणव्याख्यानम्

टीकाक्षरार्थस्तु — **विरुद्धत्वन्यायं** तत्साध्यप्रदर्शनपूर्वकं विवृण्वत् **न च रूपवत्त्वारूपवत्त्ववचनयोर्विरोधादप्रामाण्यम्** इति वाक्यं पक्षद्वयं युगपदेव दूषयदपि बुद्ध्या विवेकेन आद्यपक्षे भाष्योक्तानित्यत्वप्रसङ्गदोषेण दूषिते तत्रैव दूषणान्तरपरत्वेन, एवं द्वितीयपक्षेऽपि भाष्ये **रूपवत्त्वादनित्यत्वमित्यनेनो**पलक्षितेन सौन्दर्यसौलक्षण्याद्यभावेन दूषिते दूषणान्तरपरतया च योज्यमित्यभिप्रेत्य रूपवत्त्वारूपवत्त्ववचने शृङ्गग्राहिकयोदाहरन्नेव व्याचष्टे **'अरूपमव्ययं' 'तदरूपमनामयमि'त्यादिश्रुत्यप्रामाण्यं च स्यादित्यादिना** । अनेन रूपवत्त्वारूपवत्त्ववचनयोः **'रुक्मवर्णम्' 'अरूपमव्ययम्'** इत्यादिवचनयोः विरोधादप्रामाण्यम् ; ततश्च न पक्षद्वयं युक्तमिति विवरणवाक्ययोजना सूचिता भवति । **व्यर्थोऽयं पाद इति** । माहात्म्यवर्णनं व्यर्थमित्यर्थः । अत एव सिद्धान्ते वक्ष्यति **युक्तं तन्महिमवर्णनमिति** ॥

टीकायां सिद्धान्तन्यायविवरणव्याख्यानम्

व्यवस्थान्यायमेतदधिकरणसङ्गतत्वेनापि विवृण्वत् **अप्राकृतरूपवत्त्व**[1]**मिति व्यवस्थोपपत्तेः** इति वाक्यं तात्पर्यतो व्याचष्टे **तद्रूपस्यानित्यत्वव्यासेत्यादिना** । अनेन अप्राकृतरूपं **रुक्मवर्णमित्यादिश्रुतेर्विषयः, अरूपमव्ययमित्यादिश्रुतेस्तु** प्राकृतरूपाभावो विषय इति व्यवस्थोपपत्त्योभयोरपि प्रामाण्यसम्भवेन पक्षद्वयमपि युक्तमिति विवरणयोजना द्रष्टव्या ॥

[1] रूपत्वमिति

## शेषतात्पर्यचन्द्रिका

एतदधिकरणसिद्धान्तफलम्

अनेन शरीराभावाद्भगवतो जन्मादिकारणत्वं नोपपद्यत इति शङ्का-निरसनद्वारा जन्मादिकारणत्वं समर्थितं भवति ॥

भगवतः श्रोत्रादिसद्भावात्तन्निन्दा मनस्सद्भावेन कोपप्राप्त्या निषिद्धा । अत एव प्रसादसद्भावात् विहितत्यागश्च न कर्तव्य इत्यादि सिद्धान्ते फलितम् ॥

संक्षेपभाष्ये एतदधिकरणार्थकथनम्

सर्वरूपेष्वभेदवानितिसंक्षेपभाष्यं सर्वशरीरेष्वभेदवानिति योजनया आह च तन्मात्रमिति सूत्रविवरणद्वारैतदधिकरणतात्पर्यकथनपरमपि व्याख्येयम् ॥

इत्यरूपाधिकरणम् ॥ ९ ॥

—:o:—

॥ अथोपमाधिकरणम् ॥ १० ॥

## ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥ १८ ॥

यस्मादेवं परमेश्वररूपाणां मिथो न कश्चिद्भेदः, अतः सादृश्याज्जीवस्यापि तथा स्यादिति तस्य प्रतिबिम्बत्वमुक्त्वा चशब्देन भेदं दर्शयति—

'रूपं रूपं प्रतिरूपो बभूव'

'बहवः सूर्यका यद्वत्सूर्यस्य सदृशा जले ।
एवमेवात्मका लोके परात्मसदृशा मताः'—इत्यादि ।

अत एव भिन्नत्वतदधीनत्वतत्सादृश्यैरेव सूर्यकाद्युपमा नोपाध्यधीनत्वादिना ॥ १८ ॥

---

तत्त्वप्रकाशिका

संगत्यादि

अत्र ब्रह्मप्राप्तिसाधनभक्त्यर्थं जीवाभेदनिरासादस्ति शास्त्रादिसङ्गतिः । जीवाभेदे स्वस्मिन्निव परमात्मन्यपि भक्त्ययोगात् स निराकार्यः । प्रकृता भक्तिरेव विषयः । परमात्मानि युक्ता न वेति सन्देहः । युक्तायुक्तसाधनोपदेशः सन्देहबीजम् ॥

पूर्वपक्षसिद्धान्तोभयपरतया भाष्यस्य प्रथमं वर्णकम्

न युक्तेति पूर्वःपक्षः । जीवस्य परमात्माभिन्नत्वात् । न हि स्वस्मिन्नेव भक्तिरुपपद्यते । न चाभेदे विवदितव्यम् । जीवः परमात्मनो न भिद्यते

तत्त्वप्रकाशिका

चेतनत्वात् तदंशत्वात् मत्स्यादिवत् इत्यनुमानसिद्धत्वात्। मत्स्यादीनां परमात्मनश्च मिथो न भेद इति प्रागेव सिद्धम्। न च वाच्यं भेदस्य समर्थितत्वात् नाभेदो युक्त इति। सर्वचेतनसमुदायस्येशांशत्वेनैकैकजीवस्य परमात्मना भेदाभेदाद्भेदेऽपि भेदाविरोधात्। अतः परमात्मभक्तेरयुक्तत्वाभावार्थं तन्महिमवर्णनमिति ॥

सिद्धान्तयत्सूत्रमुपन्यस्य पूर्वपक्षं तावदनुवदति **अत एवेति**। यस्मात् एवं 'न स्थानतोऽपी'त्युक्तप्रकारेण ईश्वररूपाणामीश्वरस्य च मिथोऽभेदः सिद्धः, अतस्तत्साहश्याच्चेतनत्वादेव जीवस्यापि परमात्माभेदः स्यादिति पूर्वः पक्ष इत्यर्थः ॥

तत्परिहाराय सूर्यकादिवच्चेतिपदं व्याचष्टे **तस्येति**। एवं प्राप्ते सूत्रकारो जीवस्येशप्रतिबिम्बत्वहेतुं सूर्यकादिवदित्यनेन दृष्टान्तकथनेनैवोक्त्वा चशब्देन साध्यं भेदं समुच्चिनोतीत्यर्थः। इदमुक्तं भवति—जीवो ब्रह्माभिन्नो न भवति तत्प्रतिबिम्बत्वात्; यो यत्प्रतिबिम्बः स तस्मात् भिन्नो यथा सूर्यकः सूर्यादिति। जीवस्येश्वरप्रतिबिम्बत्वमेव कुत इत्यत आह **रूपमिति। इत्यादि**। प्रतिबिम्बत्वं दर्शयतीत्यनुषज्यते ॥

सिद्धान्तमात्रपरतया भाष्यस्य द्वितीयं वर्णकम्

**अथवा यस्मादेवमित्यादि सिद्धान्त एव। तथाहि यस्मादुक्तरीत्या परमेश्वररूपांशानां ज्ञानैश्वर्यादौ न कश्चिद्विशेषः, अतो जीवस्यापि परमेश्वर-**

## तत्त्वप्रकाशिका

स्वरूपांशत्वे मत्स्यादिसाम्यात् तद्वज्ज्ञानैश्वर्याद्यविशेषः स्यात् । न चैवम् । अतोंऽशत्वेऽपि जीवो ब्रह्मप्रतिबिम्ब एवेति तस्य प्रतिबिम्बत्वम् अत एवोपमेति पदैरुक्त्वा तद्धेतुना सूर्यकादिदृष्टान्तेन भेदं चशब्देन समुच्चिनोतीति। अनेन प्राचीनानुमानस्याप्रतिबिम्बत्वोपाधिश्च सूचितो भवति । अभेदांश एव विवादात्तन्निरासः । भेदस्यापि सद्भावेन नैश्वर्यादीति चेन्न। ब्रह्मस्वरूपानुगते-रावश्यकत्वात् । ऐश्वर्यादेश्च स्वरूपत्वान्मत्स्यादिवच्चेति युक्तिदृष्टार्थ एव श्रुतिः ॥

जीवस्य ब्रह्मप्रतिबिम्बत्वस्थापनम्

यदुक्तं सूर्यकादिवज्जीवो ब्रह्मप्रतिबिम्ब इति तदयुक्तम् । तथाहि । किमसौ सूर्यकादिवदुपाध्यायत्तत्वादिधर्मा न वा । आद्येऽनित्यत्वादिदोषः । द्वितीये न सूर्यकाद्युपमा संभवति । अतः प्रतिबिम्बत्वाभावादुक्तं तदवस्थमेवे-त्यत आह अत एवेति । न सूर्यकाद्युपमाऽसम्भवो नाप्यनित्यत्वापत्तिः । **'पृथगुपदेशात्' 'संध्ये सृष्टिराह हि' 'तद्गुणसारत्वादि'**त्युक्तैर्भिन्नत्वा-दिभिः सूर्यकाद्युपमोपपत्तेः । उपाध्यायत्तत्वादिसर्वप्रतिबिम्बधर्मानभ्युगमेना-नित्यत्वाप्रसङ्गात् । यौ हि साध्यसाधनधर्मौ विवक्षितौ तत्सद्भावेनैव दृष्टान्त-दार्ष्टान्तिकयोः साम्यम् । अन्यथा सर्वानुमानलोपात् । अत्र च भिन्नत्वं साध्य, तदधीनत्वं तत्सादृश्यं च प्रतिबिम्बपदोक्तं साधनं दृष्टान्तदार्ष्टान्तिकयोरस्तीति न कश्चिद्दोष इति भावः । अतो जीवस्य भिन्नत्वाद्युक्ता भगवति भक्तिरिति युक्तं तन्महिमवर्णनमिति सिद्धम् ॥ १८ ॥

—:o:—

## शेषतात्पर्यचन्द्रिका

### समर्थनपेटिका

## ॥ ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥ १८ ॥

जीवब्रह्मणोः भेदाभेदमतनिराकरणार्थमेतदधिकरणमिति सुधोक्त्युपन्यासः

अत्र सुधायां भेदाभेदमतं निराक्रियत इत्युक्त्वोपन्यस्तम् – ते खल्वेवमाहुः । ब्रह्म एकमेव स्वभावसिद्धं तत्त्वम् । तत्तु[1] अपरमार्थभूतमायासम्बन्धादीश्वरतामापद्यते । स च सर्वज्ञः सर्वेश्वरः जगज्जन्मादि[2]कर्ता मत्स्यकूर्माद्यनन्तावतारभाक् च । जीवास्तु अपरमार्थभूताविद्यासम्बन्धात् ब्रह्मणोंऽशाः चित्स्वभावाः वह्नेरिव विष्फुलिङ्गाः[3] । अत एव ब्रह्मणो भिन्नाभिन्नाः । परस्परमीश्वराच्च भिन्ना एव । ब्रह्म तु सकलचेतनसमुदायात्मक[4]मतिरिक्तं च । यथा मतान्तरे भगवद्रूपाणां मत्स्यादीनां समुदायात्मकमेव ब्रह्म ॥

तथा च जीवा ब्रह्मणो भिन्नाभिन्नाः । न तु भिन्ना एव । तत्त्वमसीत्यादिश्रुतिविरोधात् । नाप्यभिन्ना एव । द्वा सुपर्णेत्यादिश्रुतिविरोधात् । ब्रह्मांशानां जीवानाम् अत्यन्तभेदे अत्यन्ताभेदे च ईश्वरांशानां मत्स्यादीनामपि ईश्वरान्न भेदाभेदौ । किन्तु अत्यन्तभेदो वा अत्यन्ताभेदो वा स्यात् । ब्रह्मेश्वरांशभूतानां जीवानां मत्स्यादीनां च ब्रह्मेश्वरभेदाभेदौ न स्वाभाविकौ ; येन ब्रह्मैव भवतीत्याद्युक्तिरयुक्ता स्यात् । किं तु अभेदस्स्वाभाविकः ॥

---

1 तत् परमार्थभूतं माया   2 जननादि   3 विस्फुलिङ्गाः   4 समुच्चयात्मक

## शेषतात्पर्यचन्द्रिका

तत्रापि न मत्स्यादिजीवौ विशेषरहितौ। मत्स्याद्याः जगदनुग्रहार्थ-लीलाविग्रहोपाधिभिरतिरस्कृतैश्वर्यादिमन्तः। जीवास्तु अविज्ञातत्कार्यकाम-कर्मादिनिबन्धनदेहेन्द्रियाद्युपाधिभिर्भिन्नास्तिरस्कृतब्रह्मस्वभावा उपाधिनिबन्धन-दुःखादिमन्तश्च। तत्र येषां ज्ञानकर्मभ्यां देहाद्युपाधीनाम् औपाधि-कभेदस्य च आत्यन्तिकापायस्तेषां जीवानां ब्रह्मभावो भवति, यथा ईश्वर-रूपाणि कार्यावसाने स्वेच्छया लीलाविग्रहत्यागेनेश्वरतामापद्यन्ते[1]। तेन यदि मत्स्यादयः परमेश्वरस्येव जीवा ब्रह्मणोंऽशाः स्युः तदा मत्स्यादीनामैश्वर्या-दिवत् जीवानां निर्दुःखादिकं स्यात्, अंशेष्वंशिसाधर्म्यस्याव्यभिचारादिति निरस्तम्। स्वाश्रयाव्यामोहिकया मायया ऐश्वर्याद्यतिरस्कारेऽपि स्वाश्रय-व्यामोहिकयाऽविद्यया निर्दुःखत्वादिब्रह्मभावतिरस्कारोपपत्तेः॥

तत्र जीवाः संसारदशायां ब्रह्मणा भिन्ना एव, द्वासुपर्णेत्यादिश्रुतेः। मुक्तौ त्वभिन्ना एव, यत्र त्वित्यादिश्रुतेः। यद्वा संसारे भिन्नाभिन्नाः। मुक्तौ त्वत्यन्ताभिन्ना एव। यद्वा संसारे मुक्तौ च भिन्नाः॥

अत्राद्ये मते भेदाभेदेन ईश्वरगतसुखाद्यनुसन्धानाभावः। अभेदा-भावाच्च संसारो युज्यते। द्वितीयमते अभेदकार्यस्यानुसन्धानस्य भेदः प्रतिबन्धकः। तृतीये मते मुक्तौ भेदसद्भावेऽपि नानुसन्धानप्रतिबन्धः। तदानीं भेदस्य दग्धपटायमानत्वेन जीवन्मुक्तावन्तःकरणस्येव असत्कल्प-त्वात् — इति॥

[1] मापाद्यन्ते

## शेषतात्पर्यचन्द्रिका

भेदाभेदनिरासस्य अत्र प्रतिपाद्यत्वायोगेन सुधोक्तेः असङ्गतिः

ननु मतनिराकरणं द्वितीये सङ्गतम्। अत्रापि भक्त्यर्थं सङ्गतमिति चेन्न। अभेदादिनिराकरणस्य भक्त्यर्थं सङ्गतत्वेऽपि भेदाभेदनिराकरणस्य संगत्यभावात्। प्रत्युत भेदस्य भक्तिसाधकत्वेन तन्निराकरणायोगाच्च। अत एवेह टीकायां 'जीवाभेदनिरासादस्ति शास्त्रादिसङ्गतिः, जीवाभेदे स्वस्मिन्निव परमात्मन्यपि भक्त्ययोगादि'ति, 'जीवस्यापि परमात्मना अभेदः इति पूर्वपक्ष' इति, 'अतो जीवस्य भिन्नत्वात् युक्ता भक्तिरि'ति च अभेदभेद-विषयावेव पूर्वपक्षसिद्धान्तौ दर्शितौ। अत एव च सुधाटीकयोः 'जीवो ब्रह्माभिन्नः चेतनत्वात्, ब्रह्मवत्; ब्रह्मांशत्वात्, मत्स्यादिवदि'ति पूर्वपक्षे अनुमानोपन्यासः। अतोऽभेदमात्रमत्र निरस्यत इति वक्तव्यम्। तत्तु पृथगुप-देशादित्यादिना निरस्तम्॥

भेदाभेदनिरासः अधिकरणफलमात्रमित्यदोषः

अत्रोच्यते—अभेदमात्रमेव अत्र निराक्रियते। तस्यैव भक्तौ प्रतिबन्धकत्वात्। प्रतिपाद्यस्तु भेद एव। अत एव सूत्रेऽत्यन्तभिन्नसूर्यक-दृष्टान्तः। भाष्ये चशब्देन भेदं दर्शयतीति, टीकायां च जीवस्य भिन्नत्वात् युक्ता भक्तिरिति भेदस्य प्रतिपाद्यत्वं सूचितम्। ततोऽर्थाद्भेदाभेदनिराकरणं फलति। एतदेवाभिप्रेत्य सुधायां पृथगुपदेशादित्यादिना गतार्थतापरिहाराय भेदाभेदमतं निराक्रियत इत्यधिकरणफलमुक्तम्॥

यत्तु टीकायां जीवभेदनिरूपणादिति वक्तव्ये जीवाभेदनिरासादिति संगतिवाक्यं तत् समर्थनपेटिकायाम् अस्यान्तर्भावसिद्ध्यर्थम्। जीवाभेदे

## शेषतात्पर्यचन्द्रिका

भक्तिरेव नोत्पद्यते स्वस्मिन्निवेति स्वयमेवोपपादनात्। अन्यथा हि भेदस्य भक्तिसाधकत्वस्याप्यभावो घटादौ दृष्ट इति तन्निरूपणमसङ्गतमेव स्यात्। नस्थानाधिकरणसङ्गत्यभावाच्च। अभेदमात्रनिराकरणे हि नस्थानाधिकरणे मत्स्यादीनां मिथोऽभेदस्योक्तत्वाज्जीवब्रह्मणोरपि तथा स्यादिति शङ्कनात् सङ्गतिर्लभ्यते ॥

भेदाभेदनिरासस्य प्रतिपाद्यत्वेऽप्यदोषः

यद्वा भेदाभेदनिराकरणमेवाधिकरणप्रतिपाद्यमस्तु ; केवलगङ्गोदकस्योपादेयत्वेऽपि श्वदृतिसंबद्धस्य तदभाववत् केवलभेदस्यानुकूलत्वेऽप्यभेदसहितस्य तदभावात्। टीकायामभेदनिरासादित्युक्तिस्तु साक्षात्प्रतिबन्धकताभिप्राया। न तु केवलाभेदाभिप्राया। अन्यथोक्तरीत्या भेदाभेदस्य भक्तिप्रतिबन्धकस्यानिरासेन तन्मुखभक्त्यकर्तव्यताशङ्का निरातङ्का स्यात्। अत एवाभेदांश एव विवादात् तन्निरास इति सूत्रकारीयाभेदांशनिराकरणस्य टीकायां गत्युक्तिरपि युक्ता। अत एव च सुधायां भेदस्तावत्सिद्धान्तिनाङ्गीकृतः, अभेदस्त्वनुमानसिद्ध इत्युक्तम् ॥

नन्वेवम् **ईशरूपेष्विवोदिता** इत्यनुव्याख्याने नस्थानाधिकरणसङ्गतिकथनमयुक्तं स्यात्, तत्रेशरूपाणामभेदमात्रस्यैवोक्तेरिति चेन्न। तत्रापि भेदसहितोऽभेदो मुखतो न निषिद्ध एव। अत एव **न भेदादिति चेन्न प्रत्येकमतद्वचनादिति** सूत्रम् अभेदवचनादिति भाष्ये व्याख्यातम्। न पुनर्भेदाभेदनिषेधादिति। तथा च केवलभेदस्यानुग्राह्यानुग्राहकभावादिदोषापादकतया

## शेषतात्पर्यचन्द्रिका

पूर्वपक्षसाधकत्वेन निराकरणेऽपि भेदाभेदस्य निराकरणे कारणाभावात् । अत एव सुधायां 'यथा भगवद्रूपाणां मत्स्यादीनां समुदाये भगवत्संज्ञा **न स्थानतोऽपी**त्यादौ सिद्धान्तिनोदिता' इत्येवं नस्थानाधिकरणप्रमेयानुवादः । न त्वत्यन्ताभेद उदित इति । 'एतेन अत्यन्ताभेदं परित्यज्य भेदाभेदाङ्गीकारे श्रुतिद्वयमिव अंशत्वानुमानं चोक्तं भवती'ति, 'न जीवानां ब्रह्मणा भेदाभेदौ स्वाभाविकौ, किंत्वभेदः स्वाभाविको भेदस्त्वौपाधिकः, यथेश्वरांशानां मत्स्यादीनामीश्वरेणे'ति च वाक्यानि दृश्यन्ते ॥

सङ्गतिः

तथा च यदि विश्वादीनाम् **अयमेव सः** इत्याद्यभेदादिवचनादभेदादिरङ्गीक्रियते तर्हि जीवब्रह्मणोरप्यभेदो भेदाभेदो वाङ्गीक्रियतामिति वा, **प्रतिदृशमिव नैकधार्कम्** इति सूर्यदृष्टान्तेन भगवद्रूपाणामभेदे तेनैव दृष्टान्तेन जीवानामपि स स्यादिति वा; यदि **आनन्दमात्रमजरं पुराणम्** इत्यादिश्रुतिवशाद्भगवच्छरीरस्य तदात्मकत्वम्, '**आनन्दरूपमजरं यद्विभाति**' '**नान्यं ज्ञानरूपादृते हरेः**' इति श्रुतिस्मृतिभ्यां च आनन्दज्ञानात्मकत्वं चाङ्गीक्रियते तर्हि भगवज्जीवयोरपि '**तत्त्वमसि**' '**द्वा सुपर्णा**'

'**विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।**
**आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥**'

'**असर्वज्ञोऽल्पशक्तिश्च**' इत्यादिश्रुतिस्मृतिभ्यां भेदाभेदोऽप्यङ्गीक्रियतामिति वा पूर्वन्यायोपजीवनेन प्रवर्तनाद्वा; भगवदंशानामभेद इत्युक्तस्य **नस्था-**

## शेषतात्पर्यचन्द्रिका

नाधिकरणप्रमेयस्य, श्रुतिस्मृतिसिद्धार्थोऽङ्गीकार्य इति सामान्यत उत्सृष्टस्य अरूपाधिकरणप्रमेयस्य च परस्परानुसंधानराहित्यरूपबाधकेनापवदनाद्वा; अत एव प्रधानत्वादरूपत्वाच्च ब्रह्म जीवाद्भिन्नं, न पुनः प्रतिदृग्गतसूर्यादिवदभिन्नमित्यरूपाधिकरणन्यायातिदेशनाद्वा सङ्गतिः। अभेदस्य भक्तिप्रतिबन्धकत्वस्य टीकायामेवोक्तत्वात् पेटिकासंगतिरपि सिद्धा ॥

### संशयः

तत्र जीवः किं परमात्मनात्यन्तभिन्नो न भवति उत भवतीति चिन्ता। तदर्थमंशत्वादि अभेदसाधकं न वा। तदर्थमंशत्वम् एकविधमुतानेकविधमिति चिन्ता ॥

### जीवस्य ब्रह्मांशत्वेन भेदाभेद एवेति पूर्वः पक्षः

तत्र पूर्वः पक्षः—जीवो न परमात्मना अत्यन्तभिन्नः चेतनत्वात् अंशत्वाच्च मत्स्यादिवत्। न च पृथगुपदेशादित्यादौ उदाहृतभेदश्रुत्या बाधः। भेदसद्भावेऽपि अत्यन्तभेदनिषेधोपपत्तेः। यद्वा जीवो भगवदभिन्नः चेतनत्वात् तदंशत्वाच्च मत्स्यादिवत्। न च भेदाभेदमादायार्थान्तरता। तस्यैवानया वाचोभङ्ग्या सिषाधयिषितत्वात्। यद्वा जीवो ब्रह्मणो भिन्नाभिन्नः चेतनत्वादंशत्वाच्च मत्स्यादिवत्। प्रक्रिया तु प्रागुपन्यस्तानुवादसुधायां स्पष्टैव। न च भेदांशे सिद्धसाधनता। पक्षतावच्छेदकनानात्व इव साध्यतावच्छेदकनानात्व एव तस्याः दोषत्वात्। इह च भेदसाहित्यस्य साध्यतावच्छेदकतया

## शेषतात्पर्यचन्द्रिका

तदभावात्। न च दृष्टान्ते साध्यवैकल्यम्। नस्थानाधिकरणे तत्सिद्धेरुक्तत्वात्। अत एव भेदाभेदाभावे तदंशत्वमेव न स्यात् इति तर्कसंभवान्नाप्रयोजको हेतुः ॥

हेतूक्तं स्वरूपांशत्वमेवेति नाप्रयोजकत्वम्

न च—अंशत्वं नैकविधम्। प्रतिदृग्गते सूर्ये, जलादिप्रतिबिम्बिते सूर्यके च; तथा पचनादिहेतौ वह्नौ, खद्योते च; तथा समुद्रोदके, मूत्रश्लेष्मादौ च; तथा धरादौ, विष्ठादौ च सूर्यप्रलयकालाग्निमहाजलपृथिव्यादीनाम् अंशत्वव्यवहारात्। तथा च मत्स्यादीनां स्वरूपांशत्वेनाभेदेऽपि जीवस्य तदभावेन सूर्यकादिवत् प्रतिबिम्बत्वरूपांशत्वसद्भावेऽपि अभेदाभावः किं न स्यादिति—वाच्यम्। प्रतिबिम्बत्वं हि उपाधिव्याप्तं सूर्यकादौ दृष्टम्। न ह्युपाधेरभावे प्रतिबिम्बो नाम सम्भवति। ततश्च जीवस्य भगवत्प्रतिबिम्बत्वे उपाधिरवश्यमन्वेष्टव्य इति, तदायत्तत्वे च सूर्यकादिवदेव अनित्यत्वप्राप्त्या कृतहानाकृताभ्यागमप्रसङ्गात्। ततश्च मत्स्यादिवत्स्वरूपांशत्वमेवेष्टव्यमिति दुरुद्धरा प्रतिबन्दीति ॥

पूर्वपक्षसंग्रहः

जीवा नात्यन्तभिन्नाः स्युः ब्रह्मणोंऽशत्वचित्त्वतः ।
मत्स्यादयोऽन्यथा न स्युरभिन्ना ब्रह्मणा सह ॥

## शेषतात्पर्यचन्द्रिका

जीवस्यैश्वर्यानुसंधानापत्त्या न स्वरूपांशत्वमिति सिद्धान्तः

सिद्धान्तस्तु——जीवानां स्वरूपांशत्वे ईश्वरांशानां मत्स्यादीनामैश्वर्यादिवत् ब्रह्मांशानामपि जीवानां ब्रह्मवन्निर्दुःखत्वादिकमपि स्यात्। न चेष्टापत्तिः। '**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा**' '**मत्तः परतरं नान्यत्**', '**मयि सर्वमिदं प्रोतम्**,' '**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च**' इत्यादितदीयवाक्यानुगतैश्वर्यानुसन्धानवत्, जीवानामपि ब्रह्मगतपूर्णगुणत्वनिर्दुःखत्वादिगुणाधिक्यानुसंधानापत्तेः। न चानुसंदधते, अल्पगुणत्वेनानुभवात्। न च भेदस्यापि सद्भावेनानुसन्धानप्रतिबन्ध इति वाच्यम्, तत्र प्रमाणाभावात्। अन्यथा अभेदस्यापि भेदकार्यप्रतिबन्धकताऽऽपत्तिः॥

न च वक्तव्यमज्ञानेन प्रतिबद्धमनुसंधानमिति

न च मुक्तावनुसन्धानमस्त्येव, संसारे तु अज्ञानप्रभेदस्वाश्रयव्यामोहकाविद्यया प्रतिबद्धमनुसन्धानम्, अत एव मत्स्यादीनां स्वाश्रयाव्यामोहकमायासद्भावेऽपि उक्तविधाज्ञानाभावान्नानुसन्धानप्रतिबन्ध इति वाच्यम्। तथापि ब्रह्मण उक्तविधाज्ञानाभावेन जीवगतदुःखानुसन्धानस्यावर्जनीयत्वात्॥

किं च अज्ञानं ब्रह्मण्युत जीवे? नाद्यः। असंगत्वविरोधात्। उपाधिवशाद्धर्मसम्बन्ध इति चेत्, उपाधेरज्ञानान्यत्वे अनवस्थापातात्। तदनन्यत्वे स्वात्माश्रयः। किं च उपाधेः ब्रह्ममात्रसम्बन्धित्वे ब्रह्मण एव औपाधिकत्वा

शेषतात्पर्यचन्द्रिका

पत्तिः । उपहितसन्बन्धित्वे त्वात्माश्रयः । न द्वितीयः । प्रागेतस्माज्जीवस्यैवाभावात् । तदिदमुक्तम् **अज्ञानासम्भवादेव तन्मतमखिलमपाकृतम्** इति । तन्मतं भेदाभेदवादिमतम् अखिलम् अज्ञानेन मत्स्यादीनां जीवानां च अनुसन्धानव्यवस्थित्यादिकम् उक्तरीत्या अज्ञानाभावादेव निरस्तमित्यर्थः ॥

भिन्नांशत्वेऽपि न जीवस्यानित्यताऽऽपत्तिः

न च स्वरूपांशत्वाभावेऽनित्यत्वाद्यापत्त्या प्रतिबिम्बरूपांशत्वस्याप्यभावे **ममैवांशो जीवलोके** इत्याद्यागमो निर्विषयः स्यादिति वाच्यम् । उपाध्यायत्तत्वेऽपि अनित्यत्वाभावात्, उपाधेर्बिम्बस्य तत्सन्निधानस्य च नित्यत्वाङ्गीकारात् । अनादेर्नित्यस्यापि प्रागभावाकाशादेरिवान्याधीनत्वस्वीकारात् । तथा च प्रतिबिम्बत्वरूपभिन्नांशत्वस्वीकारे न किञ्चिद्बाधकमिति न मत्स्यादिप्रतिबन्दी ॥

पूर्वपक्षानुमानस्य सत्प्रतिपक्षता दृष्टान्तवैकल्यं च

तथा चायं प्रयोगः—विमतो ब्रह्मणा नाभिन्नः, न भिन्नाभिन्नो वा, तत्प्रतिबिम्बत्वात् । यो यत्प्रतिबिम्बः स तथा, यथा सूर्यादिना सूर्यकादिः । न च सूर्यकादेरुपाध्यायत्तत्वेन अनित्यत्वात् दृष्टान्तदार्ष्टान्तिकभावोऽनुपपन्नः स्यादिति वाच्यम् । न हि यावद्धर्मसाम्येन दृष्टान्तदार्ष्टान्तिकभावः क्वाप्युपलब्धः । महानसादेर्घटादिमत्त्वेऽपि पर्वतादेस्तदभावाच्च । किन्तु यत्किञ्चिद्धर्मसाम्येनैव । तथा सति ह्रदपर्वतयोरपि द्रव्यत्वादिसाम्येन स स्यादिति चेन्न । साध्यसाधनधर्मवत्तया सादृश्यस्य विवक्षितत्वात् । ततश्च जीवसूर्यकयोरिह

## शेषतात्पर्यचन्द्रिका

विवक्षिताभ्यां अभेदाभावप्रतिबिम्बत्वाभ्यां साध्यसाधनाभ्यां साम्यात् । ततश्चेतनत्वांशत्वानुमानं सत्प्रतिपक्षमेव। अप्रतिबिम्बत्वं च तत्रोपाधिः । भेदाभेदानुमाने दृष्टान्ते साध्यवैकल्यं च । '**य इह नानेव पश्यति**' '**एकमेवाद्वितीयम्**' इत्यादौ इवैकशब्दाभ्यां मत्स्यादेर्भेदाभेदनिषेधात् । अभेदव्यापकानुसन्धाननिवृत्त्या जीवब्रह्मणोरभेदनिवृत्तावपि मत्स्यादीनामनुसन्धानसद्भावेन व्यापकनिवृत्त्यभावेन अभेदनिवृत्तौ कारणाभावाच्च । ततश्च मत्स्यादेरत्यन्ताभेद एव, जीवानामत्यन्तभेद एवेति न ब्रह्मांशेषु क्वापि भेदाभेदमतस्यावकाशः ॥

नस्थाननयस्य ईश्वररूपाणामत्यन्ताभेदपरता

एतेन नस्थाननयेऽप्यत्यन्ताभेदसाधनमेवाभिप्रेतमिति फलितम् । 'ईशरूपेष्विवोदिता' इति तु सिद्धान्ताशयानभिज्ञस्य शङ्कानुवादमात्रम् । उक्त रीत्या आशयोद्घाटनेन भाष्यटीकयोस्समाधानानुक्तिस्तु सति मार्गान्तरे किं व्यर्थकलहेनेत्याशयेनेति द्रष्टव्यम् । एतदभिप्रेत्यैव 'तस्याभेद एवे'ति तत्रत्यविवरणं प्रवृत्तम् ॥

अर्थवादाद्यधिकरणदृष्टान्तेन एतदधिकरणस्यात्र संगतत्वम्

तथा च यथा अर्थवादाधिकरणस्य, पर्णमय्यधिकरणस्य च, तथा '**त्रिवृद्बहिष्पवमानम्**' '**आदित्यः प्रायणीयः पयसि चरुः**' इत्यादिवाक्यविषयस्य त्रिवृच्चर्वैश्ववालाधिकरणस्य, '**त्रिवृदग्निष्टुदग्निष्टोमः,**' '**सौर्यं चरुं निर्वपेदि**' त्यादिवाक्यविषयकदाशमिकाधिकरणस्य च प्रथमचतुर्थदशमेष्वपि

शेषतात्पर्यचन्द्रिका

सङ्गतस्य सङ्गतिविशेषलोभेन प्रथमादावेव निबन्धनं तथास्यापि द्वितीयेऽपि संगतस्य उक्तबहुविधसङ्गतिलोभेन अत्रैव निवेशो युक्त इति सर्वमनवद्यम् ॥

सिद्धान्तसंग्रहः

[1]अंशत्वस्याविशेषेऽपि सुखभोगाद्यभावतः ।
भेदो जीवस्य चेशेन मत्स्यादेर्न तथात्वतः ॥

भाष्यप्रथमवर्णकानुसारी सूत्रार्थः

सूत्रार्थस्तु—अत एवेति बहुकृत्वः आवर्तते । चेत्यावर्तते । द्वितीयोऽवधारणार्थः । प्रथमस्समुच्चयार्थः । उपमेत्यावर्तते । मैवमित्यध्याहारः । अत एव मत्स्यादीनाम् अभेदस्य साधितत्वादेव उपमा मत्स्यादिसाम्यम्, अत एव चेतनत्वांशत्वाभ्यामेव जीवस्य स्यात् । ततश्च जीवो मत्स्यादिवदभिन्न एवेति । मैवम् । सूर्यकादिवत् उपमा प्रतिबिम्ब एवायं जीवः । न केवलं सूर्यकादिवत् प्रतिबिम्बमात्रं किन्तु भिन्नश्च सूर्यकादिवत् । प्रतिबिम्बो भिन्नश्च यथा जीवस्तथा तद्वदेव उपाध्यधीनोऽनित्यः स्यादिति चेत्, अत एव तदधीनत्वात्तत्सदृशत्वादेव उपमा दृष्टान्तः । इह विवाक्षितसाध्यसाधनाभ्यामेव सूर्यकादिदृष्टान्तो न तूपाध्यायत्तत्वादितद्गतधर्मान्तरेणापि, येनानित्यत्वं स्यादिति यावत् ॥

भाष्यद्वितीयवर्णकानुसारी सूत्रार्थः

यद्वा यस्मात्परमेश्वरस्वरूपांशानां मत्स्यादीनां ज्ञानैश्वर्यादौ न कश्चिदनुसन्धाने विशेषोऽस्तीति पूर्वाधिकरणे प्रतिपादितम्, अतः उपमा

---

1 अंशित्व

## शेषतात्पर्यचन्द्रिका

मत्स्यादिना[1] साम्यं स्यात् । तद्वज्ज्ञानैश्वर्याद्यनुसन्धानमपि स्यात् । न त्वनुसन्धाने विशेषः स्यादिति यावत् । न चैवं जीवोऽनुसन्धत्ते । अल्पगुणत्वेनानुभवात् । अतः उपमैव जीवो ब्रह्मणः सूर्यकादिवत्प्रतिबिम्ब एव न तु मत्स्यादिवत् स्वरूपांश इति । अत्रापि पक्षे दृष्टान्तमुखेन प्राप्तशङ्कापरिहारः अत एव चोपमेति सूत्रांशस्यावृत्त्या द्रष्टव्य इति ॥

### टीकायां पूर्वपक्षन्यायविवरणभाष्ययोः व्याख्यानम्

टीकाक्षरार्थस्तु —**न्यायसाम्य**न्यायमेतदधिकरणपूर्वपक्षोपपादकत्वेन विवृण्वत् **न च परमात्मना चेतनत्वन्यायसाम्येन जीवस्याप्यभेद**[2] इति वाक्यं **सादृश्याज्जीवस्यापि तथा स्यात्** इति भाष्ये सामान्यनिर्देशात्, अंशत्वस्याप्युपलक्षणमेतदिति भावेन व्याचष्टे **जीवः परमात्मनो न भिद्यत** इत्यादिना । अत्राभिप्रेतप्रयोगे दृष्टान्ते साध्यवैकल्यशङ्कायां भाष्येऽनूद्यमानो युक्तिविशेषो नेतव्य इत्याह **मत्स्यादीनां परमात्मनश्चेति** ॥

### टीकायां सिद्धान्तन्यायविवरणव्याख्यानम्

**अमानक्लृप्तसन्मानव्यवस्थात्यल्पताभवा** इति न्यायमालोक्तात्यल्पतान्यायम्—अत्यल्पत्वं गुणहीनतयेति अल्पत्वप्रतियोगितया महत्त्वं चोपलक्षणीयम्, ततस्ताभ्यामभेदस्य विरोधश्चोपलक्षणीय इति चाभिप्रेत्य—**विवृण्वत् अल्पगुणत्वादिविरोधात्** इति वाक्यं तर्कस्य विपर्यये पर्यवसानप्रदर्शनव्याजेन व्याचष्टे **न चैवमतोंऽशत्वेऽपीत्यादिना** । आदिशब्दश्च स्वातन्त्र्यास्वातन्त्र्यादि-

[1] मत्स्यादिसाम्यं [2] जीवस्याभेद

## शेषतात्पर्यचन्द्रिका

प्रतिद्वन्द्विधर्मपरः । तथा चाल्पगुणमहागुणत्वयोः सहानवस्थाननियमात् जीवस्य ब्रह्माभेदे च तयोः सहावस्थानप्राप्त्या नियमभङ्गस्स्यादिति भावः ॥

भेदस्यापि सद्भावेन नैश्वर्यादीति शङ्कावारकटीकायाः प्रथमव्याख्यानम्

यदुक्तं मत्स्यादिवत्स्वरूपांशत्वे ज्ञानैश्वर्याद्यनुसंधानं स्यादिति, न तद्युक्तम्, भेदरूपप्रतिबन्धकसद्भावादिति शङ्कते **भेदस्यापीति** । यथा अनुसंधानमभेदाख्यकारणसद्भावादापाद्यते, एवं तत्प्रतिबन्धोऽपि भेदाख्यकारणसद्भावाद्युक्त इत्यपेरर्थः। यदीयाभेदो यत्र तत्र तदीयस्वरूपानुसन्धानमिति निरातङ्कया व्याप्त्या अभेदसद्भावेन अनुसन्धानापादनसम्भवादित्याह **ब्रह्मस्वरूपानुगतेरावश्यकत्वादिति**। अनुगतिः अनुसन्धानम् । तथाप्यैश्वर्यादेः का प्रसक्तिः इत्यत आह **ऐश्वर्यादेरिति** ॥

नन्वेवमनिर्णय एव। भेदस्य प्रतिबन्धकस्य सद्भावादनुसन्धानाभाव इति वयम्, अभेदस्य कारणस्य सद्भावादनुसन्धानमिति यूयमित्यतो भेदस्यानुसन्धाने प्रतिबन्धकत्वमेव निराचष्टे **मत्स्यादिवच्चेति** । परेणेश्वराद्भिन्नाभिन्नतयाङ्गीकृते मत्स्यादौ भेदसद्भावेऽप्यनुसन्धानदर्शनान्न भेदस्य प्रतिबन्धकत्वमिति भावः ॥

उक्तटीकायाः द्वितीयं व्याख्यानम्

यद्वा भेदः किं धर्मिस्वरूपानुसन्धाने प्रतिबन्धकः उत तद्गतधर्मानुसन्धाने इति विकल्प्याद्यं दूषयति **ब्रह्मस्वरूपेति** । ब्रह्मस्वरूपमात्रस्याननुसन्धाने अभेद एव न युक्त इति. तदंशे अनुसन्धानस्य त्वयाप्यवश्यमङ्गीकार्यत्वात् ।

## शेषतात्पर्यचन्द्रिका

ततश्च न स्वरूपानुसन्धानेऽस्य प्रतिबन्धकतेति भावः। ऐश्वर्यादेः[1] स्वरूपत्व नाङ्गीक्रियत इत्यत आह **मत्स्यादिवच्चेति**। यद्यैश्वर्यादेः ब्रह्मस्वरूपत्वं नाङ्गीक्रियते तर्हि मत्स्यादेरपि तन्न स्यादिति कथं तद्दृष्टान्तेन जीवाभेदसाधनमिति भावः। द्वितीये तदेवोत्तरं **मत्स्यादिवच्चेति**। मत्स्यादीनां धर्माः परस्परमीश्वरेण चानुसन्धीयन्त इति त्वयाप्यङ्गीकृतम्। तत्र भेदस्य ऐश्वर्यादिरूपधर्मानुसन्धाने यथा न प्रतिबन्धकता तथा अत्रापीत्यर्थः ॥

उक्तटीकायाः तृतीयं व्याख्यानम्

यद्वा पूर्वग्रन्थेषु ऐश्वर्याद्यनुगतिस्तत्प्राप्तिरूपैव सिद्धान्तिनाऽऽपादिता। तत्र च भेदस्य प्रतिबन्धकताशङ्कायां भेदाभेदस्थले मृद्घटादौ भेदसद्भावेऽपि मृत्स्वरूपानुस्यूतिदर्शनेन तत्र तस्य न प्रतिबन्धकत्वमित्याशयेनाह **ब्रह्मस्वरूपेति**। चेतने तस्य प्रतिबन्धकत्वमित्यत आह **मत्स्यादिवच्चेति** ॥

सूत्रांश प्रकारान्तरेण व्याकुर्वतो भाष्यस्य
योजकत्वेन टीकावतारणम्

एकवाक्यतया सूत्रं योजयित्वा **अत एत चोपमेत्यं**शमावर्त्य प्रकारान्तरेण व्याकुर्वत् **अत एव भिन्नत्वतदधीनत्वे**त्यादिभाष्यं योजयितुमाह **यदुक्त**मित्यादिना ॥

---

[1] दिस्वरूपत्वं

## शेषतात्पर्यचन्द्रिका

संक्षेपभाष्ये एतदधिकरणतात्पर्यनिरूपणम्

अत्र **सर्वावस्थाप्रेरकश्चे**त्यतश्चोऽनुवर्तते। स च एवार्थः। एक इत्यनेन सम्बध्यते। तेन एक एव परमेश्वरः, न तु भिन्नाभिन्न इति योजनया संक्षेपभाष्यम् एतदधिकरणतात्पर्यकथनपरमपि व्याख्येयम् ॥

फलोक्त्या अभेदप्रतिकूलताख्यापनेन च उपसंहारः

अत्र **स्वाभिन्नत्वेन नोपास्यं न ज्ञातव्यं चे**ति, तथा **अभेदस्य** प्रतिबन्धकस्याभावात् तद्विषयभक्तिज्ञानादिकं संपादनीयमिति, तथा सायुज्यमुक्तिः तच्छरीरेऽवस्थितिमात्रम् न तु तदैक्यमित्यादि फलितम् ॥

**पृथगुपदेशा**दित्यादेरिवाभेदप्रतिकूलता च स्पष्टैव ॥

इत्युपमाधिकरणम् ॥ १० ॥



*Courtesy H. H. Sri Vidyaprasanna Tirtha of Sri Vyasaraja Mutt.*

श्रीमद्रघुनाथतीर्थानां वृन्दावनम् ।

येनायं निरणायि मध्वगुरुसद्भाष्यप्रकाशाशयः
प्राखण्डि प्रतिवादिदर्शनगणः प्राबन्धि गुर्वर्णवः ।
शिष्येभ्यः समदायि वित्तमुभयं प्रालम्भि विद्यासनं
सोयं श्रीरघुनाथतीर्थयतिराट् शुद्धिं विदध्यान्मतेः ॥

अथाम्बुवदधिकरणम् ॥ ११ ॥

नित्यसिद्धत्वात्सादृश्यस्य नित्यानन्दज्ञानादेर्न भक्तिज्ञानादिना प्रयोजनमित्यतो ब्रवीति—

॥ ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ ॥ १९ ॥

अम्बुवत् स्नेहेन ग्रहणं ज्ञानं भक्तिं विना न तत्सादृश्यं सम्यगभिव्यज्यते ।

'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति हि श्रुतिः ।

'महत्त्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाभिधीयते ।
तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकम् ॥'

इति पाद्मे ॥ १९ ॥

---

तत्त्वप्रकाशिका

सङ्गत्यादि

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं तत्फलनिरूपणादस्ति शास्त्रादिसङ्गतिः । तस्या विफलत्वे अकर्तव्यत्वप्रसङ्गात् फलं साध्यमेव । प्रकृता भक्तिरेव विषयः । कर्तव्या न वेति सन्देहः। द्विविधार्थदर्शनं च सन्देहबीजम् ॥

पूर्वपक्षः

पूर्वपक्षयति नित्येति । न भगवद्भक्तिः कर्तव्या प्रयोजनाभावात् । न च भगवज्ज्ञानं प्रयोजनम् । तेनापि प्रयोजनाभावात् । न च तत्प्रसादः

## शेषतात्पर्यचन्द्रिका

साधनफलमुखौ पूर्वपक्षौ

तत्र पूर्वपक्षः—

साधनानां शतमपि न कार्यं साधयेत् क्वचित् ।
उपसर्गहतो वह्निर्न दाहं कर्तुमिच्छति ॥ १ ॥
सादृश्यस्य च नित्यत्वान्न भक्तिफलता भवेत् ।
अनाधेयविशेषस्य फलता न हि युज्यते ॥ २ ॥

न हि भक्तेः किंचित्प्रयोजनमस्ति, येन तदनुष्ठितिः स्यात । न च सादृश्यसिद्धिः प्रयोजनम् । तत्साधने सामर्थ्याभावात् । भिन्नत्वतदधीनत्वयोः प्रतिबन्धकयोः सत्त्वात् । न हि मण्यादिप्रतिबन्धकदशायां वह्निर्दहति । न च मुक्तौ तन्निवृत्त्या एतत्सिद्धमिति वाच्यम् । तयोर्नित्यसिद्धत्वस्य प्रतिबिम्बनित्यत्वसाधनेन साधितत्वात् । राजभिन्नस्य तदधीनस्य च कारागृहवासिनः राजसादृश्यानुभवाभावेन तयोः प्रतिबन्धकत्वं च लोकसिद्धमेव । अतो न भक्तिज्ञानादिसाधनजातेन कृत्यमस्ति ॥ १ ॥

वस्तुतस्तु सादृश्यस्य फलत्वमेवानुपपन्नम्, नित्यसिद्धत्वात् । अत एव च प्रसादो ज्ञानस्य फलं ज्ञानं च भक्तेरिति निरस्तम् । तयोः साधनत्वेन स्वतः पुरुषार्थत्वासंभवात् । पुरुषार्थसाधनत्वेन तु प्रयोजकत्वं निरुपाधिकप्रयोजनसापेक्षं ; तत्तु नास्ति, मोक्षस्य सादृश्यरूपत्वेन नित्यसिद्धत्वात् । अभिव्यक्तेश्च सुप्ताविव स्वत एव संभवादिति ॥ २ ॥

## शेषतात्पर्यचन्द्रिका

सिद्धान्तः

सिद्धान्तस्तु—

साहश्यं तदभिव्यक्तिर्नित्यसिद्धा च यद्यपि ।
तथापि न समीचीना तदर्था भक्तिरिष्यताम् ॥

न च भिन्नत्वतदधीनत्वयोः प्रतिबन्धकत्वे किंचिन्मानम् । कारागृहवासिनो राजसाहश्यानुभवाभावो न भिन्नत्वादिप्रयुक्तः । भिन्नस्यान्याधीनस्य पित्रादिवशस्य राज्ञो राजान्तरसाहश्यानुभवदर्शनात् । न चासावपि स्वयमेव भवति । संसारदर्शनविरोधादिति ॥

साधनमुखः सूत्राक्षरार्थः

सूत्रार्थस्तु—अम्बुवत्पदेन स्नेहपूर्वकमहत्त्वज्ञानरूपभक्त्येकदेशः स्नेहो विवक्षितः । तस्य चिक्कणतारूपस्नेहात्मकाम्बुवत् विद्यमानत्वात् । यद्वा अम्बुनि चिक्कणतारूपस्नेहः प्रसिद्ध एव, भक्तावपि मानसस्नेहोऽस्तीति विशिष्टायाः भक्तेरम्बुसाहश्ये तदेकदेशस्नेहस्यापि तद्व्यपदेशः । तथा च **अम्बुवद्ग्रहणात्** स्नेहेन सहितज्ञानाभावात्, भक्त्यभावादिति यावत्, **तथात्वं** तद्गुणसारत्वादित्यादिना प्रकृतं साहश्यं **न** भवति, भक्तिं विना न तत्साहश्यं सम्यगभिव्यज्यत इति यावत् ॥

फलमुखः सूत्राक्षरार्थः

यद्वा **तथात्वं** पुंस्त्वादिवदित्यनेन प्रकृतं साहश्यस्याभिव्यक्तत्वं **न** भवति, अतोऽम्बुवद्ग्रहणं भक्तिः साहश्याभिव्यक्त्यर्थं कर्तव्येति फलितम् ।

## शेषतात्पर्यचन्द्रिका

भक्त्या मोक्षो भवतीत्यन्वयमुखेन स्पष्टं च वक्तव्ये यत् व्यतिरेकमुखेन, तिरोहितं चाह तत् भक्तेर्मोक्षे व्यभिचाराभावप्रदर्शनाय, विप्रतिपत्तेः भक्तेर्मोक्षस्य च स्वरूपदर्शनाय चेति बोध्यम् । अनया वाचोभङ्ग्या ज्ञानपूर्वकस्नेहो भक्तिः ज्ञानानन्दादिसादृश्यस्य सम्यगभिव्यक्तिश्च मोक्ष इत्यर्थस्य लाभात् ॥

केषांचिदभिमतः सूत्राक्षरार्थः

अम्बुवत् स्नेहेन ग्रहणं यथा जलस्य स्नेहाख्यचिक्कणतागुणेन पांस्वादिग्रहणम् एवं भगवतोऽपि स्वकीयजीवाश्रितस्नेहाख्यभक्त्या स्वीयत्वेन जीवग्रहणम् । तथाचाम्बुवत् भगवतोऽपि विना स्नेहमननुग्रहणात् , इतरेभ्यो व्यावृत्तातिस्नेहस्य च सर्वोत्कर्षज्ञानमन्तरेणासिद्धेः, अतो ज्ञानं भक्तिं च विना ज्ञानानन्दादिरूपतत्सादृश्यं न सम्यगभिव्यज्यते । अनादित आवृतस्य आनन्दादेः भगवद्ग्रहणैकाभिव्यङ्ग्यत्वात् । ग्रहणस्य स्नेहं विनाऽयोगोक्तेः । न च विनातिस्नेहं प्रभूणां भृत्यग्रहणं दृष्टम् । तथा च भगवता स्वात्मनः स्वीयत्वेन ग्रहणसिद्ध्ये तत्र स्नेहरूपा भक्तिः कर्तव्येति सूत्रार्थ इति केचित् ॥

टीकायाः पूर्वपक्षन्यायविवरणयोजकत्वम्

टीकाक्षरार्थस्तु—नवमोद्दिष्टं सतो भव इति न्यायं विशेष्यप्रदर्शनपूर्वकं, भवशब्दार्थकथनपूर्वकं च विवक्षितार्थाध्याहारेण विवृण्वत् **न च सादृश्यस्य सत्त्वात्, साधनं विनैव जीवस्य तादृक्त्वव्यक्तिः** इति

## शेषतात्पर्यचन्द्रिका

धानाय प्रवृत्तमिति भाष्यमादौ योजयित्वा योज्यतामित्यभिप्रेत्यैतन्निवर्तनीयां शङ्कामुद्भावयति **नित्यं विद्यमानस्येति** । अत्र सुप्ताविवेति **दृष्टान्तकथनेन** साधनं विनैवेति विवरणगतैवकाराशयवर्णनमिति ज्ञातव्यम् ॥

पूर्वपक्षोपसंहारभाष्यटीकयोः द्वेधा ऐकमत्यसंपादनम्

**निष्फलत्वान्न भक्तिः कर्तव्येति** उपासनज्ञानप्रसादानामप्याक्षेपः । अत एव भाष्ये 'न भक्तिज्ञानादिना प्रयोजनमि'ति, टीकायां च 'भक्त्यादि' इत्युक्तमिति । भक्तिमात्रविषयोपसंहारस्तु पादसंगतिसिद्ध्यर्थम् । भाष्ये साधनमात्रविषयोपसंहारो ज्ञानपादे उपासनापादे वैराग्यपादे च अफलत्व-निबन्धनपूर्वपक्षनिरासाय पृथगधिकरणारम्भप्रतिक्षेपायेति ज्ञातव्यम् ॥

यद्वा टीकारीत्या भक्तिमात्रविषय एवोपसंहारः । भाष्ये भक्ति-ज्ञानादीत्युक्तिस्तु ज्ञानस्य आदिशब्दगृहीतप्रसादस्य च मोक्षवत् भक्तिप्रयो-जनत्वनिरासाय । अत एव टीकायां 'न च भगवज्ज्ञानं प्रयोजनम्' 'न च तत्प्रसादः प्रयोजनमि'ति तयोः पृथक्प्रयोजनत्वनिरासः । पृथगधिकरणारम्भ-प्रतिक्षेपस्तु न्यायसाम्यादेव सिद्ध इति भावः ॥

'सतो भव'न्यायाक्षरार्थः

अनेन न्यायमालायां **सतः** सादृश्यस्य **भवः** अभिव्यक्तिः साधनं विनैवेति न्यायस्य पूर्वपक्षोपपादकता द्रष्टव्या ॥

टीकायाः सिद्धान्तन्यायविवरणयोजकत्वम्

**व्यवस्थात्यलप्ताभव** इति **भवन्यायम्** एतदधिकरणसङ्गतत्वेन अध्याहारेण विवृण्वत् **अनादितः संसारस्यानिवृत्तत्वेन भावात्** इति वाक्यं

## शेषतात्पर्यचन्द्रिका

भाष्योक्तकक्ष्याक्षेपसमाधानाय प्रवृत्तमिति मन्वानोऽवतार्य व्याचष्टे **न च सापि स्वयमेव भवतीति**। अनेन संसारस्यानादित्वं प्रवाहत एव, अनिवृत्तत्वेनेति पदस्वारस्याय तर्कश्चात्राभिप्रेत इत्युक्तं भवति ॥

एतदधिकरणस्य 'भगवन्महिमोक्ति'त्वम्

नन्वत्र भक्तेः सफलत्वप्रतिपादनेन भक्तिमाहात्म्यमेव प्रतिपादितम्, न भगवत इति **भक्त्यर्थं भगवन्महिमोक्तिः**रिति रिक्तं वचः। प्रत्यधिकरणं तत्प्रतिपादनप्रयासश्च विफलः[1] स्यात्। उच्यते। अत्रापि सफलभक्तिविषयत्व-स्यार्थतः प्रतिपादनात्। टीकायामनुक्तिस्तु क्वाप्युक्तिबलेन शिष्यो ज्ञास्य-तीत्येव। अत एव वृद्धिनये **तदर्थतो निरूप्यत** इत्युक्तम् ॥

संक्षेपभाष्यस्य एतदधिकरणतात्पर्यसूचकत्वम्

अत्र **तद्भक्तितारतम्येन तारतम्यं विमुक्तिदमि**[2]ति संक्षेपभाष्ये तद्भक्त्यादिसाधनजातमेव सम्यगभिव्यक्तिरूपविमुक्तिदमिति योजनयैतदधि-करणतात्पर्यमुक्तं वेदितव्यम् ॥

एतदधिकरणसिद्धान्तफलम्

अत्र च सुषुप्तावस्थायाः विमुक्तिसाम्यं ब्रह्मैक्यापत्तिश्च नास्तीति फलितम् ॥

**इति अम्बुवदधिकरणम् ॥ ११ ॥**

---

[1] निष्फलः [2] विमुक्तिगमिति

॥ अथ वृद्धिह्रासाधिकरणम् (वृद्धिनयः) ॥ १२ ॥

## ॥ ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभय-सामञ्जस्यादेवम् ॐ ॥ २० ॥

तस्य च भक्तिज्ञानादेर्वृद्धिह्रासभाक्त्वं विद्यते । ब्रह्मादीनामुत्तमानां सर्वेषां भक्तत्वेऽन्तर्भावात् । एवं भक्त्यादिविशेषाङ्गीकारादेवेश्वरस्य ब्रह्मादीनन्यान्प्रति च सामञ्जस्यं भवति ॥

### तत्त्वप्रकाशिका

संगत्यादि

अत्र भगवत्प्राप्तिसाधनभक्त्यर्थं तस्य भक्त्यनुसारिफलदानसमर्थनादस्ति शास्त्रादिसङ्गतिः । भक्त्यनुसारिफलाभावे तत्करणानुपपत्तेः तदर्थतो निरूप्यते । प्रकृता भक्तिरेव विषयः । किं भक्तेऽप्येकप्रकारा वृद्धिह्रासवती वेति सन्देहः । उभयविधधर्मदर्शनं सन्देहबीजम् ॥

भक्तिरेकप्रकारेति पूर्वपक्षः

एकप्रकारैवेति पूर्वः पक्षः । तत्फलस्य मुक्तत्वानन्दित्वादेः सर्वेषु-साम्यात् । अन्यथा फलसाम्येऽपि साधनातिशयस्य वैयर्थ्यं केषाञ्चिदसम्यङ्-मुक्तिर्वा स्यात् । न चैवम् । अतो भक्तिरेकप्रकारैवेति ॥

फलतारतम्यात् भक्तितारतम्यमिति सिद्धान्तः

सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे वृद्धीति । अस्त्येव भक्त्यादेः साधनस्य साधकेषु वृद्धिह्रासवत्त्वम् । ब्रह्मादीनामपि भक्तत्वात्तेषाञ्चोत्तमफल-त्वादन्येषामल्पफलत्वादिति भावः । महदल्पफलत्वेऽपि ब्रह्मादीनामन्येषां

‘साधनस्योत्तमत्वेन साध्यश्चोत्तममाप्नुयुः ।
ब्रह्मादयः क्रमेणैव यथाऽऽनन्दश्रुतौ श्रुताः ॥’

इति ब्राह्मे ॥ २० ॥

कुतः ?

॥ ॐ दर्शनाच्च ॐ ॥ २१ ॥

‘अथात आनन्दस्य मीमांसा भवती’त्यारभ्य ब्रह्मपर्यन्तेषु सुखे विशेषदर्शनात् । चशब्दात्स्मृतिः—

‘यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ॥’इति ॥२१॥

---

तत्त्वप्रकाशिका

कुतो भक्तितारतम्यमित्यत आह **एवमिति** । यदि विषमफलानां ब्रह्मादीनामितरेषां च भक्तितारतम्यं स्यात्, तर्ह्येव विषमफलदातुर्भगवतो वैषम्यादिदोषाभावः स्यान्नतु समभक्तीनां फलवैषम्ये । अतः फलवैषम्यान्यथानुपपत्त्या भक्तेरपि वैषम्यमिति भावः । फलसाधनवैरूप्ये युक्तिविरोधमुक्त्वा स्मृतिविरोधञ्च दर्शयति **साधनस्येति** । आनन्दश्रुतिर्वक्ष्यमाणा ॥ २० ॥

उक्तार्थे प्रमाणम्

ननु भवेदेतद्यदि ब्रह्मादीनां फलतारतम्यं स्यात् । तदेव कुत इत्याक्षिपति **कुत इति** । एतत्परिहाराय सूत्रं पठित्वा व्याचष्टे **दर्शनाच्चेति** । अस्तु फलतारतम्यं, तथापि भक्तिसाम्यं किं न स्यात्, फलतारतम्यस्य भक्तीतरसाधनतारतम्येनापि संभवादित्यत आह **चशब्दादिति** । समुच्चितेति शेषः । अतो भक्तेः फलानुसारित्वाद्युक्ता सेति सिद्धम् ॥ २१ ॥

## शेषतात्पर्यचन्द्रिका

समर्थनपेटिका

# ॥ ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥ २० ॥

पेटिकानन्तरसंगती

यथा भक्तौ विफलत्वं प्रतिबन्धकम् एवं फलस्य भक्त्यननुसारित्वमपि । अतो भक्त्युत्पादप्रतिबन्धकतदननुसारित्वनिरसनेन फलस्य भक्त्यनुसारित्वसमर्थनात् पेटिकासङ्गतिः । भक्तिः पूर्वनयोक्तरीत्या सफलत्वात् संपादनीयाऽपि स्वस्वयोग्यतानुसारेण संपूर्णैव संपूर्णफलार्थिना संपादनीयेति वा, मोक्षाख्यं फलमपि पूर्वनयसिद्धं तारतम्योपेतमेवेति वा प्रतिपादनादनन्तरसङ्गतिः ॥

संशयः

सा किं भक्तिः स्वस्वयोग्यतानुसोरण वृद्धिह्रासवती संपादनीया उत एकरूपैवेति, तदर्थं भक्तेर्वृद्धिह्रासभाक्त्वे बाधकमस्ति न वेति चिन्तनीयम् ॥

ब्रह्मादीनां भक्तेष्वनन्तर्भावात् भक्तिरेकप्रकारेति प्रथमः पूर्वपक्षः

तत्राद्यः पूर्वः पक्षः—मनुष्यैरेकरूपैव भक्तिः संपादनीया, भक्तौ वृद्धिह्रासवत्त्वे प्रमाणाभावात् । किं च यदि भक्तिर्मनुष्येषु वृद्धिह्रासवती स्यात् तदा वक्तव्यं फले वृद्धिह्रासौ स्तो न वेति । नाद्यः । प्रमाणाभावात् । संसारनिवृत्तेरानन्दित्वस्य च सर्वेष्वेकप्रकारेणैवानुभवाच्च । न द्वितीयः ।

## शेषतात्पर्यचन्द्रिका

तत्फलं वृद्धभक्त्या साध्यते चेत् अल्पा भक्तिः वृद्धभक्तिसाध्यमोक्षजनने सामर्थ्याभावान्निष्फलैव स्यात् । ह्रसिष्ठभक्तिसाध्यत्वे च वृद्धभक्तिः तत्फलस्य अल्पभक्त्यैव सिद्धेः वृथाऽऽयासकरी स्यात् । न च ब्रह्मादिदेवेषु स्वयोग्यतानुसारिभक्तितारतम्यदर्शनात् मनुष्येष्वपि तथा स्यादिति वाच्यम् । मनुष्येषु भक्तेषु भक्तितारतम्यस्य भक्तेष्वनन्तर्गतब्रह्मादिभक्तितारतम्य-दृष्टान्तीकरणेन साधने ब्रह्मादिपदस्य तदीयमौक्तिकानन्दस्य च साधनापातात् । अतो वक्तव्यमेतत्, ब्रह्मादीनां पूज्यतया भजनीयत्वेन भक्तेष्वनन्तर्भावात् तद्दृष्टान्तेन न किंचिदपि साधनार्हमितीति ॥

अन्तर्भावेऽपि फलतारतम्यं साधनान्तरतारतम्यादिति द्वितीयः पूर्वपक्षः

अस्तु वा ब्रह्मादीनां भक्तेष्वन्तर्भावः । तथापि तेष्वपि न भक्तितार-तम्यमुररीक्रियते । फलतारतम्यं तु भक्त्यादीतरज्ञानादितारतम्येन भविष्यति । तथा च भक्तेषु देवेषु मनुष्येषु वा भक्तिरेकप्रकारैव, न वृद्धिह्रासवतीति—द्वितीयः ॥

वस्तुतः फलतारतम्यमपि नेति तृतीयः पूर्वपक्षः

वस्तुतस्तु,

**साधने वा फले वापि तारतम्यं न विद्यते ।**
**देवेषु वा मनुष्येषु युक्तिबाधादमानतः ॥**

युक्तिश्चात्र—देवापेक्षया मनुष्येषु न्यूना भक्तिः मौक्तिकानन्दं साधयति न वा ? नेति पक्षे मनुष्याणां मुक्त्यभावप्रसङ्गः । आद्ये देवेष्वपि

## शेषतात्पर्यचन्द्रिका

तत्समयैव भक्त्या मोक्षसिद्धेरुत्कृष्टभक्तिसंपादना विफला स्यादित्यादिः —तृतीयः ॥

उक्तपूर्वपक्षाणाम् आकरः

अत्राद्यः सौत्रान्तर्भावपदेन सूचितः। द्वितीयस्तु,

**यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे।**
**तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ॥**

इति चशब्दसूचितस्मृत्युदाहरणेन भाष्ये सूचितः। तृतीयस्तु **न्यायविवरणे** टीकायां चोक्तः ॥

उक्तपूर्वपक्षाणां भक्तिमात्रविषयत्वं प्रज्ञान्तरनयेन अगतार्थता च

अत्र यद्यपि **तस्य च भक्तिज्ञानादेः वृद्धिह्रासभाक्त्वं विद्यते** इति भाष्यात्, **न च मुक्तत्वादिगुणसाम्यात् ब्रह्मादीनां भक्त्यादिगुणसाम्यमिति** न्यायविवरणाच्च भक्तिज्ञानोपासनानामपि तारतम्यं निराकुर्वत्पूर्वपक्षः प्रतीयते। तथापि **यथा भक्तिविशेषोऽत्र** इत्यादिभक्तिमात्रविषयवचनोदाहरणात् तन्मात्रपूर्वपक्षो युक्तः। भाष्यविवरणयोः ज्ञानादिकीर्तनं तु दृष्टान्ताभिप्रायेण। अन्यथा **प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम्** इत्युपासनापादीयाधिकरणेनोपासनादेः तारतम्यसाधकेन गतार्थता स्यात्। न चोपासनाज्ञानयोरिव साध्यसाधनैकरूप्यन्यायस्येहापि प्रसरात् गतार्थताऽपरिहार इति वाच्यम्। यावत्साधनानां साध्यस्य चैकरूप्ये प्रमाणाभावाद्भक्तीतरज्ञानादितारतम्येन फलतारतम्योपपत्तेरिति इहोत्थानान्न गतार्थता। अनेन प्रज्ञान्तरनयस्य गतार्थतापरिहारस्तु तत्रैव भविष्यति ॥

## शेषतात्पर्यचन्द्रिका

आद्यः पूर्वपक्षो न युक्तः

सिद्धान्तस्तु—

ब्रह्मादीनां भक्तकोटावन्तर्भावात् स्मृतेस्तथा ।
सामञ्जस्यार्थमीशस्य भक्तौ वृद्ध्यादिरिष्यते ॥

यदि मनुष्यमात्रे भक्तितारतम्यं नेष्यते तदा ब्रह्मादावपि तन्न स्यात् । न च भजनीयत्वेन तेषां भक्तत्वाभावः । अस्मदादिभजनीयत्वेऽपि भगवद्भक्तत्वसंभवात् । अन्यथा भजनीयत्वाभावप्रसङ्गः । **पूजयेन्नान्यदेवता** इत्यादेः । यच्चात्र मनुष्येषु भक्तितारतम्ये न्यूनभक्तेर्निष्फलत्वमधिकभक्तेर्वैयर्थ्यं बाधकं तत् ब्रह्मादिदेवेषु तारतम्याङ्गीकारेऽपि समम् । यदि फलतारतम्याङ्गीकारेण बाधकोद्धरणं तत् प्रकृतेऽपि सममित्याद्यः पूर्वपक्षो न युक्तः ॥

नापि द्वितीयः पूर्वपक्षो युक्तः

साधनतारतम्याभावे फलतारतम्यं न स्यात् । तथा फलदातुरीश्वरस्य वैषम्यनैर्घृण्यप्राप्तेश्च । न च प्रज्ञान्तरनयसिद्धोपासनादितारतम्येन तत्प्रतीकारः । **यथा भक्तिविशेषोऽत्रेति** वचनविरोधात् ॥

ननु भक्तेरुपासनाङ्गत्वेन तत्साध्यापरोक्षतारतम्येनैव मोक्षे तारतम्यं युक्तम् । अन्तरङ्गत्वात् । ततश्च युक्तिविरुद्धं वचनमप्रमाणमिति चेदुच्यते । अपरोक्षज्ञानघटितमूर्तित्वाद्भक्तिरप्यन्तरङ्गैव । **भक्त्यर्थान्यखिलान्येव भक्तिर्मोक्षाय केवलेति** स्मरणात् । अत एव अम्बुनयोदाहृते,

## शेषतात्पर्यचन्द्रिका

**महत्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाभिधीयते ।**
**तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकम् ॥**

इति वचने स्नेहविशेषणबुद्धिरेव भक्तित्वेनोक्ता । अत एव **भक्तिर्मोक्षाय केवलेत्यस्य न नान्यः पन्था** इति श्रुतिविरोधः ॥

नन्वेवं तर्हि, **वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत्** इति वचने उपासनाङ्गबहिरङ्गभक्तेरेव प्रदिपाद्यतावगमात् तत्तारतम्यप्रतिपादनमेवेह सङ्गतम् । तत्तु फलतारतम्यस्योक्तरीत्या अपरोक्षज्ञानात्मकान्तरङ्गभक्तितारतम्येनैवोपपत्तेरशक्यमिति चेत्सत्यम् । विवक्षितान्तरङ्गभक्तितारतम्यस्यैव फलतारतम्यप्रयोजकत्वे साधिते तज्जातीयत्वादुपासनाङ्गभक्तितारतम्यस्यापि तत्सिद्धिः । अत एव साक्षिप्रत्यक्षस्य ज्ञानस्वरूपतत्प्रामाण्यग्राहकत्वेन सर्वोपजीव्यत्वेन नियतप्रामाण्यकत्वादिना च प्राबल्ये, अग्न्यनौष्ण्यानुमाने पक्षग्राहकत्वेनोपजीव्यतया चाक्षुषप्रत्यक्षप्राबल्ये, **'त्रिवृद्बहिष्पवमानम्,' 'आदित्यः प्रायणीयः पयसि चरुः' 'आश्ववालः**[1] **प्रस्तरः ऐक्षवी विधृती'**इत्यादौ वाक्यशेषानुगुणतया वैदिकप्रसिद्धेर्बलवत्त्वे च सिद्धे तज्जातीयत्वेन भेदग्राहिचाक्षुषप्रत्यक्षस्य ज्ञानाद्यग्राहिणोऽपि, पक्षाग्राहकस्यापि स्पार्शनप्रत्यक्षस्य, वाक्यशेषविधुरेष्वपि **'त्रिवृदग्निष्टुदग्निष्टोमः' 'सौर्यं चरुं निर्वपेदि'**त्यादिषु वैदिकप्रसिद्धेश्च बलीयस्त्वमाश्रितम् ॥

---

[1] अश्ववालः

### शेषतात्पर्यचन्द्रिका

तथा च भक्तेषूभयविधेषु भक्तितारतम्याभावे भक्तितारतम्यैकनियत-तारतम्योपेतमोक्षदातुरीशस्य वैषम्यनैर्घृण्यरूपासामञ्जस्यापरिहारान्न द्वितीयोऽपि पूर्वपक्षो युक्तः ॥

तृतीयोऽपि पूर्वपक्षोऽयुक्तः

तृतीयस्तु साधनफलयोरवैरूप्येण यद्यपि सम्भावितः । तथापि मुक्तौ फलतारतम्यप्रतिपादकेन **अथात आनन्दस्य मीमांसा भवति** इत्यादिकेन वचनेन विरुद्धः । न च—मुक्तत्वानन्दित्वादौ कश्चन विशेषोऽङ्गीकर्तुं न शक्यः। संसारनिवृत्तिरूपमुक्तत्वे तारतम्यायोगात् । न ह्यभावे कश्चन तरतमभावो दृष्टः । न च स्वरूपानन्दे विषयोत्कर्षापकर्षनिबन्धनस्तरतमभाव इति युक्तिविरोध इति—वाच्यम् । संसारनिवृत्तिरूपमुक्तित्वे तदयोगेऽपि विषयानधीनेऽपि स्वरूपानन्दे श्रुत्यैव तारतम्यप्रतिपादनेन उक्तयुक्तेराभासत्वात् ॥

न च श्रुतिः सांसारिकानन्दविषयिणी । व्यर्थत्वात् । ननु संसारि-ब्रह्मणोऽप्यानन्दः पूर्वोक्ताच्छतगुण एव । अत एव परिमितः । अत एव तत्र विरक्तेनापरिमितानन्दो मौक्तिक एव साधनीय इत्यत्र तात्पर्यान्न वैयर्थ्यमिति चेन्न । भगवत्साम्यापत्तेः । न च **परमं साम्यमुपैतीति** श्रुत्या तदिष्टमिति वाच्यम् । भगवतोऽनन्तकल्याणगुणाकरत्वेनादोषितया जीवानां चातथाभूतत्वात् तच्छेषतया मुक्ताववस्थानाङ्गीकारेण अपसिद्धान्तापातात् । लक्ष्मीपतित्वादेरपि परमसाम्यशब्दार्थत्वे जीवानामपि तदापत्तेः । तदतिरिक्तानामेव तदर्थत्वे तु लक्ष्मीपतित्वादिवत् अपरिमितानन्दादेरपि भगवदेक-निष्ठतया तेन साम्यायोगाच्च ॥

## शेषतात्पर्यचन्द्रिका

एतेन—देवत्वमनुष्यत्वपुंस्त्वस्त्रीत्वादीनां देहाद्युपाधिकृततया मुक्तौ देहाद्युपाधिनाशेन तन्निमित्तकदेवत्वादीनामपि नाशावश्यंभावात् ब्रह्मादिजीवानां साम्यमेव न्यायप्राप्तं, श्रुतिश्चात्रास्ति।[1] अत आनन्दश्रुतिः सांसारिकानन्दतारतम्यमनुवदतीति—परास्तम्। श्रोत्रियाकामहतत्वादेर्विरोधाच्च। ईर्ष्या[2]सूयादिदोषपरिहारश्चाग्रे करिष्यत इत्यलम् ॥

'वृद्धिह्रास' सूत्रार्थः सूत्रक्रमश्च

सूत्रार्थस्तु—**अम्बुवदग्रहणादि**त्युक्तायाः भक्तेर्वृद्धिह्रासभाक्त्वमङ्गीकार्यम्। ब्रह्मादीनामस्मदादीनां च भक्तत्वेऽन्तर्भावात्। एवमङ्गीकार एव उभयान् देवान् मनुष्यान् प्रति ईश्वरस्य वैषम्यनैर्घृण्यादिदोषाभावेन सामञ्जस्यं सम्यक्त्वं स्यात्। अन्यथाऽसामञ्जस्यं स्यादिति ॥

सूत्रक्रमस्तु—आद्ये स्वपरपक्षयोः साधकबाधकोद्भावनम्। द्वितीये साधकस्यासिद्धिपरिहारः बाधकोद्धारश्चेति ज्ञातव्यः ॥

अत्र अधिकरणरचनायां स्वैकदेशिभिः अद्वैतिनां मतभेदः

अत्र परेषां भाष्ये **न स्थानतोऽपी**त्यारभ्य **अरूपवदेव हि** इत्यन्तं सूत्रचतुष्कमेकमधिकरणं विधाय **प्रकाशवच्चावैयर्थ्य**मित्यारभ्य **दर्शनाच्च**[3] इत्यन्तं सूत्रसप्तकम् अधिकरणान्तरं विधाय एकादशापि सूत्राणि व्याख्येयानीति तेष्वेकदेशिनां मतमुपन्यस्य दूषयित्वा, एकादशापि सूत्राण्येकमधिकरणं विधाय स्वमतमुक्तम् ॥

---

[1] अत्र  [2] ईर्षा  [3] दर्शनादित्यन्तं

## शेषतात्पर्यचन्द्रिका

एकदेशिमते नस्थानेत्यादि प्रकाशवच्चेत्यादि च द्वे पृथगधिकरणे

तथा हि—अत्र केचिद्द्वे अधिकरणे कल्पयन्ति । प्रथमं तावत् किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्म उत प्रपञ्चवदनेकाकारं ब्रह्मेति सन्दिह्य प्रपञ्चवदनेकाकारं ब्रह्मेति पूर्वपक्षयित्वा प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्मेति सिद्धान्तितम् । एवं **न स्थानतोऽपी**त्यधिकरणे स्थिते प्रत्यस्तमिताशेषप्रपञ्चत्वे किं सल्लक्षणं प्रकाशलक्षणं च ब्रह्म, उत सल्लक्षणमेव, उत प्रकाशलक्षणमेवेति सन्दिह्य सल्लक्षणं प्रकाशलक्षणं च ब्रह्मेति—**प्रकाशवच्चावैयर्थ्यम्** । चकारात्सच्च, ब्रह्मणि सच्छ्रुतेरवैयर्थ्यादिति—आद्यं पूर्वपक्षपरतया व्याख्याय, प्रकाशमात्रं ब्रह्म, न हि सत्त्वं नाम प्रकाशरूपादन्यत् , यथा सर्वगन्धत्वादयः, अपि तु प्रकाशमेव सदिति नोभयरूपत्वं ब्रह्मण इति **आह च तन्मात्रमि**त्यादिबहुभिस्सूत्रैः सिद्धान्तो बोद्धव्य इति ॥

एतन्मते आद्यनयेन द्वितीयस्य गतार्थतेति शाङ्करभाष्यानुवादः

तदेतदयुक्तम् । सत्ताप्रकाशयोरेकत्वमङ्गीकृत्यात्र पूर्वः पक्षः प्रवर्तते, उत भेदमङ्गीकृत्य ? आद्ये उभयलक्षणत्वेन पूर्वपक्षायोगः । द्वितीये तु **न स्थानतोऽपी**त्यनेनैवैकाकारतोक्त्या न पुनरत्र पूर्वपक्षोदयः । सत्ताप्रकाशयोर्वास्तवभेदाभावेऽपि कल्पितभेदमादाय पूर्वपक्षः संभवतीति चेन्न । एकाधिकरणत्वे संभवति कल्पितं भेदमादाय दुर्बलं पूर्वपक्षं रचयित्वा सूत्रस्य तत्परत्वेन व्याख्यानायोगात् ॥

स्वमते तु प्रकाशवच्चेत्यादि साकारब्रह्मश्रुतिगतिप्रदर्शनार्थमिति भाष्ये प्रयोजनोक्तिः

प्रयोजनान्तरादर्शनात् दुर्बलपूर्वपक्षपरत्वेनापि व्याख्यायत इति चेन्न । आकारवदनाकारप्रतिपादनेन ब्रह्मविषयासु श्रुतिषु विप्रतिपन्नास्वपि अनाकार-

शेषतात्पर्यचन्द्रिका

मेव ब्रह्मेति कथम् **अरूपवदेव हि तत्प्रधानत्वादि**त्यनेनोक्तमित्येतच्छङ्का-निरासाय आकारवद्ब्रह्मप्रतिपादकश्रुतिगतिप्रदर्शनार्थत्वेनार्थवत्त्वोपपत्तेः ॥

**युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च सहस्राणि च[1] बहूनि चानन्तानि च** इत्येवमाद्या आकारवद्ब्रह्मपराः श्रुतयः **तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमि**त्युपसंहारबलेन प्रपञ्चप्रविलयादि-मुखेन अनाकारब्रह्मप्रतिपत्त्यर्था एव, न पुनराकारवद्ब्रह्मपरा एवेति श्रुति-द्वैराश्यासम्भवेन शङ्काया एव ह्यनुदयः, येन तन्निरासाय प्रकाशसूत्रसार्थक्यं स्यादिति चेत्, **तदेतद्ब्रह्मापूर्वमनपरमि**त्युपसंह्रियमाणानां निष्प्रपञ्च-ब्रह्मप्रकरणपठितानां **युक्ता ह्यस्य हरय** इत्यादीनां प्रपञ्चविलयमुखेनैकवाक्यता-सम्पादनेऽपि, **स क्रतुं कुर्वीत** इत्युपासनाधिकारे पठितानां **मनोमयः प्राणशरीरो भारूप** इत्येवमादीनां **स क्रतुमि**त्यादिप्रकृतवाक्येनैकवाक्यता-पन्नानां प्रपञ्चविलयमुखेन **तदेतद्ब्रह्मापूर्वमनपरमि**त्यादिव्यवहितेन एक-वाक्यताऽसंभवेन प्रविलयार्थत्वमन्याय्यमिति प्रपञ्चप्रविलयार्थ एको वेदराशिः, अतदर्थ एको वेदराशिरिति द्वैराश्यं सिद्धमिति युक्तैव शङ्का। अथापि सर्वेषां प्रविलयार्थत्वमङ्गीकृत्य द्वैराश्यानङ्गीकारे **अरूपवदेव हि तत्प्रधानत्वात्** इति सूत्रमनवकाशं स्यात्। तदा हि तस्यावकाशः यदि काश्चिच्छ्रुतय उपासना-परतया रूपमाचक्षीरन्, काश्चिन्नीरूपब्रह्मप्रतिपादनपराः रूपाभावमाचक्षीरन्। सर्वासां तु प्रविलयार्थत्वेन नीरूपब्रह्मप्रतिपादनार्थत्वे **तत्प्रधानत्वा**दित्युक्त-हेतुर्न स्यात्। तस्मादेवंजातीयकैर्बहुभिर्दोषैरेकराश्यायोगेन शङ्कोदयसंभवात्

[1] सहस्राणि बहूनि

## शेषतात्पर्यचन्द्रिका

**प्रकाशवच्चे**त्यादेस्तन्निराकरणार्थत्वोपपत्तेरयुक्तमधिकरणान्तरं व्याख्यातमित्येकादशापि सूत्राण्येकमेवाधिकरणम् ॥

एतन्मते शाङ्करभाष्यभामत्युक्तमधिकरणम्

तथाहि **सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस** इत्याद्याः सविशेषब्रह्मविषयाः श्रुतयः, **अस्थूलमनण्वह्रस्वमदीर्घ**मित्याद्याश्च निर्विशेषब्रह्मविषयाः श्रुतयः श्रूयन्ते। किमासु श्रुतिषु उभयलिङ्गं ब्रह्म प्रतिपत्तव्यमुतान्यतरलिङ्गम्, अन्यतरलिङ्गत्वे सविशेषमुत निर्विशेषमिति चिन्तनीयम्। अत्रोभयलिङ्गश्रवणादुभयलिङ्गत्वं ब्रह्मणः प्राप्तम्। तत्रापि सविशेषत्वनिर्विशेषत्वयोर्विरोधात् एकं स्वाभाविकमन्यदौपाधिकमिति विवेक्तव्यम्। न चैवमौपाधिकस्यापारमार्थिकत्वं नियतमित्येकरूपत्वमेव स्वाभाविकमिति प्राप्तमिति वाच्यम्। दोषाद्युपाधिकृतस्य चक्षुरादिनिष्ठस्याप्रमाजनकत्वात्मकस्य अप्रामाण्यस्य विपर्ययज्ञानलक्षणार्थक्रियाकारित्वे पारमार्थिकत्वावश्यंभावेनौपाधिकस्यापारमार्थिकत्वनियमासिद्धेः। तस्मादुभयलिङ्गशास्त्रप्रामाण्यात् ब्रह्मण उभयरूपता पारमार्थिकीति प्राप्ते उच्यते—न स्थानतोऽपि उपाधितोऽपि, परस्य ब्रह्मणः, उभयलिङ्गत्वसम्भवः। उपाधिजनितरूपस्यापि पारमार्थिकत्वे ब्रह्मणःपरीणामापातात्। पारिशेष्यात् स्फटिकमणौ स्वच्छत्वं पारमार्थिकं लाक्षारसावसेकोपाधिजनितस्यारुणिम्नोऽध्यस्तत्वेनापारमार्थिकत्वं यथा तथा पृथिव्यादिस्थानविशेषोपाधिनिमित्तकस्य रूपस्य ब्रह्मण्यध्यस्तत्वेन अपारमर्थिकत्वमेव न्याय्यम्। तस्मान्निर्विशेषमेकरूपं चैतन्यैकरसं सद्ब्रह्म परमार्थतः। विशेषास्तु सर्वगन्धत्ववामनीत्वादय उपाधिवशादध्यस्ता इति सिद्धमिति ॥

## शेषतात्पर्यचन्द्रिका

तदनन्यत्वनयेन गतार्थमिति तन्निरासः

अत्र वदामः—मोहावस्थापरीक्षानन्तरं निर्विशेषब्रह्मस्वरूपप्रतिपादने संगत्यभावादयुक्तमधिकरणम्। येन ब्रह्मणा जीवः सुषुप्त्यादिरूपोपाध्युपशमात्संपद्यते तस्येदानीं स्वरूपं निरूप्यत इति यद्यपि भाष्ये संगतिरुक्ता। तथापि **तदनन्यत्वमारम्भणशब्दादिभ्य** इत्यादावेव तन्निरूपितमिति नेह पुनर्निरूपणीयमस्ति। अत्र यद्यपि 'सप्रपञ्चलिङ्गानां बह्वीनां श्रुतीनां दर्शनाद्भवति पुनर्विचिकित्से'ति भामत्यां पुनरारम्भप्रयोजकमभिहितम्। तथापि सप्रपञ्चलिङ्गश्रुतिगतिप्रदर्शनपरं **प्रकाशवच्चावैयर्थ्य**मित्याद्येव सूत्रजातं युक्तम्। न तत्प्राचीनं **न स्थानत** इत्यादि। अनुवादकत्वं तु बहूनां सूत्राणामयुक्तमदृष्टं च। आरम्भणशब्दादिना ब्रह्मेतरस्य सर्वस्य मिथ्यात्वे सिद्धे श्रुतिसहस्रदर्शनेनापि पुनर्विचिकित्सानुपपत्तिश्च॥

तत्त्वज्ञानस्य मिथ्यात्वेन पुरुषप्रयत्नाविषयत्वेन च अपवर्गानुपयोगित्वेन विचारवैयर्थ्यम्

प्रयोजनशून्यश्चायं विचारः। न हि सर्वोऽपि प्रपञ्चो मिथ्या अत एव ब्रह्म निर्विशेषमिति निश्चयवतः पुंसः स्वर्गादिः प्रयोजनं प्रतिभाति। अत एव निष्प्रपञ्चब्रह्मणि तत्त्वज्ञानमपवर्गोपयोगीति प्रयोजनवानयं विचार इति वाचस्पत्युक्तं निरस्तम्। अपवर्गोऽपि यदि ब्रह्मैव तदा प्रयोजनत्वासिद्धिः। सिद्धत्वात्। यथा सिद्धरूपस्यापि दारुणो यागस्य च छिदिक्रियाद्वारा कर्तृव्यापारद्वारा च परशुदध्यादिसाध्यत्वं तथा सिद्धरूपस्यापि ब्रह्मणः तत्त्वज्ञानरूपक्रियाद्वारा साध्यत्वमपि संभवतीती चेन्न। तत्र दारुपरशुदधियागादेः तत्सम्बन्धस्य च व्यावहारिकत्वेन साध्यत्वादिसंभवेऽपि कर्तृव्यापारस्य द्वारभूतस्य

शेषतात्पर्यचन्द्रिका

ज्ञानस्य तत्सम्बन्धस्य चाध्यस्तत्वेन तद्विषनसत्ताकपारमार्थिकसाध्यत्वानुपपत्तेः। आध्यासिककर्तृक्रियासम्बन्धादिनिबन्धनसाध्यत्वस्याप्याध्यासिकत्वे तद्घटित-प्रयोजनस्यापि तदापत्त्या आध्यासिकप्रयोजनलिप्सया आस्तिकस्य प्रवृत्त्यनु-पपत्तेश्च। न हि ज्ञानब्रह्मणोः विषयविषयिभावाख्यः सम्बन्धोऽस्ति। आध्या-सिकसम्बन्धस्यातन्त्रत्वापातात्। कर्तृकर्मभावविरोधेन त्वयानङ्गीकाराच्च। किं च यद्द्वारा सिद्धस्यापि ब्रह्मणः साध्यत्वं तदेव तत्त्वज्ञानं ब्रह्मैव, उता-तो भिन्नमिति वक्तव्यम्। आद्ये पुनस्तदवस्थैव सानुपपत्तिः। इदंत्वाकारेण निश्चितस्यापि शुक्तित्वाद्याकारेणानिश्चितत्ववत्, यागस्य करणत्वाद्याकारेण सिद्धत्वेऽपि असाधितस्य करणत्वानुपपत्त्या क्रियात्वाद्याकारान्तरेण साध्य-त्ववच्च ब्रह्मत्वाकारेण सिद्धत्वेऽपि तत्त्वज्ञानविषयत्वाकारेण साध्यत्वमपि युक्तमिति चेन्न। तत्र शुक्तित्वक्रियात्वाद्याकारस्येवेहाकारस्यानङ्गीकारात्। द्वितीये तु ज्ञानत्वानुपपत्तिः। तस्यापि प्रपञ्चान्तर्गतत्वात्तन्निबन्धनसाध्यत्व-मपि मिथ्यैवेति पूर्वोक्तानुपपत्त्यपरिहारश्च॥

एतेन पुरुषप्रयत्नसाध्याज्ञाननिवृत्तिद्वारा, ब्रह्मप्राप्तीच्छाद्वारा वा ब्रह्मणः साध्यत्वेन प्रयोजनत्वं युक्तमिति निरस्तम्। ज्ञानेच्छयोरविधेयत्वेन पुरुषप्रयत्नसाध्यत्वानुपपत्तेश्च। अब्रह्मत्वपक्षे त्वपवर्गस्य प्रपञ्चान्तर्भावेन आरम्भणाधिकरणन्यायेन मिथ्यात्वस्य स्थितत्वात् पुनः प्रयोजनत्वानु-पपत्तिः। न हि मिथ्याभूतमपवर्गमुद्दिश्य[1] प्रेक्षावान् प्रवर्तते॥

[1] भूतमेवमप

## शेषतात्पर्यचन्द्रिका

किं च निष्प्रपञ्चब्रह्मणः तत्त्वज्ञानमपवर्गोपयोगीति वदन् प्रष्टव्यः—तत्त्वज्ञानं जन्यमजन्य वेति। अन्त्ये तदर्थं प्रवृत्त्यनुपपत्तिः। आद्ये न तच्चक्षुषा जायते। रूपाद्यभावात् सन्निकर्षाभावाच्च। स च भवन् ब्रह्मचक्षुषोः द्रव्यत्वेन संयोगो भवेत्। स च नेष्टः। ब्रह्मणः त्वन्मते प्रतियोगित्वधर्मित्वादेर्विशेषस्य अनङ्गीकारात्। अङ्गीकारे वा ब्रह्मणः सप्रपञ्चत्वापत्तिः। वस्तुतस्तु ब्रह्मणो गुणाश्रयत्वाभावेन द्रव्यत्वाभावात् न संयोगः सन्निकर्षः। अत एव न श्रोत्रेण निर्विशेषब्रह्मतत्त्वज्ञानं शब्दादिष्विवोत्पत्तुमर्हति। ब्रह्मण आकाशं प्रति गुणत्वाभावात्। तद्गतजातित्वाभावाच्च। गुणत्वे अस्वातन्त्र्याद्यापत्तिः। जातित्वे च व्यक्तिसापेक्षप्रतीतिकत्वापत्तिश्च। अत एव न स्पर्शेन तज्ज्ञानम्। स्पार्शनप्रत्यक्षत्वप्रयोजकमहत्त्वसमानाधिकरणोद्भूतस्पर्शादीनां निर्गुणे ब्रह्मण्यनुपपत्तेः। एवं न घ्राणादिभिरपि। तस्मान्न प्रत्यक्षेण तज्ज्ञानम्॥

नाप्यनुमानेन। तद्धि व्याप्त्या स्वोचितदेशवृत्तित्वेन च पक्षे साध्यसत्त्वमावेदयति। तथा च 'क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत्' 'ब्रह्म अस्ति तथा श्रुत्युक्तत्वात् धर्मादिवत्' इत्यादिषु ब्रह्मपक्षसाध्यकेषु अनुमानेषु निर्धर्मके ब्रह्मणि व्याप्तिनिरूपकत्वस्य हेतुसत्त्वस्य क्षित्यादिनेष्टकर्तृसम्बन्धप्रतियोगित्वादेश्च धर्मस्यायोगात्। आरोपितेन धर्मेण प्रमोत्पादायोगात्॥

अत एव नापि शब्देन। स हि तत्प्रतिपाद्यसम्बन्धज्ञानपूर्वकं प्रतिपाद्यमवगमयति। ततश्चेह प्रतिपाद्यस्य ब्रह्मणः शक्तिलक्षणान्यतररूपसम्बन्धानुपपत्तेः। शक्तिलक्षणयोः स्वावच्छेदकधर्मसापेक्षत्वाच्च। अन्यथा तयोराकस्मिकत्वापातः। ननु 'शाखाग्रं चन्द्रमाः', 'गच्छ गच्छसि चेत्कान्त' इत्यादौ

## शेषतात्पर्यचन्द्रिका

चन्द्रगमनाभावयोः शाखाग्रपदगच्छतिभ्यां सम्बन्धाभावेऽपि शब्दात् प्रतीतिर्दृश्यते । मैवम् । शाखाग्रोर्ध्वदेशविशेषसम्बन्धद्वारा चन्द्रमसि शाखाग्रपदसम्बन्धस्य गमनतदभावयोर्व्यञ्जकव्यङ्ग्यभावसम्बन्धद्वारा गमनाभावे गमिसम्बन्धस्यापि सद्भावात् । इहापि **मनोमयः प्राणशरीरो भारूप** इत्यादौ मनोमयादिशब्दवाच्यसविशेषब्रह्मद्वारकसम्बन्धस्य निर्विशेषे ब्रह्मणि मनोमयादिशब्देन विद्यमानत्वाददोषः ; यथोक्तम्—

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥

इति चेन्न । सम्बन्धस्यापि धर्मत्वेन निर्धर्मके ब्रह्मणि तदनुपपत्तेरेवोच्यमानत्वात् । आध्यासिकस्याङ्गीकारे तज्जन्यज्ञानस्य भ्रमत्वापत्तिः । अध्यासस्य च अनध्यस्तप्रधानसादृश्यादिधर्मसापेक्षत्वेन पुनर्निर्धर्मकत्वव्याघातः । अन्यथानवस्थानात् ॥

### तत्त्वज्ञानस्य भ्रमप्रमाबहिर्भूतत्वेन उक्तदोषः ; तस्य भ्रमत्वे मुमुक्षुप्रवृत्त्ययोगः श्रवणादिवैयर्थ्यं च

किञ्चेदं निर्विशेषतत्त्वज्ञानं प्रमा स्यादुत भ्रमः ? नाद्यः, विशेष्यनिष्ठधर्मप्रकारत्वात्मकत्वात्प्रमात्वस्य विशेष्ये ब्रह्मणि धर्माभावेनायोगात् । वेदान्तजन्यचरमवृत्तेः निष्प्रकारकत्वाच्च । अत एव न द्वितीयः । विशेष्यावृत्तिधर्मप्रकारत्वगर्भत्वाद्[1]भ्रमात्वस्य । ब्रह्मज्ञानाय मुमुक्षुप्रवृत्त्यनुपपत्तेश्च । प्रवृत्तस्य च

---

1 कत्व

## शेषतात्पर्यचन्द्रिका

ब्रह्मत्वापत्तिरूपापवर्गलाभो न स्यात्। मणिप्रभायां मणिबुद्ध्या प्रवृत्तस्य मणिलाभवत् भविष्यतीति चेत् तर्हि तद्वदेव शुक्तिकायां रजतबुद्ध्या प्रवृत्तस्य रजतलाभोऽपि किं न स्यात्? ननु मणिलाभजनकतावच्छेदकं न भ्रान्तित्वम्। येनोक्तदोषः स्यात्। किन्तु मणिलाभत्वेन मण्यव्यभिचरितज्ञानत्वेन विशेषतः कार्यकारणभाव इति चेत् कथं तथा ब्रह्मज्ञानभूतभ्रान्त्या ब्रह्मरूपलाभो भविष्यति? मण्यव्यभिचरितप्रभाज्ञानात् यथा मणिप्राप्तिः तथा निर्विशेषब्रह्माव्यभिचरितज्ञानान्निर्विशेषब्रह्मप्राप्तिर्भविष्यति। मैवम्। निर्विशेषे व्यापकत्वरूपधर्मस्य त्वयानङ्गीकारात्॥

घटादिज्ञानस्यापि निर्विशेषब्रह्माव्यभिचरितवस्तुविषयकत्वेन ब्रह्मज्ञानत्वापातेन घटज्ञानादपि निर्विशेषब्रह्मप्राप्त्यापत्त्या श्रवणादिविधिवैयर्थ्यापाताच्च॥

सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते॥

इति वदतामस्माकं घटादिज्ञानस्यापि ज्ञानत्वात् ब्रह्मज्ञानत्वापादनं नानिष्टम्, परन्तु अयानगमनादिविधिबलात् अयानगमनादिनियमविशिष्टस्यैव सेतुदर्शनस्य ब्रह्महत्यादिनिवर्तकत्वमिव श्रवणादिविधिबलात् श्रवणादिविशिष्टस्यैव ज्ञानस्य ब्रह्मप्राप्तिसाधनत्वं कल्प्यत इति चेत् तर्हि श्रवणादेः प्रयाजादिवदारादुपकारकत्वप्राप्त्या अज्ञाननिवृत्त्यादिरूपदृष्टार्थत्वं न स्यात् साक्षाद्ब्रह्मसाक्षात्कारजनकत्वेन श्रवणस्याङ्गित्वोक्तिश्च न स्यात्॥

## शेषतात्पर्यचन्द्रिका

तस्मान्निर्विशेषतत्त्वज्ञानमपवर्गोपयोगीति रिक्तं वचः ॥

निर्विशेषब्रह्माप्रसिद्ध्या संशयायोगः

अत एवोक्तरीत्या प्रत्यक्षादिप्रमाणपथातीतस्य निर्विशेषस्य ब्रह्मणः गगनकुसुमायमानत्वेन तत्कोटिकसंशयोऽनुपपन्नः ॥

पूर्वोत्तरप्रमाणविरुद्धश्रवणमात्रस्य पूर्वपक्षप्रापकत्वायोगः

अत एवोभयलिङ्गश्रवणात् उभयरूपत्वं ब्रह्मण इति पूर्वपक्षोऽप्ययुक्तः। यतो न यथाकथञ्चिच्छ्रवणमात्रं विवक्षितार्थप्रापकं, तथा सति **यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वा तमभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवम्** इत्यत्र ब्राह्मणादीनामवेष्टौ प्राप्तानां मध्ये निधानविशेषं प्रति यदिशब्दवशेन निमित्तत्वश्रवणात् ब्राह्मणादीनां श्रवणानि अप्राप्तप्रापकाणि न स्युः। **यदि रथन्तरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् गृह्णीयात्। यदि बृहत्सामा, शुक्राग्रान्।** इत्यत्र बहुव्रीहिसमासेन रथन्तरसामशब्दश्रवणमात्रेण रथन्तरसामविशिष्टस्य सामान्तरशून्यस्य क्रतोः प्रतीतेः प्रकृतज्योतिष्टोमस्य च गायत्रादिसामान्तरविशिष्टत्वेन तस्यैवेह निमित्तत्वेन कीर्तनानुपपत्तेः यागान्तरमेव स्यादित्यापत्त्या **दध्ना जुहोती**त्यादिवत् विशेषणपरत्वात् रथन्तरसाम्न एव निमित्तत्वम् तच्च ज्योतिष्टोमेऽप्यस्तीति न यागान्तरमिति निर्णयोऽपि न स्यादिति अवेष्ट्यधिकरणरथन्तरसामाद्यधिकरणविरोधः स्यात्। किन्तु पूर्वेणोत्तरेण प्रमाणान्तरेणोपपत्त्या चाविरुद्धं श्रवणमेव ॥

## शेषतात्पर्यचन्द्रिका

उभयलिङ्गश्रवणस्य अभावधर्मश्रुतिविरोधः

न चात्र तथास्ति । **अस्थूलमनण्वह्रस्वमदीर्घमि**त्यादिवाक्येषु स्थौल्याद्यभावः प्रतीयते । तत्र स्थौल्याद्यभावस्यैव विशेषस्य प्राप्त्या निर्विशेषब्रह्मश्रवणे स्वव्याहतिरेव स्यात् ॥

निर्विशेषत्वं न धर्ममात्रशून्यत्वं, किन्तर्हि भावरूपधर्मराहित्यमिति चेत् कुत एवं कल्प्यत इति वक्तव्यम् । स्वव्याघातादिति चेत् '**सर्वकर्मा सर्वकामः सर्वगन्धः**' '**अणोरणीयान् महतो महीयान्**' इत्यादिवचनान्तरभीरुणा प्राकृतस्थौल्यादिराहित्यं कुतो न कल्प्यम्? स्वव्याघातवद्वचनान्तरव्याघातस्यापि परिहरणीयत्वात् ॥

भावधर्मप्रापकश्रुतियुक्तिभ्यामपि विरोधः

**दिव्यो ह्यमूर्तः पुरुषः** इत्यादौ दिव्यत्वादिरूपभावधर्मश्रवणेन व्याघातानिस्ताराच्च । स्थौल्याद्यभावस्यापि तत्तद्धर्मिस्वरूपत्वेन ब्रह्मगतस्य ब्रह्मस्वरूपत्वावश्यंभावेनाभावत्वासिद्धेश्च । ब्रह्मणोऽपि भावत्वं नास्तीति चेन्न । **अस्तीत्येवोपलब्धव्यः** इत्यादौ भावत्वस्यैव प्रतीतेः । प्रतियोगिप्रतीतिनिरपेक्षप्रतीतिकत्वानुपपत्तेश्च । **दिव्यो ह्यमूर्तः पुरुषः** इत्यादौ पुरुषत्वश्रवणविरोधाच्च । न हि पुरुषत्वमभावत्वसमानाधिकरणं दृष्टम् । अपुरुषव्यावृत्तिरेव तत्रार्थ इति चेत्, अत एव पुरुषत्वस्य भावधर्मस्य प्राप्तिः । न हि व्यावृत्तिः व्यावर्तकधर्ममपहाय भवितुमर्हति । आकस्मिकत्वापत्तेः । स्थाण्वादौ तदापत्तेश्च । **अस्थूलमि**त्यादौ स्थूलव्यावृत्तिरेव बोध्यत इति स्थौल्याद्यभावस्यासिद्ध्या निर्धर्मकत्वासिद्धेश्च ॥

## शेषतात्पर्यचन्द्रिका

विमतं सूक्ष्मं महत् दीर्घञ्च अस्थूलत्वात् अह्रस्वत्वाच्चेत्याद्युपपत्ति-विरोधश्च । न चाप्रयोजकत्वम् । न ह्यस्थूलाद्यात्मकं सूक्ष्माद्यनात्मकं दृष्टम् । शशविषाणं तथा दृश्यत इति चेत्, किं ततः ? सत्स्वरूपं तु न तथा दृष्टम् । ब्रह्म तु सत्स्वरूपमभ्युपेयते । अन्यथा शून्यवादापातात् ॥

औपाधिकधर्मसत्यत्वे ब्रह्मणः परिणामापत्तिरिति सिद्धान्तभामतीपरीक्षा

अत एव सिद्धान्तोऽप्ययुक्तः । निर्विशेषत्वं स्वाभाविकं सविशेषत्वमौपाधिकमित्युभयात्मकत्वस्वीकारे बाधकाभावाच्च । एतेनौपाधिकस्य सत्यत्वे चूतादिफलानां रूपविशेषं प्रति परिणाम इव रूपविशेषं प्रति ब्रह्मणः परिणामापत्त्या सविशेषत्वं स्फटिके लौहित्यमिव ब्रह्मण्यध्यस्तमिति निर्विशेषमेव प्राप्तमिति वाचस्पत्युक्तं निरस्तम् । लाक्षारसावसेकाद्युपाधिजनितस्य लौहित्यस्य पाकजरूपादिवत्सत्यत्वेन दृष्टान्तासिद्धेः । अत एव नायं स्फटिको लोहित इति न कश्चिदपि प्रत्येति । न च तथात्वे ब्रह्मणः परिणामापत्तिः । अविद्याचित्संबन्धो यथाविद्यापरिणामोऽप्यपरिणामस्वभावे वर्तते सत्य एव तथा रूपादिविशेषोऽप्यविद्याधीनो ब्रह्मणि वर्तताम् । मनःपरिणामस्य सुखदुःखादेः जयादेश्च राजादौ संबन्धान्तरेण सत्यस्यैवोपलम्भात् । किञ्च निर्विशेषत्वे ब्रह्मणः परिणामापत्तिः कुतो न स्यात् ? निर्विशेषत्वमभावरूपं न परिणाममपेक्षत इति यदि तदा सविशेषत्वमपि रूपरसगन्धादिधर्मजातमेव नित्यगतं परमाणुरूपादिवदनादिनित्यमेव न परिणाममपेक्षत इति साम्यम् ॥

## शेषतात्पर्यचन्द्रिका

सगुणविद्यापि ब्रह्मैक्यपरेति भामतीपरीक्षा

एतेन — **यश्चायमस्यां पृथिव्यां तेजोमय** इत्यादिसगुणविद्यायामेव निर्विशेषत्वोपयुक्तं ब्रह्मैकत्वं प्रतिपाद्यते। यद्यपि पृथिव्यादिस्थानभेदेन ब्रह्मानेकत्वमपि प्रतिपाद्यते। तथाप्येकत्वानेकत्वयोरेकस्मिन्नसम्भवात् उभयत्रास्याः श्रुतेः पर्यवसानं न युक्तमित्यनयोरेव परस्पराङ्गाङ्गिभावं परिकल्प्याङ्गिनि पर्यवसानमुचितम्। अन्यथा वाक्यस्यैककण्ठ्यासिद्धेः। तत्रापि प्रमाणान्तरसिद्धस्य अनेकत्वस्यानुवादमङ्गीकृत्येन्द्रियाद्यविषयमेकत्वं प्रतिपादयतीत्येव वक्तव्यम्। ततश्च सगुणविद्यायामेकत्वाङ्गत्वेनैवानेकत्वप्रतिपादनमित्येकत्वे तात्पर्यं निश्चितम्। तथा च सगुणविद्याया एवैकत्वप्रतिपादने तात्पर्यं भजमानायाः सर्वासामपि श्रुतीनां निर्विशेषे तात्पर्यमवगम्यत इति — **वाचस्पत्युक्तमयुक्तम्** ॥

तत्रैव ह्यङ्गाङ्गिभावो दृष्टो यत्र न विरोधः। ययोस्तु दहनतुहिनयोरिव विरोधः तत्र कथमङ्गाङ्गिभावः? अन्यथा सृष्टिसंहारकर्त्रोरप्यङ्गाङ्गिभावाश्रयणेन, जगत्प्रवृत्त्यनुपपत्तेः तयोरेककर्तृकत्वाश्रयणमयुक्तं स्यात्। इह चैकत्वानेकत्वयोर्विरोधः स्फुट एव। ब्रह्मणो धर्मिण एव शब्दैकसमधिगम्यत्वाश्रयणेन तद्धर्मस्यैकत्वस्येवानेकत्वस्याप्यैन्द्रियकत्वाद्यनुपपत्त्या विनिगमनहेतोरभावाच्च। किञ्च रूपाण्यनेकान्यपि एकमिति प्रतिपादनमिव एकमपि रूपमनेकमेवेति प्रतिपादनसंभवेनानेकत्वमेवाङ्गि स्यात्। समावेव चात्र विरोधतत्परिहारावपि। श्रूयते च '**एकं रूपं बहुधा यः करोति**' '**रूपं रूपं प्रतिरूपो बभूव**' इति ॥

## शेषतात्पर्यचन्द्रिका

मनसैवेदमित्यादिश्रुतिर्भेदनिन्दापरेति भाष्यपरीक्षा

यदत्रोक्तं—

**मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।।**

इति भेदं निन्दित्वा,

**भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म चैकम् ।**

इति समस्तस्य भोग्यभोक्तृनियोज्यनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावत्वाभिधानान्निर्विशेषे ब्रह्मणि श्रुतीनां तात्पर्यं युक्तमिति—तन्न । किमत्र भेदमात्रं निन्द्यते, उत ब्रह्मभेदः? नाद्यः । भेदाभेदयोः भेदस्यापि निन्दितत्वेन अभेदस्यापि निन्दायाः, स्तूयमानाभेदाभिन्नत्वात् भेदस्यापि प्रशंसायाश्चापत्त्या स्वव्याघातापातात् । न द्वितीयः । ब्रह्मभेदस्य निन्दितत्वेऽपि वियदादिभेदस्यानिषेधात् । भोक्तृभोग्यनियन्तृलक्षणप्रपञ्चस्य ब्रह्मणैक्योक्त्या तत्प्रतियोगिभेदनिन्दनेऽपि तदतिरिक्तनित्यत्वात्मत्वब्रह्मत्वादिधर्मजातप्रतियोगिकभेदानिन्दनात् । तन्निन्दने वा कम्बुग्रीवादिभिः स्वरूपभूतैर्धर्मैर्घटादेः सविशेषत्वमिव स्वरूपभूतैरेवधर्मैः सविशेषत्वोपपत्तेश्च । श्रुतयस्तु सविशेषत्वाविरोधेनैवान्यत्र सम्यग्व्याख्याताः ।।

सगुणविद्याया उपासनापरत्वेन सावकाशतेति भाष्यपरीक्षा

यदप्यत्रोक्तं—भाष्ये यथा सौरः चान्द्रमसो वा प्रकाशो वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसम्बन्धात्तेष्वृजुवक्रादिभावं प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते एवं ब्रह्मापि पृथिव्याद्युपाधिसंबन्धात्तदाकारतामिव

शेषतात्पर्यचन्द्रिका

प्रतिपद्यते । तदाकारालम्बनो ब्रह्मणः आरोपितविशेषोपदेशः **सर्वकर्मा सर्वकाम** इत्यादिरुपासनार्थो न विरुद्ध्यत इति सगुणविद्यायाः सावकाशत्वेन दौर्बल्यमिति—तदयुक्तम् । पृथिव्यादिस्थानभेदाद्रूपरसगन्धादेर्ब्रह्मण्यध्यास-सम्भवेऽपि **'यः सर्वज्ञः सर्ववित्' 'सत्यकामः सत्यसंकल्पः' 'अनन्त-शक्तिः पुरुषः पुराणः'** इत्यादिसगुणविद्यायां श्रुतस्य सर्वज्ञत्वादेः स्थाना-द्युपाधिनाऽऽरोपासंभवात् । आरोपो हि जपाकुसुमाद्युपाधिनिष्ठानामेव धर्माणां लौहित्यादीनां दृष्टः । न हि सार्वज्ञादयः ब्रह्मणोऽन्यत्र प्रसिद्धाः सन्ति । तेषां ब्रह्मलक्षणत्वात् । अन्यथा स्थौल्यादीनामप्युपाधिवशादारोप-संभवेन नीरूपत्वं पारमार्थिकं न स्यात् । किञ्च **'न च रमन्त्यहो असदु-पासनयाऽऽत्महनः' 'अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविप-र्ययाभ्याम्'** इत्यादिवचनैरविद्यमानोपासनाया निन्दितत्वेन तदर्थत्वादुपपत्तौ वैयर्थ्यमेव सगुणविद्यायाः स्यादिति न सावकाशत्वेन दौर्बल्यम् ॥

सैन्धवघनदृष्टान्तेन ब्रह्मणो निर्विशेषत्वमिति भाष्यपरीक्षा

यच्चोक्तं भाष्ये—**यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रस-घनः, एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति** वाक्ये नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यत्स्वरूपमस्ति, चैतन्यमेव तु निरन्तर-मस्य स्वरूपं यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसा-न्तरं तथैवेत्यवगमान्निर्विशेषमेव ब्रह्मेति—तच्चायुक्तम् । सैन्धवघनस्य लवणरस विरोधिरसान्तरस्याभावेऽपि तदविरोधिरूपस्पर्शादीनां सत्त्वमिव चैतन्यरूपस्यापि

शेषतात्पर्यचन्द्रिका

ब्रह्मणः चेतनत्वविरोध्यज्ञानादिव्यावृत्तावपि तदविरोधिसार्वज्ञानन्तशक्त्यादिधर्मव्यावृत्त्ययोगात् ॥

'नेति नेति' 'अनादिमत्परं ब्रह्म' इत्यादिप्रमाणात् ब्रह्मणो निर्विशेषत्वमिति भाष्यपरीक्षा

एतेनैव—'अथात आदेशो नेति नेति,' 'अन्यदेव तद्विदितात्,' 'यतो वाचो निवर्तन्ते' 'स होवाचाधीहि भो इति स तूष्णीं बभूव तं हि द्वितीये वा तृतीये वा वचन उवाच ब्रूमः खलु न विजानासि उपशान्तोऽयमात्मे'ति बाष्कलिना पृष्टस्य बाध्वस्य वचनेन,

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥

इति कृष्णवचनेन,

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तमेवं मां ज्ञातुमर्हसि ॥

इति नारायणवचनेन च परप्रतिषेधेनैव ब्रह्मप्रतिपादनात् निर्विशेषत्वम् इति भाष्योक्तं—निरस्तम् । यतो **नेति नेति** इति श्रुतौ लोकविलक्षणरूपाद्यभिप्रायेणैव तथोपदेशो न सर्वधर्माभावाभिप्रायेण, यथा ग्रामस्थोऽप्ययं न ग्रामस्थ इत्युक्तिः मूर्खजनवदयं न तत्र प्रविष्ट इत्येवाभिप्रायेण, न तु सर्वथा ग्रामसम्बन्धो नास्तीति; यथा च यं **प्रव्रजन्तमनुपेतमुपेतकृत्यमिति** शुकविषयवाक्यं न केनापि युक्तम् अनुपेतमिति भावेन न प्रवृत्तम्, देहादिनैव

## शेषतात्पर्यचन्द्रिका

युक्तत्वात्, किन्त्वभिमानादिनानुपेतमित्येव । अन्यथा **नेति नेती**ति सामान्योक्तेः निर्विशेषब्रह्मस्वरूपस्यापि निषेधकत्वे शून्यवादापातात् । **अन्यदेव तद्विदितात्** इति श्रुतौ च परिच्छिन्नमाहात्म्यात् वियदादेः प्रपञ्चात् विदितात् वैलक्षण्यमेव प्रतिपाद्यत इति अपरिच्छिन्नमाहात्म्यमेव सिध्यति । न तु सर्वधर्मराहित्यम् । तथा सति विदितादन्यत्वमपि निषिद्धमिति स्वव्याघातः स्यात् । अविदितादप्यन्यदित्युत्तरवाक्ये प्रतिपादनात् ब्रह्मणोऽवेद्यत्वसिद्धान्तहान्यापत्तेश्च । **यतो वाच** इति श्रुतौ न सर्वधर्मराहित्यं प्रतिपाद्यते । किन्तु **वाचो निवर्तन्ते** इति श्रवणात् शब्दागोचरत्वमात्रम् । वस्तुतस्तु तदपि तत्र प्रतिपाद्यं न भवति । यत इत्यादिपदप्रयोगानुपपत्तेः । **यतो वाच** इत्यवाच्यत्वप्रतिपादकवाक्यं प्रति ब्रह्मणो विषयत्वाविषयत्वाभ्यां व्याघातापाताच्च । एतन्न्यायेन मनोऽगोचरत्वस्यापि प्राप्त्या मनसैवेदमाप्तव्यमित्यादिश्रुतिविरोधापाताच्च । किन्तु साकल्येन वाङ्मनसागोचरत्वमेव प्रतिपाद्यं, वाक्यान्तरविरोधाभावात् । बाध्ववचनमपि न निर्गुणपरम् । किन्तु ब्रह्म अधीहि इति प्रार्थिते नानन्तगुणं ब्रह्म मया वक्तुं शक्यमिति तूष्णींभूते बाध्वे द्विवारं त्रिवारमप्यभिप्रायमजानता बाष्कलिना पृष्टेन बाध्वेन उत्कृष्टो रक्षकः सुखमर्यादाभूमिश्चात्मा तूष्णींभूतेन मयोक्तप्राय एव, त्वन्तु मदभिप्रायं न जानासि इति **उपशान्तोऽयमात्मे**त्यनेनोच्यते । गीतावाक्यं तु अनादिभूतानां सार्वज्ञानन्तशक्त्यादिगुणानां सत्त्वस्यैव **अनादिमत्** इत्यनेन प्रतिपादनात् प्रतिकूलमेव । अन्यथा सद्रूपमपि ब्रह्म न स्यादिति शून्यवादापातः । नारायणवचनेऽपि मदीयविश्वरूपं सर्वभूतगुणैर्युक्तं यत्त्वया दृष्टं तन्मदी-

## शेषतात्पर्यचन्द्रिका

यसामर्थ्येनैव सृष्टम् । अत एव मां लोकसाधारणपुरुषं न जानीहि किन्तु सर्वोत्कृष्टमेव मां जानीहीत्युच्यते इति न तेनापि निर्धर्मकत्वसिद्धिः ॥

निर्विशेषब्रह्माभिप्रायेण शास्त्रेषु जलसूर्यकाद्युपमेति भाष्यपरीक्षा

एतेनैव—यदप्युक्तं भाष्ये,

'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्नो बहुधैकोऽनुगच्छन्[1] ।
उपाधिभिः क्रियते भेदरूपो जीवः[2] क्षेत्रेष्वेवमजोऽयमात्मा ॥'

'एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥'

इत्यादिमोक्षशास्त्रे निर्विशेषब्रह्माभिप्रायेण जलसूर्यकजलचन्द्रोपमा श्रूयते । अन्यथा तन्न स्यादिति—तदप्ययुक्तम् । न ह्यत्र ब्रह्मणः सकलधर्मराहित्यं प्रतिपाद्यते । तथा सति सूर्यकादीनां दृष्टान्तीकृतानां जलादिवृद्ध्यादिना वृद्धिह्रासादिधर्माङ्गीकारेण दृष्टान्तदार्ष्टान्तिकभावोऽनुपपन्नः स्यात् । किन्तु बहुषु स्थानेषु रूपविशेषेण स्थितस्य ब्रह्मणः स्थानभेदेन भेदप्रसक्तौ स नास्तीति सदृष्टान्तमुच्यते । अत एव उपाधिभिः क्रियते भेदरूप इति श्रूयते । अन्यथा धर्मजातमिति श्रूयेत । अत एव सृष्ट्वानुविश्य पुरुषः सदसद्गुणेषु नानेव दारुषु विभावसुवद्विभाति इति समाख्यापि नीचोच्चजीवेषु ब्रह्मादिस्थावरान्तेष्वनुप्रविष्टस्य भगवतो नीचोच्चतादिप्रयोजकभेदो नास्तीत्यस्मिन्नर्थे दृश्यते ॥

---

[1] गर्भः [2] देवः

## शेषतात्पर्यचन्द्रिका

युक्त एव दृष्टान्तः किञ्चित्सारूप्यसंभवादिति भाष्यपरीक्षा

अत एव—दृष्टान्तदार्ष्टान्तिकभावस्य सर्वसारूप्येण क्वाप्यदर्शनाद्य-त्किञ्चिद्धर्मेण सारूप्यस्येहाप्यक्षतेः दृष्टान्तदार्ष्टान्तिकभावो नानुपपन्न इति भाष्योक्तं समाधानं—निरस्तम्। येन केनचिद्धर्मेण सारूप्येऽतिप्रसङ्गाद्विवक्षित-धर्मेणैव वक्तव्यमिति निर्विशेषत्वस्यैव त्वन्मते विवक्षितत्वेन जलचन्द्रादेश्च तदभावात् ॥

कासांचित् द्वैतश्रुतीनां प्रपञ्चप्रविलयपरत्वमिति भामत्याः
एकदेशिमतनिराकरणप्रस्तावोक्ततद्वाक्यैरेव निराकरणम्

तस्मान्मनोमयः प्राणशरीरो भारूप इत्यादिसविशेषवाक्यानाम् अनेकत्वप्रतिपादनद्वारैकत्वे पर्यवसानमयुक्तम्। 'द्वा सुपर्णा' 'सत्यः सो अस्य महिमा' 'सत्यं भिदा' इत्यादिद्वैतश्रुतिविरोधाच्च ॥

अत्रोक्तं भामत्याम्—कासाञ्चित् द्वैताभिधायिनीनां प्रपञ्चप्रविलय-परत्वान्न विरोध इति—तन्न। प्रपञ्चप्रविलयज्ञापकाभावेन तत्परत्वानध्यवसा-यात्। किञ्च वास्तवस्य प्रपञ्चस्य प्रविलयः उच्छेदोऽग्निसंयोगात् सर्पिष इव निर्विशेषब्रह्मतत्त्वज्ञानाज्जायत इत्युच्यते, उत रज्जुखण्डे आरोपितस्य सर्पस्य रज्जुतत्त्वज्ञानात्प्रविलय इव निर्विशेषब्रह्मतत्त्वज्ञानात् ब्रह्मण्यारोपितस्य प्रपञ्चस्य प्रविलय इति ? न तावदाद्यः। वास्तवस्य तत्त्वज्ञानेन समुच्छेदस्य क्वाप्यदर्शनात्। प्रवाहतोऽनादिनित्यस्य पुरुषमात्रेणोच्छेत्तुमशक्यत्वाच्च। अन्यथा तत्तत्पुरुषान् प्रति तत्तदीयप्रत्यक्षानुमानादिभिः प्रतीयमानत्वेन सर्वसा-

## शेषतात्पर्यचन्द्रिका

धारणस्य पृथिव्यादिप्रपञ्चस्य प्रह्लादशुकादिभिः पुरुषधौरेयैः समूलमुन्मूलितत्वापत्त्या शून्यमेव जगद्भवेदिति न पुरुषान्तराणां प्रपञ्चप्रतीतिः स्यात् ॥

यद्यपि चात्रारोपितरूपस्य तत्त्वज्ञानेन विरोधान्निर्विशेषतत्त्वज्ञानेन तत्राध्यस्तप्रपञ्चविनाशः कर्तुं शक्यत इति द्वितीये नानुपपत्तिः। तथाप्यस्थूलमनण्वित्यादिवाक्यैः निर्विशेषब्रह्मतत्त्वमवधार्यते न वा ? नेति पक्षे अनुभवविरोधः। 'आत्मज्ञाने प्रवर्तस्व' 'प्रपञ्चविलयं कुरु' इति विधिशतेनापि बोधितस्य निर्विशेषवाक्यविचारे प्रवृत्त्यनुपपत्तेः विधिवाक्यद्वयानर्थक्यञ्च स्यात्। आद्ये निर्विशेषवाक्येनैव तत्त्वज्ञानोदयेन तद्द्वारा प्रपञ्चविलयस्य संभवेन पुनर्विधिद्वयवैयर्थ्यम्। सति चैवम् आत्मैकत्वज्ञानप्रपञ्चविलययोरविधेयत्वे तत्राद्वैतश्रुतीनां तात्पर्यमयुक्तम्। न ह्यविधेये कस्यचिद्वाक्यस्य तात्पर्यं संभवति। तथा सति दध्नेन्द्रियकामस्य जुहुयादित्यादौ होमे तात्पर्यापत्त्या गुणफलसम्बन्धाभावो वाक्यभेदो वा स्यात। न चात्मतत्त्वज्ञानविध्यभावे निर्विशेषपरवेदान्तार्थब्रह्मतत्त्वावधारणे प्रवृत्त्यनुपपत्त्या ब्रह्मतत्त्वबोधो न स्यादिति तदर्थं प्रवर्तस्वात्मज्ञान इत्येवमर्थकस्य **आत्मा वा अरे द्रष्टव्य** इत्यादिविधेः, प्रपञ्चविलयं कुर्वित्येतदर्थस्य **अपूर्वमनपरमबाह्यमि**त्यादिविधेश्च सार्थक्योपपत्तेर्न विधिद्वयवैयर्थ्यापादनं युक्तमिति वाच्यम्। फलवदर्थावबोधपर्यवसायिनः **स्वाध्यायोऽध्येतव्यः** इति विधिवाक्यादेव कर्मकाण्ड इव ब्रह्मकाण्डेऽपि अर्थावबोधार्थं प्रवृत्तिसंभवेन विध्यनपेक्षणात्। अन्यथा **आत्मा वा अरे द्रष्टव्यः** इतिवत् **कर्म ज्ञातव्यं** इत्यादिविध्यभावेन तत्रापि प्रवृत्तिर्न स्यात्। अत एव स्वैकदेशिमतदूषणप्रस्तावे त्वद्भाष्य एवोक्तं 'द्रष्टव्यादिशब्दा अपि तत्त्वाभि-

शेषतात्पर्यचन्द्रिका

मुखीकरणप्रधानाः न तत्त्वावबोधविधिप्रधाना' इति। विवृतं चैतत् भामत्याम् 'जर्तिलयवाग्वा वा जुहुयादितिवत् विधिसरूपा **एव आत्मा वा अरे द्रष्टव्य** इत्यादयो न तु विधय' इति॥

किञ्च निष्प्रपञ्चब्रह्मतत्त्वज्ञानविधाने प्रपञ्चविलयविधाने च तयोस्तात्पर्यमभिलषता निष्प्रपञ्चब्रह्मतत्त्वज्ञानादिविषयो नियोगोऽभ्युपगन्तव्यः। स च नियोज्यं विनानुपपन्न इति नेहाभ्युपगन्तुं शक्यः। जीव एव नियोज्योऽस्ति चेत् स किं मिथ्याभूतप्रपञ्चेऽन्तर्गतः, उत पारमार्थिकब्रह्मतत्त्वे? नाद्यः। प्रपञ्चस्य तत्त्वज्ञानेनोच्छेदे तदन्तर्गतजीवस्यापि तदापत्त्या नियोगविषयत्वानुपपत्तेः। न हि तत्त्वज्ञानफलमोक्षपर्यन्तमनवस्थितस्य मोक्षाय तत्साधनभूतज्ञानविषयकनियोगं प्रति नियोज्यता संभवति। द्वितीये त्वनियोज्यब्रह्मस्वरूपत्वात् जीवस्य नियोज्यतानुपपत्तिः॥

अथ मतं, ब्रह्मणोऽनन्योऽप्यविद्यया अन्य इव प्रतीयत इति जीव एव नियोज्यत इति, तदयुक्तम्। जीवस्य पारमार्थिकं ब्रह्मभावमवगमयता **अद्वैतं परमार्थतः** इत्यागमेनाविद्याया निरस्तत्वात्तन्निबन्धनस्य जीवस्य नियोज्यतानुपपत्तितादवस्थ्यात्। किञ्च नियोज्यं जीवमधिकृत्य निर्विशेषब्रह्मतत्त्वज्ञानं विधातुं न शक्यं विरोधात्। अनियोज्यब्रह्मस्वरूपत्वं जीवस्य साधयितुं प्रवृत्तस्य **नेति नेती**त्यादिशास्त्रस्य जीवानियोज्यत्वे तावत्तात्पर्यमभ्युपगन्तव्यम्। आत्मतत्त्वज्ञानविधायकवाक्यस्य बलात् जीवस्य नियोज्यत्वेऽपि तात्पर्यम्। अतः कथं न विरोधः? अथ मतं, वस्तुतः अनियोज्य-

शेषतात्पर्यचन्द्रिका

ब्रह्मस्वरूपस्याध्यस्तनियोज्यभावस्य दर्शपूर्णमासादिवाक्येष्विव नियोज्यता युक्तेति, तन्न। जीवस्याध्यस्तम् अनध्यस्तं वा लोकसिद्धं नियोज्यत्वमेवाभिप्रेतं न पुनस्तदभावः। इह तूक्तरीत्या **आत्मा वा अरे द्रष्टव्यः** इत्यादिविधिबलात् नियोज्यत्वम्; **नेति नेती**त्यादिनिष्प्रपञ्चवाक्यबलात् नियोज्यत्वाभावोऽप्यभिप्रेत इति वैषम्यात्॥

तस्मात् **द्वा सुपर्णे**त्यादिद्वैतश्रुतीनां प्रपञ्चविलयार्थत्वानुपपत्त्या तद्विरोधो दुष्परिहर इति किमनया दुर्बलहिंसया॥

'न स्थान' सूत्रव्याख्यापरीक्षा

यच्चात्र **न स्थानतोऽपी**त्याद्यस्य सूत्रस्य व्याख्यानं — स्थानाद्युपाधिभेदेनापि परब्रह्मणः उभयलिङ्गं न युक्तम्। हि यतः सर्वत्र ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु **अशब्दमस्पर्शमरूपमव्यय**मित्यादिष्वस्तसमस्तविशेषं ब्रह्मोपदिश्यत इति — तदपि न। ब्रह्मणः उभयलिङ्गं नास्ति, किन्तु निर्विशेषत्वाख्यमेकमेव लिङ्गमित्यर्थपर्यवसाने निर्विशेषत्वसिद्धान्तव्याघातात्। धर्मद्वयं नास्तीत्युक्ते स्वरसतः उभयोर्धर्मयोरपि निषेधप्रतीतेरेकसत्त्वे द्वयमिह नास्तीत्यादाविवेह शब्दस्वारस्यभङ्गेन बलाद्व्याख्यानायोगाच्च। किञ्च ब्रह्मणः धर्मद्वयं नास्ति, निर्विशेषत्वाख्यैकधर्मश्रवणादिति किं केन सङ्गतम्? यतोऽनेकधर्मत्वस्यैकधर्मश्रवणमनुकूलमेव। न हि निर्विशेषत्वश्रवणाभावे धर्मद्वयं साधयितुं शक्यते॥

अथ मतं, न तावत् स्वत एव परस्य ब्रह्मणः उभयलिङ्गमभ्युपगन्तुं शक्यते। न ह्येकस्य वस्तुनः स्वत एव विशेषस्तदभावश्च वक्तुं शक्यो विरोधात्।

## शेषतात्पर्यचन्द्रिका

नाप्युपाधितः । उपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशस्वभावायोगादिति नाशङ्कतिरिति, मैवम् । सूत्राक्षरानारोहात् । अध्याहारे तु स एव दोषः । **सर्वत्र हि** इत्युक्त्युपयोगाभावाच्च । अन्यतरलिङ्गपरिग्रहेऽपि निर्विशेषत्वमेव कुतः प्रतिपत्तव्यमिति शङ्कायां सर्वत्र निर्विशेषत्वस्य प्रतिपादनादित्यनेनोक्तमिति चेन्न । साक्षाद्धेत्वभिधानस्याकाङ्क्षितस्य त्यागेन शङ्कापरिहारार्थत्वायोगात् । अस्याश्च शङ्कायाः **अरूपवदेव हि तत्प्रधानत्वात्** इति चतुर्थे परिहरिष्य-माणत्वेनेह तत्परिहारायोगाच्च । किञ्च सर्वत्र निर्विशेषमेव ब्रह्म प्रतिपाद्यते यस्मादिति व्याख्याने असिद्धिः । **सर्वकर्मा सर्वकामः** इत्यादिब्रह्मपरवाक्येषु सविशेषत्वस्य प्रतिपादनात् । **अशब्दम्** इत्यादिवाक्येष्वशब्दत्वादिरूपविशेष-प्रतिपादनाच्च । न **चाशब्दमस्पर्शम्** इत्यादावशब्दमेवेत्याद्यस्ति । अध्याहारे त्वस्पर्शमित्यनेन विरोधः । ननु यथा **रथन्तरसामा सोमः स्यात्** इत्यादौ रथन्तरशब्दो न सामान्तरमात्रव्यवच्छेदकः ज्योतिष्टोमे गायत्रादिसामान्तर-सद्भावात् किन्तु स्वविरोधिबृहत्साममात्रव्यावर्तकः तथेहापि अशब्दादि-शब्दः स्वविरोधिशब्दादिव्यावर्तक एव, न त्वविरोधिस्पर्शाभावादिव्यावर्तकः । अतो न विरोध इति चेन्न । आहत्य निर्विशेषवाक्ये प्रतिपाद्यस्य निर्विशेष-त्वस्यास्पर्शत्वादिरूपसविशेषत्वेन सह विरोधसद्भावात् ॥

### ‘न भेद’ सूत्रव्याख्यापरीक्षा

यच्च द्वितीयस्य व्याख्यानं—यदुक्तं ब्रह्म निर्विशेषमेव न पुनः स्वतः उपाधितो वा उभयलिङ्गमिति, तदयुक्तम् । ‘चतुष्पाद्ब्रह्म’ ‘षोडशकलं ब्रह्मे’ति

## शेषतात्पर्यचन्द्रिका

भेदवचनात् सविशेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यमिति चेन्न, **यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेत्यादि-** प्रतिविद्यमभेदवचनादिति—तदप्ययुक्तम् । **न स्थानतोऽपीति** सूत्र एवास्याः शङ्कायाः समाधानात् पुनरत्र शङ्कानुदयात् । कथञ्चित्तदुदयेऽपि **सर्वत्र ही-त्युक्तहेतुनैव** समाधानसंभवेन सूत्रान्तरप्रणयनवैयर्थ्याच्च । तत्रासमाधाने तु अत्रापि समाधानासंभवात् । **यश्चायमस्यां पृथिव्यामयमेव स** इत्याद्य-भेदवचनस्यौपाधिकभेदेऽप्युपपत्तेः । साधकोक्तीनां समाप्तावेव बाधकोद्धारस्य युक्तत्वाच्च ॥

'अपि चैव' सूत्रव्याख्यापरीक्षा

**मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन । मृत्योस्स मृत्युमाप्नोति** इत्यादिना भेददर्शननिन्दापूर्वकम् अभेदमेके शाखिनो यतः पठन्ति अतो भेदो न युक्त इति—तृतीयस्य व्याख्यानमयुक्तम् । पूर्वोक्तरीत्या भेद-दर्शनमात्रनिन्दाया अयोगात् । योगे वा साक्षात्सविशेषत्वज्ञाने निन्दावचनो-दाहरणस्यैव युक्तत्वेन भेदनिन्दावचनोदाहरणस्यायुक्तत्वात् । भेदशब्देन सविशेषत्वमेवोच्यत इति चेत्तस्य तत्रासामर्थ्यात् । विवक्षायां तु **न स्थान-तोऽपीति** पूर्वेण **अरूपवदेव हीत्युत्तरेण** च गतार्थताऽपरिहारात् । अभेद-वचनादित्यस्य निर्विशेषत्ववचनादित्यर्थपर्यवसानापत्त्या **अशब्दमित्यादेरेवो-**दाहरणीयत्वेन **स यश्चायमस्यां पृथिव्याम्** इत्याद्यभेदवचनोदाहरणा-योगाच्च । अभेदवचनस्यापि निर्विशेषत्वे तात्पर्याङ्गीकारे तु स्पष्टमेवास्य वैयर्थ्यम् ॥

## शेषतात्पर्यचन्द्रिका

'अरूप' सूत्रव्याख्यापरीक्षा

अत एव चतुर्थव्याख्यानमप्ययुक्तम्, यतः सप्रमाणकम् अरूपशब्दविवक्षितं निर्विशेषत्वमाद्य एव प्रतिपादितम्। नन्वत्र विनिगमनाहेतुरुच्यते, अतो न वैयर्थ्यम् । मैवम्। अन्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यम्। न तद्विपरीतम्। सर्वत्र हि ब्रह्मस्वरूपप्रतिपादनपरेष्वशब्दमस्पर्शमित्यादिष्वपास्तसमस्तविशेषं ब्रह्मोपदिश्यत इति विनिगमनाहेतोरपि तत्रोक्तेः। न च भाष्यकृतैवैतत्सूत्रप्रमेयं शिष्यबुद्धिसौकर्यायोक्तम्। सर्वत्र हीति प्रतीकग्रहणपूर्वकं व्याख्यानदर्शनात्॥

किञ्चात्र वक्तव्यं, तत्प्रधानत्वं श्रुतीनां किमत्र वक्तव्यम्? यतो ब्रह्मविशेष्यत्वमेव श्रुतीनां तत्प्राधान्यमिति चेत् अशब्दमित्यादाविव सर्वकर्मा सर्वकाम इत्यादावपि ब्रह्मणो विशेष्यत्वदर्शनात्। निर्विशेषब्रह्मतात्पर्यकत्वं तु श्रुतीनां विप्रतिपन्नम्। सविशेषतात्पर्यकत्वाच्छ्रुतीनां सविशेषत्वमेवाङ्गीकर्तव्यमिति सत्प्रतिपक्षत्वं च। प्राकृतरूपादेः भक्तिप्रतिबन्धकस्यावश्यपरिहरणीयस्यात्र परिहारदर्शनेन प्रधानसूत्रत्वे संभवति विवक्षादिना कथंचिद्वैयर्थ्यपरिहारेण गुणसूत्रत्वेन व्याख्यानायोगात्। अत एवास्य द्वितीयतृतीयानन्तर्यमप्ययुक्तम्। तयोरभेदप्रतिपादकत्वात्। निर्विशेषत्वमेवाभेद इति चेत् पुनस्तयोर्वैयर्थ्यानिस्तारः॥

'प्रकाशवच्च' सूत्रव्याख्यापरीक्षा

सौरचान्द्रमसप्रकाशयोर्यथा अङ्गुल्यवष्टम्भादिना ऋजुवक्रादिभावः तथा ब्रह्मणोऽपि पृथिव्याद्युपाधिना तत्तदाकारसम्भवेन सविशेषश्रुतेः न वैयर्थ्य-

## शेषतात्पर्यचन्द्रिका

मिति—पञ्चमव्याख्यानमपि सूत्रे दार्ष्टान्तिकानुक्तेरपव्याख्यानमेव । **न स्थानतोऽपि** इत्यौपाधिकधर्मनिराकरणेन विरोधाच्च । औपाधिकधर्मो न वस्तुस्वभाव इत्युक्तम्, इह त्वस्तीत्युच्यत इत्यविरोधः । मैवम् । अप्रामाण्यापातात् । तत्त्वावेदकत्वाभावात् तदिष्टमित्युक्तौ तत एव वैयर्थ्यमपि कुतो नानिष्टमिति वक्तव्यम् । यदि चाध्ययनविध्यापादिताध्ययनस्य कस्यचित्स्वरवर्णपदवाक्यादेर्वैयर्थ्यं न युक्तं तर्हि श्रुतौ बहुमानवता कथमप्रामाण्यं युक्तमङ्गीकर्तुम् ? किञ्चोपासनाया असद्विषयिण्या उक्तरीत्यानर्थहेतुत्वेन, प्रयोजनलेशादर्शनेन च तदर्थगुणकीर्तनस्यापि सुतरां प्रयोजनं न लभ्यत इति सविशेषवाक्यवैयर्थ्यं दुष्परिहरम् ॥

'आह च' सूत्रव्याख्यापरीक्षा

आह च श्रुतिश्चैतन्यमात्रमिति षष्ठस्य व्याख्यानं न तद्वैयर्थ्यापादकमिति न सूरिहृदयङ्गमम् । न हि समानार्थकस्य **स यथा सैन्धवघन** इत्यादेरुदाहरणमात्रेण एतदपार्थकं संभवति तथा सत्यपर्यवसानापातात् । द्वितीयत्वेन सङ्गतस्य सूत्रस्य पञ्चमानन्तर्यायोगात् क्रमोऽप्ययुक्तः ॥

'दर्शयति' सूत्रव्याख्यापरीक्षा

अत एव **नेति नेत्यात्मा गृह्य** इत्यादिश्रुतिः, **अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते** इत्यादिस्मृतिश्च ब्रह्मणो निर्विशेषत्वं दर्शयतीति सप्तमस्य व्याख्यानमपि निरस्तम् ॥

'अत एव चोपमे'ति सूत्रव्याख्यापरीक्षा

**'यथा ह्ययं ज्योतिरात्मा विवस्वान्' 'एक एव तु भूतात्मा'** इत्यादिमोक्षशास्त्रेषु ब्रह्मणो निर्विशेषत्वमभिप्रेत्यैव जलसूर्यकाद्युपमोपादीयत

## शेषतात्पर्यचन्द्रिका

इत्यष्टमस्य व्याख्यानमप्ययुक्तम् । उदाहृतवाक्यद्वये 'तत्तज्जीवेषु सर्वज्ञत्वमल्पज्ञत्वं सुखं दुखं चेत्यादयो धर्माः सत्या एव । जलचन्द्रे प्रतीयमानं चाञ्चल्यादिकं सत्यभूतमेव । दोषवशात् तद्बिम्बभूते चन्द्र इव तत्तज्जीवबिम्बभूते भगवति प्रतीयन्त ।' इति स्पष्टं प्रतीतेः । निर्विशेषत्वे मानत्वायोगाच्च ॥

'अम्बु' 'वृद्धि' 'दर्शन' सूत्राणां व्याख्यापरीक्षा

अत एव नायं दृष्टान्तो युज्यते । जलसूर्यकादितुल्यत्वाभावात् । सूर्यको हि मूर्तेभ्यो जलादिभ्यः पृथग्भूतः । जलं तु सूर्यादितो विप्रकृष्टदेशं मूर्तश्च गृह्यते । ततश्च **अम्बुवदग्रहणात्** जलवदेवात्रोपाधित्वेनाभिमतानां पृथिव्यादीनां बिम्बभूतपरमात्मपृथग्भूतत्वेन विप्रकृष्टदेशत्वेन चाग्रहणात् अज्ञातत्वात् प्रत्युत परमात्मनः सर्वगतत्वात् सर्वानन्यत्वाच्च तत्सन्निकृष्टदेशत्वेन तदपृथक्त्वेन च तथात्वात् न दृष्टान्तदार्ष्टान्तिकभाव उपपद्यत इति नवममाक्षेपपरतया व्याख्याय, युक्त एवायं दृष्टान्तः विवक्षितांशसंभवादिति बहिरेवोक्ते किं पुनरत्र विवक्षितं सारूप्यं तदुच्यते **वृद्धिह्रासभाक्त्वमिति** । जलगतं हि सूर्यस्य प्रतिबिम्बं जलवृद्धौ वर्धते जलह्रासे ह्रसतीति जलधर्माननुविधाय भवति । न तु परमार्थतः सूर्यस्य तथात्वमस्ति । एवमात्मप्रतिबिम्बभूतं जीवजातं देहाद्युपाधिधर्माद्यनुविधायि । न परमार्थतः परब्रह्मणः तथात्वमस्ति । एवं सूर्यब्रह्मप्रतिबिम्बयोः वृद्धिह्रासभाक्त्वं जलदेहाद्युपाधिधर्मानुविधायित्वं सारूप्यमिह विवक्षितम् । ततश्च ब्रह्मणो देहाद्युपाधिषु अन्तर्भावात् अन्तर्गतत्वात् वृद्धिह्रासभाक्त्वम् उपाधिगतवृद्धिह्रासभाक्त्वम् ।

शेषतात्पर्यचन्द्रिका

एवमुभयसामञ्जस्यात् दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यसंभवादविरोध इति दशमं तत्परिहारपरतया व्याख्यायान्तर्भावादित्युक्तहेत्वसिद्धिशङ्कायाम्,

**'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ।**
**पुरस्स पक्षी भूत्वा पुरः पुरुष आविशत् ॥'**

**'अनेन जीवेनात्मनानुप्रविश्य'** इत्यादिदर्शनाच्च नासिद्धिरित्यन्तिमेनोच्यत इति व्याख्यातम् ॥

तदयुक्तम् । सूर्यकादिदृष्टान्तेन जीवब्रह्मणोरभेदेऽभिहिते सूर्यकादिवदग्रहणात् न तथात्वमित्याक्षेप्तव्ये अदृष्टान्तीकृतजलवदग्रहणादित्याक्षेपस्यासङ्गतत्वात् । वृद्धिह्रासभाक्त्वमिति समाधानानुपपत्तेश्च । वृद्धिह्रासभाक्त्वस्योपाधौ जलादावव्याख्यानात् । ब्रह्मणो वृद्धिह्रासभाक्त्वस्य त्वत्सिद्धान्तेऽप्यभावेन व्याख्यानं चेदमयुक्तम् । बिम्बप्रतिबिम्बयोरैक्यप्रत्याशा अन्यत्र सपरिकरं निरस्तैव । दृष्टान्तमात्रस्य दार्ष्टान्तिकमात्रस्य वा सामञ्जस्योक्तौ उभयसामञ्जस्यस्यानुषङ्गतः सिद्धेः उभयसामञ्जस्यादिति कण्ठोक्तिस्वारस्याभावाच्च । प्रधानप्रमेय एव हेत्वन्तरेण साधयितव्ये गुणसूत्रगतदृष्टान्तभावादेः साधनायोगाच्च । अन्तिमे चशब्दायोगाच्च ॥

भक्त्यनुसारिफलदातृत्वादिरूपावश्यवक्तव्यमहामाहात्म्यकथनेन पृथगधिकरणत्वे संभवति गुणसूत्रत्वेन तत्राक्षेपसूत्रत्वेन गुणसूत्रगुणसूत्रत्वेन चाङ्गीकृत्य बहूनां सूत्राणाम् एकाधिकरणत्वकल्पनादुर्व्यसनायोगाच्च । अन्यथैवं कुकविकृतिवत् समस्तोऽपि पाद एकमधिकरणं स्यात् ॥

## शेषतात्पर्यचन्द्रिका

नीरूपमेव ब्रह्म शास्त्रप्रतिपाद्यं मानान्तरासिद्धत्वात् इति वदतां भारतीतीर्थादीनामधिकरणपरीक्षा

एतेनैव—नीरूपमेव ब्रह्म शास्त्रप्रतिपाद्यं मानान्तरासिद्धत्वात्। जगत्कारणत्वादिरूपयुक्तं तु ब्रह्म क्षित्यादिकं सकर्तृकं कार्यत्वात् इत्याद्यनुमानेनावगन्तुं शक्यम्। तत् उपासनायानूद्यते। न तात्पर्येण प्रतिपाद्यते। न चानुमानशास्त्रसिद्धयोरुभयोर्वास्तवत्वम्। एकस्मिन् वस्तुनि सरूपत्वनीरूपत्वयोर्विरुद्धत्वात्। तथा च,

**ब्रह्म किं रूपि चारूपि भवेन्नीरूपमेव वा।**
**द्विविधश्रुतिसद्भावात् ब्रह्म स्यादुभयात्मकम्॥**

**नीरूपमेव वेदान्तैः प्रतिपाद्यमपूर्वतः।**
**रूपन्त्वनूद्यते ध्यातुमुभयत्वं विरुद्ध्यते॥**

इति—भारतीतीर्थाद्युक्तमधिकरणमप्ययुक्तम्। यतो वेदानुपजीविप्रमाणान्तराप्राप्तिरपूर्वता, न तु प्रमाणान्तराप्राप्तिमात्रम्। क्षित्यादिकमित्याद्यनुमानन्तु **'स हि सर्वस्य कर्ता' 'द्यावाभूमी जनयन्देव एक'** इत्यादिवेदोपजीव्येव। कथमपूर्वत्वाभावो रूपित्वस्य? अन्यथा ब्रह्म निर्विशेषमेव यतो वेदेऽस्तसमस्तविशेषमुपदिश्यते इत्याद्यनुमानप्राप्तत्वेन नीरूपत्वेऽप्यपूर्वत्वं शास्त्रप्रतिपाद्यत्वं च न स्यात्। स्याच्च असद्ब्रह्म **असद्वा इदमग्र आसीत्** इत्यादिश्रुतिपाद्यं, मानान्तराप्राप्तत्वादित्यादि। कार्यत्वाद्यनुमानस्य श्रुतिमूलत्वेन प्राबल्यादनिराकार्यत्वाच्च। तद्विरुद्धनीरूपत्वे श्रुतितात्पर्याङ्गीकारायोगाच्च।

## शेषतात्पर्यचन्द्रिका

अत एव विरोधाधिकरणेऽन्ततः पुरुषान्तरप्रत्यक्षमूलस्याप्यनुमानस्यानिराकार्यतया भाष्यकारीयमतं दूषयित्वाऽऽचार्यः शाक्यादिस्मृतीरुदाजहार। स्वतो दुर्बलेनापि चतुष्पाद्ब्रह्मेत्यादिरूपवद्ब्रह्मप्रतिपादकश्रुतिसनाथेनानुमानेन प्राप्तस्य पूर्वपक्षस्य श्रुतिमात्रेण निराकरणायोगाच्च। सम्मतश्चैतन्मीमांसकानामपि शिष्टाकोपे स्मार्तस्याचमनस्य दुर्बलप्रमाणप्रापितस्यापि प्रमेयप्राबल्यानुगृहीतस्मृतिप्राबल्यमभ्युपगम्य श्रुतिप्राप्तक्रमबाधकत्वमभ्युपगच्छताम्। यथोक्तं **दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा** इत्यादि॥

'न स्थाने'त्यादिपञ्चदशसूत्रीमेकमधिकरणं वदतां विशिष्टाद्वैतिनामधिकरणपरीक्षा

केचित्तु **न स्थानतोऽपि** इत्यारभ्य **अतोऽनन्तेन तथा हि लिङ्गम्** इत्यन्तां षोडषसूत्रीं **दर्शनाच्चे**त्यस्य **वृद्धिह्रास**सूत्रशेषतया, **प्रकाशश्च कर्मण्यभ्यासात्** इत्यस्य **प्रकाशादिवदि**ति सूत्रशेषतया, चतुर्दशसूत्रीं विधाय, **प्रकाशवच्चावैयर्थ्यात्** इति सूत्रमपपाठेन पठित्वा इत्थं व्याचक्षते—

किं जीवस्यैवान्तर्यामिणः परस्य ब्रह्मणोऽपि जागरादिस्थानप्रयुक्तपुरुषदोषाः सम्भवन्ति उत नेति संशयः। **यः पृथिव्यां तिष्ठन्....य आत्मनि तिष्ठन्....यो रेतसि तिष्ठन्** इत्यादिना जीवस्यैव सर्वावस्थासु अवस्थितिवचनात् छन्दतोऽपि पूयशोणितादिमज्जनमपुरुषार्थं एवेति सर्वे दोषाः सम्भवन्तीति पूर्वः पक्षः। राद्धान्तस्तु—'**अपहतपाप्मा विजरः**' '**निरवद्यं निरञ्जनम्**' '**सत्यकामः सत्यसंकल्पः**' '**यः सर्वज्ञः सर्ववित्**' '**यो मामजमनादिश्च वेत्ति लोकमहेश्वरम्**' '**परः पराणां**

शेषतात्पर्यचन्द्रिका

**सकला न यत्र क्लेशादयः सन्ति परावरेशे**' इत्यादिश्रुतिस्मृतिभ्यो निरस्तनिखिलदोषगन्धतासर्वज्ञत्वसत्यसंकल्पाद्युभयलक्षणस्वरूपावगतेः परस्य ब्रह्मणः सर्वान्तर्यामितया अवस्थितस्यापि न दोषगन्धः संभवति । अपि तु एवं सर्वनियमनरूपलीलारस एवेति ॥

तन्न । अपहतपाप्मत्वादेर्भगवल्लिङ्गत्वेन समन्वयाध्याये बहुधोद्घोषितत्वेन पुनस्तेनैव सर्वस्थानस्थितस्यापि निर्दोषताया अनुक्तिसिद्ध्या संशयपूर्वपक्षयोरयोगात् । लीलया पूयशोणितमज्जनम् अनिष्टसाधनं दृष्टमेवेति विशेषाशङ्कया पूर्वपक्षो युक्त इति चेत् **आत्मनि चैवं विचित्राश्च हि** इति सूत्रोक्तविचित्रशक्त्यादिना तस्याः परिहारसंभवात् । अन्यथा अस्याश्च शङ्कायाः इह परिहारादर्शनात् अनुच्छित्तिरेव स्यात् । सूत्रोक्तपूर्वपक्षेणाधिकरणरचनसम्भवे तदनुक्तेन तदयोगाच्च ॥

'न स्थान' सूत्रव्याख्यापरीक्षा

अत एव—यतः सर्वत्र श्रुतिस्मृतिषु निरस्तनिखिलदोषतासमस्तकल्याणगुणात्मकतारूपोभयलिङ्गम्, उभयलक्षणं ब्रह्मावगतम् अतः परस्य ब्रह्मणः पृथिव्यादिस्थानतोऽपि दोषा न सन्तीति—प्रथमसूत्रव्याख्यानमयुक्तम्। दोषाभावे निर्दोषताश्रवणस्यैव हेतुत्वसंभवे उभयलिङ्गश्रवणस्य व्यर्थविशेषणत्वेन हेतुत्वानुपपत्तेः । सौत्रोभयपदस्वारस्यायोगाच्च । लिङ्गशब्दस्य लक्षणे प्रयोगाभावाच्च । दोषपदाध्याहारदोषाच्च ॥

'भेदादिति चेन्ने'ति सूत्रव्याख्यापरीक्षा

एतेन—तत्तत्स्थानावस्थितिरूपावस्थाभेदात् जीवस्येव दोषाः स्युरिति चेन्न । न दोषाः सम्भवन्ति **यः पृथिव्यां तिष्ठन्** इति प्रत्येकं प्रतिवाक्यम्

## शेषतात्पर्यचन्द्रिका

**एष त आत्मान्तर्याम्यमृतः** इति दोषाभाववचनात् इति—द्वितीयव्याख्यानञ्चायुक्तम्। **न स्थानतोऽपीति** तत्तत्स्थानावस्थित्या प्राप्तदोषशङ्कायाः **सर्वत्र हीति** हेतूपन्यासपूर्वकं परिहृतत्वेन पुनस्तथैव शङ्कानुदयात्। उदये वा **प्रत्येकमतद्वचनादिति** वचनेन परिहारायोगात्। सर्वत्र निर्दोषत्वोक्त्यानपगतशङ्कायाः एकदेशे तदुक्त्या परिहारस्य दुर्घटत्वात्। आद्यसूत्रवैयर्थ्याच्च। सौत्रभेदादिपदस्य दोषादौ प्रयोगाभावाच्च ॥

### 'अपि चैव' सूत्रव्याख्यापरीक्षा

एतेन—एवं जीवपरयोरेकदेहस्थितयोरपि जीवस्यापुरुषार्थं, परस्य तदभावं, नियमनरूपं दीप्तियोगं च **एके द्वा सुपर्णेत्यादिनाधीयत** इति—तृतीयव्याख्यानं निरस्तम्। **अतद्वचनादित्यत्र** प्रकृताभेदस्यैवेह एवंशब्देन मद्रीत्या परामर्शसंभवेनाप्रकृतस्य दीप्तियोगस्य, सम्भोगप्राप्त्यभावस्य च पूर्वसमर्थितस्यैवेह परामर्शायोगात् मद्रीत्यानन्तरूपत्वसूचनाभावेन चशब्दवैयर्थ्याच्च ॥

### 'अरूप' सूत्रव्याख्यापरीक्षा

ननु श्रौतमपि कर्मफलानशनं परस्य नोपपद्यते। विमतं ब्रह्म कर्मफलमश्नाति कर्मवश्यत्वात्, तत् कर्मवश्यं भवितुमर्हति नामरूपभाक्त्वात्, जीववत् इत्याद्यनुमानविरोधादिति। अत्रोच्यते अरूपवदेव हीति। मनुष्यादिशरीरेषु स्थित्वा नामरूपभाक्त्वेऽप्यरूपवदेव हि तत् परं ब्रह्म। कुतः? प्रधानत्वात् निर्वाहकत्वात्। जीवस्य नामरूपभाक्त्वेन कर्मफलाशनं निर्वोढुं परस्य तत्तच्छरीरत्वेनावस्थानम्। यथाह **'यस्य पृथिवी शरीरं' 'यस्यात्मा शरीरम्' 'य आत्मानमन्तरो यमयति' 'अन्तः प्रविष्टः शास्ता जनानाम्' 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता, ते यदन्तरा**

## शेषतात्पर्यचन्द्रिका

**तद्ब्रह्मे**'ति इति—चतुर्थं व्याख्यातम् । तदयुक्तम् । मद्रीत्या प्राकृतरूपराहित्यरूपमाहात्म्यस्य स्वातन्त्र्येण प्रतिपादकत्वसम्भवे गुणसूत्रोपात्तश्रुत्युक्तानशनसमर्थनपरत्वायोगात् । **प्रत्येकमतद्वचनादि**त्यनेनैव कर्मवश्यताप्रयोजकरूपभाक्त्वादिदोषाणामपि परिहृतत्वात्, पुनरिह शङ्कानुदयाच्च । उदये तु **ते यदन्तरा तद्ब्रह्मे**ति श्रुतं नामरूपराहित्यमेवानुपपन्नम्, **यस्य पृथिवी शरीरमि**त्यादौ श्रुतशरीरत्वात् इत्यादिशङ्कोदयसम्भवेनापर्यवसानापत्तिः । नामरूपभाक्त्वेन कर्मफलाशने शङ्किते हेतोरसिद्धिं वदता नाम्नः प्रथमोद्दिष्टस्यापरित्यागाय 'अनामवदेव हि तदि'ति सूत्रयितव्ये **अरूपवदेव** हीति सूत्रणायोगाच्च । **यस्य पृथिवी शरीरमि**त्यादौ शरीरित्वस्य श्रवणेन अरूपत्वाङ्गीकारे तद्विरोधस्य स्फुटत्वाच्च । शरीरितुल्यतैवोच्यत इति चेत् कया वृत्त्येति वदामः । गौण्येति चेन्न । माणवके सिंहत्वाभाव इव ब्रह्मणः शरीराभावप्राप्तौ **यदा पश्यः पश्यते रुक्मवर्णम्** इत्यादिश्रुतिविरोधात् । पितुर्नामरूपवत्प्रजानिर्वाहकत्वेन प्राधान्येऽप्यरूपवत्त्वाभावेन व्यभिचाराच्च । नामरूपभाक्त्वेन तत्तच्छरीरित्वेनावस्थानं हेतुरिति चेन्न । अप्रयोजकत्वात् । रूपित्वेनैव व्याप्त्या विरुद्धत्वाच्च ॥

'प्रकाशवच्चावैयर्थ्यादि'ति सूत्रव्याख्यापरीक्षा

**सत्यं ज्ञानमनन्तं ब्रह्मे**ति प्रकाशैकस्वरूपता ब्रह्मण उच्यते, कथमुभयलिङ्गत्वमिति पञ्चममवतार्य यथा **सत्यं ज्ञानमनन्तमि**ति वाक्यावैयर्थ्यात् प्रकाशो ब्रह्मणः स्वरूपमित्यवगम्यते तथा '**यः सर्वज्ञः सर्ववित्**' '**परास्य शक्तिर्विविधैव श्रूयते**' इत्यादिवाक्यावैयर्थ्यात् कल्याणगुणाकरत्वं च ब्रह्मणः स्वरूपमित्यवगम्यत इत्युभयलिङ्गमेवेति व्याख्यातं—तदप्ययुक्तम् ।

## शेषतात्पर्यचन्द्रिका

सत्यज्ञानादिवाक्ये प्रकाशैकस्वरूपतायाः अप्रतीतेः फल्गुशङ्कया सूत्रावतारायोगात् । तत्प्रतीतावपि **यदि रथन्तरसामा सोमः स्यादित्यादौ** स्वविरोधिबृहत्सामव्यावर्तकत्वेऽपि गायत्रादिसामान्तरव्यावर्तकत्वाभाववत् ज्ञानादिविशेषणस्यापि स्वविरोध्यज्ञानादिव्यावर्तकत्वेन तदविरुद्धकल्याणगुणाकरत्वसार्वज्ञाद्यव्यावर्तकत्वसंभवेनोभयलिङ्गत्वविरोधाभावाच्च । आद्यसूत्रव्याख्यानविरोधाच्च । तत्र हि कल्याणगुणाकरत्वं विदोषत्वं चेत्युभयलिङ्गं व्याख्यातम् । गुणेष्वेव द्वैविध्यापादकावच्छेदकादर्शनाच्च । अत एव सत्यज्ञानादिवाक्ये ज्ञानाद्येकस्वभावावगमात् निर्दोषत्वांशोऽनुपपन्न इत्युभयलिङ्गत्वमयुक्तमित्यवतार्य व्याख्यास्यत इति निरस्तम् । सत्यज्ञानादिवाक्य एवानन्तपदेन विनाशोपलक्षिताशेषदोषराहित्योक्तेः प्रकाशैकस्वरूपत्वावगमस्यासिद्धेः । यथा सत्यज्ञानादिवाक्यावैयर्थ्यात् तदात्मकत्वं तथा **निरनिष्टो निरवद्यः** इत्यादिवाक्यावैयर्थ्यात् निर्दोषत्वमप्यवगन्तव्यम् इति व्याख्यानेन निर्दोषत्वांशमनङ्गीकुर्वाणस्य शङ्कायाः परिहारेऽप्यनेन परिहारायोगाच्च । अरूपोक्त्या **यदा पश्यः पश्यते रुक्मवर्णम्** इत्यादिश्रुतीनामप्रामाण्यरूपवैयर्थ्याशङ्कायाः अवश्यपरिहरणीयत्वेन प्रथमान्तपाठस्यैव सम्प्रदायागतत्वेन च युक्ततया पञ्चम्यन्तमपपाठं कल्पयित्वा पूर्वोक्तिबलादायातावश्यापरिहरणीयशङ्कापरिहारपरत्वेन व्याख्यानायोगाच्च ॥

'आह च' सूत्रव्याख्यापरीक्षा

अत एव — सत्यज्ञानादिवाक्यं ब्रह्मणः ज्ञानं स्वरूपमित्येतावन्मात्रमाह, न पुनः कल्याणगुणाकरत्वं निषेधतीति **आह च तन्मात्रम्** इत्यस्य व्याख्यानं — निरस्तम् । उद्देशानुसारेणाद्यसूत्रव्याख्यानुसारेण च सत्त्वं ब्रह्मण

शेषतात्पर्यचन्द्रिका

स्वरूपमित्येतावन्मात्रमाह, न पुनः निर्दोषत्वं निषेधतीति व्याख्यानस्योचितत्वेन तदुल्लङ्घ्य व्याख्यानायोगात् । ज्ञानादिगुणात्मकत्वोक्त्या गुणगुणिनोर्भेदस्य निराकृतत्वात् तद्धर्मं कल्याणगुणाकरत्वं शङ्कितमत्र समाधीयत इति चेन्न । प्रकृतानुपयोगात् । भेदसाधनाभावेन शङ्काया असमाहितत्वाच्च । भेदानङ्गीकारेण समाधाने त्वन्मते मन्मत इव भेदप्रतिनिधिविशेषानङ्गीकारेणोपायाभावाच्च । भेदाङ्गीकारे तु भेदाभेदयोः एकत्र विरोधः, सत्यज्ञानादिवाक्ये ज्ञानाद्यात्मकत्वोक्तिविरोधः, **एवं धर्मान् पृथक्पश्यन्** इति भेददर्शननिन्दावचनविरोधश्च स्यात् । किञ्च गुणगुणिनोर्भेदः भेदिभ्यां गुणगुणिभ्यां भिन्नश्चेत् सोऽप्येवं, सोऽप्येवमित्यनवस्थाऽऽपातः । अभिन्नश्चेत् किमपराद्धं गुणेन ? **आनन्दं ब्रह्मणः** इति व्यवहारोऽस्तीति चेत् किन्नास्ति 'तस्य भेदः' 'भिन्नः' इति व्यवहारः ?

'दर्शयति' सूत्रव्याख्यापरीक्षा

**'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।' 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् ।' 'यो मामजमनादिञ्च' 'अहं कृत्स्नस्य जगतः'** इत्यादिश्रुतिस्मृती निरस्तनिखिलदोषतां कल्याणगुणाकरत्वञ्च भगवतो दर्शयत इति **दर्शयति चाथो अपि स्मर्यते** इति सूत्रव्याख्यानम् आद्यसूत्रेणैव गतार्थमित्युपेक्षणीयम् । ज्ञानाद्यात्मकं कल्याणगुणाकरं चेति पूर्वसूत्रे प्रकृतप्रमेयद्वये प्रमाणोपन्यासस्य युक्तत्वेऽप्यर्थान्तरे तदयोगाच्च ॥

'अत एव' 'अम्बु' 'वृद्धि' सूत्राणां व्याख्यापरीक्षा

एतेन—यतो ब्रह्म निर्दोषं कल्याणगुणाकरञ्च अत एव शास्त्रेषु जलसूर्यकादिवदिति उपमा क्रियते,

शेषतात्पर्यचन्द्रिका

आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथाऽऽत्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥

इत्यादिषु, अन्यथा नोपमा क्रियत इति अत एव चोपमेति सूत्रार्थे स्थिते, विषमोऽयं दृष्टान्तः, सूर्यस्याम्बुनि स्थित्यभावात् ब्रह्मणश्च पृथिव्यादिस्थानेषु स्थितत्वात् । अत एव ब्रह्मणः दोषासंस्पर्शे सूर्यस्याम्ब्वादावनवस्थितस्य दृष्टान्तत्वं नोपपद्यत इति तदनन्तरसूत्रेण शङ्किते, अन्तर्भावात् पृथिव्यादिस्थानेषु अन्तर्गतत्वात् यत् वृद्धिह्रासभाक्त्वं प्रसक्तं तदेव सूर्यकादिदृष्टान्तेन निवार्यते । एवमङ्गीकार एव उभयसामञ्जस्यात् । उपाधिषु घटजलादिषु स्थितास्थितयोः आकाशसूर्ययोरुभयोः सामञ्जस्यं भवति । अन्यथा तत्सादृश्यासंभवात् । सिंहो माणवक इत्यादौ विवक्षितेन क्रौर्यादिना सादृश्येन सिंहस्य दृष्टान्तत्वदर्शनात् । अन्यथा तत्रापि यावत्सादृश्याभावेन दृष्टान्तत्वानुपपत्तिरिति **वृद्धिह्रासभाक्त्वमि**ति सूत्रस्यार्थ इति त्रिसूत्रीयोजनं—निरस्तम् । अत्र आद्ये बिम्बभूतः सूर्य एव दृष्टान्तीक्रियते उत प्रतिबिम्बभूतः? नाद्यः । अनेकस्थानस्थित्या प्रसक्तो हि वृद्धिह्रासादिदोषो नास्तीत्यत्र दृष्टान्त उपादीयते । न बिम्बभूतसूर्ये अनेकस्थानस्थित्या वृद्धिह्रासादिदोषप्रसक्तिरस्ति । वियद्गतस्य सूर्यस्य जलाद्यवस्थित्यभावात् । किन्तु वस्तुस्वाभाव्यादेव वृद्धिह्रासादिदोषाप्रसक्तिः । न च तथाविधोऽत्र दृष्टान्तो भवितुमर्हति । तथा सत्यनादिनित्यमात्रस्य दृष्टान्तत्वापत्तिः । **जलाधारेष्विवांशुमानि**ति जलाधारकीर्तनानुपपत्तेश्च । कप्रत्ययास्वारस्याच्च । अत एवाकाशसूर्योभयदृष्टान्तोपादानस्यान्यथा सामञ्जस्यासंभवेन वृद्धिह्रासभाक्त्वं निवर्त्यत इति ज्ञायत इति समाधानञ्चानुपपन्नम् । प्रसक्त्यभावात् । अध्याहारप्रसङ्गाच्च । यो हि

## शेषतात्पर्यचन्द्रिका

दुःखकारणसंबन्धवानप्यग्निस्तम्भादिविद्यया न दुःखमनुभुङ्क्ते दह्यमानगृहान्तर्गतः पुरुषः तथाविध एवात्र दृष्टान्तो गवेषणीयः। न तु राजादिवत् दुःखकारणसम्बन्धशून्यः। अन्यथा स्वत एव वृद्धिह्रासवन्तो घटादयः स्थानादिप्रयुक्तवृद्धिह्रासशून्या एवेति तेषामपि दृष्टान्तत्वं स्यात्। न द्वितीयः। जलवृद्ध्यादिना प्रतिबिम्बस्य वृद्धिह्रासभाक्त्वदर्शनेन तद्दृष्टान्तेन ब्रह्मणः निर्दोषत्वसाधनानुपपत्तेः। **अम्बुवदग्रहणा**दित्यादिचोद्यस्य वृद्धिह्रासभाक्त्वमात्रं निवर्त्यत इति समाधानस्य च सौत्रस्यानुपपत्तेश्च ॥

'प्रकृतैतावत्त्व' सूत्रव्याख्यापरीक्षा

**अथात आदेशो नेति नेती**त्यादिना पूर्वप्रकृतस्य मूर्तामूर्तप्रपञ्चस्य ब्रह्मणो रूपत्वप्रतिषेधात् निष्प्रपञ्चसन्मात्रमेव ब्रह्म न पुनरुक्तरूपमुभयलिङ्गमित्याशङ्क्य, नात्र प्रपञ्चस्य ब्रह्मरूपत्वप्रतिषेधः, **द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं** चेत्यादिना स्थूलस्य सूक्ष्मस्य च प्रपञ्चस्य ब्रह्मणो रूपतया प्रमाणान्तराप्रज्ञातस्यात्रैव रूपतया उपदिष्टस्य निषेधासंभवात्। किन्तु प्रकृतैतावत्त्वं ब्रह्मणः प्रतिषेधति, प्रकृतैतावन्मात्रं न भवति ब्रह्मेति **अथात आदेशो नेति नेती**त्यत्र प्रतिपाद्यत इत्यर्थः; ततो ब्रवीति च भूयः, ततः पूर्वोक्तात् भूयस्त्वम् **न ह्येतस्मादिति नेत्यन्यत्परमस्ति अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्** इति वाक्यशेषो ब्रवीतीति चोत्तरखण्डस्यार्थ इति—**प्रकृतैतावत्त्वमि**त्यस्य गुणसूत्रतामभ्युपेत्य व्याख्यानन्तु अनादरणीयम्। स्थितेः अनुषङ्गतः सिद्धेः सृष्टिसंहारकर्तृत्वमेवास्य, न पालकत्वमिति प्रबलशङ्कानिरासपूर्वकं पालकत्वमहिम्नोऽवश्यं समर्थनीयस्य

शेषतात्पर्यचन्द्रिका

समर्थनपरतया प्रवृत्तस्य गुणसूत्रत्वायोगात् । यः सर्वज्ञः सर्ववित् इत्यादि-श्रुत्यवैयर्थ्यात् कल्याणगुणाकरत्वं च ब्रह्मणोऽवगन्तव्यमिति **प्रकाशवच्चा-वैयर्थ्यात्** इत्यत्रैवोक्तत्वेनेह पुनः शङ्कानुदयाच्च । कथञ्चिदुदये वैतत्समाधानेनैव तत्रापि शङ्कापरिहारसंभवेन प्रकाशवच्चावैयर्थ्यादितिसूत्रानर्थक्यपरिहारायोगाच्च॥

'तदव्यक्त' सूत्रव्याख्यापरीक्षा

ननु वस्तुतः प्रत्यक्षेण निर्विशेषसन्मात्रमेव गृह्यते । तदतिरिक्तं भ्रान्त्या प्रतीयमानं सविशेषरूपम् अनूद्य **नेति नेति** इति निषिध्यत इति किं न स्यादित्यतः ब्रह्मणः प्रमाणान्तराप्रज्ञाततां द्रढयतीति—**तदव्यक्तमाह हीति** सूत्रव्याख्यानमयुक्तम् । निर्विशेषस्य ब्रह्मणः स्थूलसूक्ष्मादिप्रपञ्चस्य च प्रत्यक्षवेद्यत्वेऽपि तयोर्नियम्यनियामकभावलक्षणसम्बन्धस्य प्रमाणान्तरा-गोचरस्यानुवाद्यत्वासंभवेन दुर्बलशङ्कया सूत्रावतारायोगात् ॥

'अपि संराधन' सूत्रव्याख्यापरीक्षा

अपि च ब्रह्म संराधन एवोपलभ्यते नान्यथेत्यस्ति तावन्नियमः । संराधनं च सम्यक्प्रीतिकरं प्रीतियुक्तं भजनम् । उपासनमिति यावत् । तस्मिन् सत्येव ब्रह्मोपलभ्यते, प्रत्यक्षानुमानशब्दगृहीताभ्यां **'नायमात्मा प्रवचनेन लभ्यः' 'नाहं वेदैर्न तपसे'**त्यादिश्रुतिस्मृतिभ्याम् । अतो निदिध्यासनाय ब्रह्मस्वरूपमुपदिशत् **द्वे वाव ब्रह्मणः** इत्यादिशास्त्रं मूर्तामूर्तरूपद्वयादि-विशिष्टतां प्रागसिद्धां नानुवदितुं क्षममिति प्रकृतैतावत्त्वसूत्रोक्तप्रमेये युक्त्यन्तरोपन्यासपरत्वेन **अपि संराधने प्रत्यक्षानुमानाभ्याम्** इति सूत्रं व्याख्यातम् । तदप्ययुक्तम् । युक्त्यन्तरसूचकशब्दाभावात् । अपिस्तु

शेषतात्पर्यचन्द्रिका

संराधनेऽप्यव्यक्तमिति योजनया कृतार्थः। पूर्वस्मादव्यक्तमित्यनुकर्षसम्भवे 'उपलभ्यत' इत्यध्याहारस्यायोगाच्च।

न तमाराधयित्वापि कश्चिद्व्यक्तीकरिष्यति।
नित्याव्यक्तो यतो देवः परमात्मा सनातनः॥

इत्यादिवचनविरोधाच्च। प्रत्यक्षानुमानशब्दयोः प्रसिद्धप्रमाणद्वयपरत्वसम्भवे श्रुतिस्मृतिपरत्वायोगाच्च॥

'प्रकाशादिवच्च' सूत्रव्याख्यापरीक्षा

इतश्च प्रकृतैतावत्त्वमेव प्रतिषेधति। येषां संराधनरूपे कर्मण्यभ्यासात्, आवर्तनात्, पुनःपुनः भजनादिति यावत्, प्रकाशश्च भगवत्साक्षात्कारो जातः तेषामेव वामदेवादीनां दर्शने प्रकाशादिवत् ज्ञानानन्दादेरिव जगदैश्वर्यस्यापि अवैशेष्यं प्रतीयते, जगदैश्वर्यस्य भगवद्गुणत्वे विशेषाभावः प्रतीयते, **तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे** इत्यादौ—इत्युपान्त्यस्य व्याख्यानन्तु बह्वध्याहारप्रसङ्गेन, अपपाठायातादिशब्दोपक्षेपेण संप्रदायपरम्पराप्राप्तपृथक्सूत्रत्वभङ्गेन, व्यवधानायोगेन च दुष्टमित्युपेक्षणीयम्॥

'अतोऽनन्तेन' सूत्रव्याख्यापरीक्षा

तस्मात् अनन्तेन कल्याणगुणगणेन योगो ब्रह्मणः सिद्धः। तथा हि तथा च, लिङ्गम् उभयलिङ्गमेव ब्रह्म—इत्युपसंहारपरतया अन्तिमव्याख्यानन्तु उक्तब्रह्मणः उभयलिङ्गत्वमुपसंहरतीत्यवतारिकया वैयर्थ्यमङ्गीकृतमेवेति सत्यां

## शेषतात्पर्यचन्द्रिका

गतौ अगतिकस्योपसंहारपरत्वस्यायोगादयुक्तम् । बह्वध्याहारप्रसङ्गाच्च । ततश्च तथा हीत्यस्य तथा चेति, लिङ्गमित्यस्य उभयलिङ्गमिति व्याख्यानस्य च क्वाप्यदर्शनेन व्याख्यानकौशलमायुष्मताम् ॥

सूत्रक्रमायोगः

प्रथमे साधकोक्तिः । द्वितीये बाधकोद्धारः । तृतीये पुनः साधकोक्तिः । अत एव चेत्युपष्टम्भकोक्तिः । प्रकृतैतावत्त्वमिति पुनर्बाधकोद्धारः । प्रकाशवच्चेति पुनः साधकोक्तिरिति क्रमोऽप्यनुपपन्न इति ॥

परकीयव्याख्यापरीक्षोपसंहारः

एवं परकीयव्याख्यानस्य सङ्गतिक्रमप्रयोजनादिशून्यत्वात् अपपाठादिना सम्प्रदायविरोधाच्च एवंजातीयकदोषगन्धविधुरम् एषां सूत्राणामाचार्यादिकृतमनेकाधिकरणात्मकमेव व्याख्यानं शिरसा वहनीयमिति सिद्धम् ॥

टीकायां पूर्वपक्षन्यायविवरणव्याख्यानम्

टीकाक्षरार्थस्तु—**गुणसाम्यमयोगश्चेति** गुणसाम्यन्यायं साधनपरतया साध्यपरतया च विवृण्वत् **न च मुक्तत्वादिगुणसाम्यात् ब्रह्मादीनां भक्त्यादिगुणसाम्यम्** इति वाक्यं यवागून्यायेन अर्थक्रमस्य प्राबल्यात् उत्तरार्धयोजनानन्तरं पूर्वार्धो योजनीय इत्यभिप्रेत्य व्याचष्टे **एकप्रकारैवेति पूर्वपक्ष** इत्यादिना । **न च भक्तिरेव विषयः** इति टीकायाः भक्त्यादिगुणसाम्यमिति विवरणेन विरोधः शङ्कनीयः । आदिशब्दगृहीतानां ज्ञाना-

शेषतात्पर्यचन्द्रिका

दीनां दृष्टान्ततोपपत्तेरित्युक्तत्वात् । अत एव विवरणे **यथा यथाधिकारो विशिष्यते एवं ज्ञानं भक्तिर्बलञ्च विशिष्यते** इति श्रुत्यनुसारेण ज्ञानादिगुणसाम्यमिति वक्तव्ये भक्त्यादीत्युक्तम् । अत्र हेतुसाध्ययोः व्याप्यव्यापकभावस्फोरणाय न चेत्यतः परं **तत्फल**शब्दाध्याहारेण पूर्वार्धो योज्य इति भावेन व्याचष्टे **तत्फलस्येति** । सौत्रो**भयसामञ्जस्य**पदसूचिततर्कफलप्रदर्शनेन फलसाम्यहेतोरप्रयोजकतां निराचष्टे **अन्यथा फलसाम्येऽपीति** ॥

टीकायां सिद्धान्तन्यायविवरणभाष्ययोः व्याख्यानम्

**विशेषदृष्टिवाक्ये चेति** न्यायमालोक्तविशेषदृष्टिन्यायं तदाकारप्रदर्शनपूर्वकं विवृण्वत् '**यथा यथाधिकारो विशिष्यते एवं ज्ञानं भक्तिर्बलं च विशिष्यते मुक्तावानन्दः एते च गुणा विशिष्यन्ते अत आहुः ब्रह्मणे मुक्ता बलिं हरन्ती**'त्यादि **विशेषदृष्टेः** इति वाक्यं यथायथेत्यादि विशेषश्रुतेः, यथायथेत्यादि यथा भवति तथा मुक्तब्रह्मणे बलिहरणादिविशेषोपलम्भादित्यपि सूत्रस्थं **दर्शनादि**तिपदं व्याख्येयमिति सूचयतीत्यभिप्रेत्य भाष्येण सह व्याचष्टे **ननु भवेदेतद्यदीत्यादिना** । नन्वेवं चशब्दो व्यर्थ इत्यतः तत्संगृहीतस्मृतिविशेषोदाहरणस्य व्यावर्त्याशङ्कामुद्भावयति **अस्तु फलतारतम्यमिति** । अत्र यद्यपि न्यायविवरणसूचिते दर्शनादित्यंशयोजनाद्वये **यथा यथाधिकारो विशिष्यते** इति विशेषवाक्यस्यापि ग्रहणान्न शङ्कोत्पत्तुमर्हति । तथापि सुखविशेषस्य दर्शनादिति भाष्यसूचितयोजनान्तरे तदुत्पत्तिसम्भव इति ध्येयम् ॥

## शेषतात्पर्यचन्द्रिका

### सौत्रचशब्दरार्थक्यम

नन्वत्र भाष्ये **अथात आनन्दस्ये**त्यादिश्रुत्युदाहरणात् विवरणे **यथा यथाधिकारो विशिष्यते** इत्यादिश्रुत्युदारणं व्यर्थम् । सामान्यविशेषवाक्यरूपतया वैयर्थ्यपरिहारेऽपि **यथा भक्तिविशेषो**ऽस्तीत्यादिविशेषस्मृत्युदाहरणं व्यर्थम् । अत एव तत्सङ्ग्रहाय सूत्रे **च**शब्दोऽपि व्यर्थ इति चेन्न । अपौरुषेयाणां **दर्शनात्** इत्यनेन सङ्ग्रहेऽपि पौरुषेयवाक्यसङ्ग्रहार्थं चशब्दग्रहणसम्भवात् । यद्वा **दर्शनादि**त्यनेन भाष्योदाहृतसामान्यश्रुतिरेव सङ्गृह्यते । न तु विवरणोदाहृतविशेषश्रुतिः । तथा च न शङ्कोत्पत्त्यनुपपत्तिः । ननु **यथा यथे**त्यादिश्रुत्युदाहरणं विवरणगतं चशब्दव्याख्यानरूपं चेत् **चशब्दात् स्मृतिरि**ति भाष्यविरोध इति चेन्न । स्मरणसूचकस्य विशेषश्रुतिसूचकत्वस्याप्युपपत्तेः । स्मर्यतेऽनयेति व्युत्पत्त्या भाष्यस्थस्मृतिशब्दस्य विशेषश्रुतिपरत्वस्याप्युपपत्तेश्च । तथा च विशेषवाक्यसङ्ग्रहाय उपात्तः सौत्रश्चशब्दो न व्यर्थः । विशेषवाक्यं च विवरणोक्तमपौरुषेयं, भाष्योक्तं तु पौरुषेयमिति विवेक्तव्यम् ॥

### अनुव्याख्यानोक्तसिद्धान्तन्याययोजनम्

एतेन न्यायमालायां **विशेषदृष्टि**न्यायः सुखविशेषोपलम्भः विशेषश्रुतिश्चेति भाष्यविवरणाभ्यां द्वेधा व्याख्यातः । यद्वा **विशेषदृष्टिवाक्ये चेति** विशेषदृष्टिः विशेषवाक्यं चेति व्याख्यानेन न्यायद्वयमप्येतदधिकरणसङ्गतम् । तत्राद्यो **विशेषोपलम्भरूपो** न्यायः **दर्शनात्** इत्यनेन सङ्गृहीतो भाष्ये

## शेषतात्पर्यचन्द्रिका

विवृतः । द्वितीयो विशेषार्थपरः विशेषपदघटितो वा विशेषवाक्यरूपो न्यायः चशब्दसङ्गृहीतो भाष्यविवरणाभ्यां विवृत इति न किञ्चिदनुपपन्नम् ॥

सिद्धान्तन्यायविवरणोदाहृतश्रुत्यर्थः

तथा च यथा यथाधिकारो विशिष्यते उत्कृष्टो भवति, एवं तथा तथा, अधिकारानुसारेणेति यावत् , ज्ञानं भक्तिर्बलं मौक्तिकानन्दश्च विशिष्यते। एवं भक्त्यनुसारेणैव, एते च गुणाः ज्ञानबलमौक्तिकानन्दाश्च विशिष्यन्ते । यत एवं भक्तिरेव मौक्तिकानन्दस्य ज्ञानादिगुणानां च प्रयोजिका, यतः चतुर्मुखस्य सर्वोत्कृष्टभक्तिः श्रूयते ज्ञानादयश्च अत एव मुक्ताय चतुर्मुखाय इतरे मुक्ताः बलिं हरन्तीत्याहुर्वेदाः, अन्यथा तन्न स्यादिति विवरणोदाहृतश्रुत्यर्थः । तेन ज्ञानादितत्तद्गुणानां तारतम्यं भक्तितारतम्यायत्तमेवेति तदभावे फले तारतम्यस्याकस्मिकत्वापत्तेरिति षष्ठ्यर्थः ॥

एतदधिकरणफलम्

अत्र मुक्तौ संसारे च साम्यमिति मतनिरास ऐक्यनिरासश्च फलं बोध्यम् ॥

संक्षेपभाष्ये एतदधिकरणतात्पर्यकथनम्

**तद्भक्तितारतम्येन तारतम्यं विमुक्तिदम्** इति संक्षेपभाष्यं भगवद्भक्तितारतम्येन अधिकारतारतम्यं विमुक्तिदम् तारतम्योपेतमुक्तिसाधनमिति योजनयास्याप्यधिकरणस्य तात्पर्यकथनपरं व्याख्येयम् ॥

**इति वृद्धिह्रासाधिकरणम् ॥ १२ ॥**